रिपुगणकटकजलनिधिमथनमन्दरायमाणसमुद्दण्डभुजदण्डः, पुरंदरपुराङ्गणवनविहरणपरायणगीर्वाणतरुणगणिकागणजेगीयमानयाऽतिमानया शरदिन्दुकुन्दघनसारनीहारहारमृणालमरालसुरगजनीरक्षीरगिरिशाट्टहासकैलासकाशनीकाशमूर्त्या रचितदिगन्तरालपूर्त्या कीर्त्याऽभितः सुरभितः, स्वर्लोकशिखरोरुरुचिररत्नरत्नाकरवेलामेखलावलयितधरणीरमणीसौभाग्यभोगभाग्यवान्, अनवरतयागदक्षिणारक्षितशिष्टविशिष्टविद्यासंभारभासुरभूसुरनिकरः, विरचितारातिसंतापेन प्रतापेन सतततुलितवियन्मध्यहंसः, राजहंसो नाम घनदर्पकंदर्पसौन्दर्यसौदर्यहृद्यनिरवद्यरूपो भूपो बभूव। तस्य वसुमती नाम सुमती लीलावतीकुलशेखरमणी रमणी बभूव। रोषेणेक्षणेन निटिलेक्षणेन

एतादृशः यः सकलाश्च ते रिपवश्च तेषां गणस्तस्य कटकं तदेव जलनिधिस्तस्य मथने मन्दर इवाचरन्समुद्दण्डो भुजदण्डो यस्य सः। भटा योद्धारः। पटलं समूहः। कटकं सेना। **पुरंदरेति**। पुरंदर इन्द्रः तस्य पुरस्य अङ्गणानि चत्वराणि तत्संबन्धीनि वनानि तेषु विहरणपरायणः यो गीर्वाणतरुणगणिकानां वेश्यानामप्सरसामित्यर्थः गणस्तेन जेगीयमानया भृशं पुनः पुनर्वा कीर्त्यमानया। अतिमानयाऽतिप्रमाणया। विस्तृतयेति यावत्। **शरदिन्द्विति**। कुन्दं पुष्पविशेषः। 'कर्पूरो हिमवालुका। घनसारः' इति हैमः। नीहारो हिमम्। मृणालं बिसम्। मरालो हंसः। सुरगज ऐरावतः। गिरिशस्य शिवस्याट्टहासो महान्हासः। काशस्तृणपुष्पभेदः। शरदिन्दुश्च कुन्दं चेत्यादिः काशान्तो द्वन्द्वः। तैः सदृशी तन्नीकाशा। नित्यसमासः। मूर्तिर्यस्यास्तया। रचिता कृता दिशामन्तरालं दिगन्तरालं तस्य पूर्तिः दिगन्तरालपूर्तिर्यया। सुरभितो मनोज्ञः। **स्वर्लोकेति**। स्वर्लोकः सुरालयो मेरुस्तस्य शिखरं तदुद्भवतत्संबन्धीनि वा उरूणि स्थूलानि रुचिराणि सुन्दराणि च यानि रत्नानि तेषां तद्युक्तो वा यो रत्नाकरस्तस्य वेला जलवृद्धेर्मर्यादा सैव मेखला काञ्ची तया वलयिता या धरणी सैव रमणी। अनवरता नित्याः। यागा यज्ञाः। तेषु या दक्षिणा तया रक्षितः शिष्टाश्च ते विशिष्टविद्यासंभारेण भासुरा देदीप्यमानाः भुवो भुवि वा सुरा इव भूसुराः ब्राह्मणाः। तेषां निकरो वृन्दं येन। विरचितोऽरातिसंतापो येन। रिपुदत्तसंताप इत्यर्थः। वियत आकाशस्य मध्ये हंसः सूर्यः। घनः दर्पोऽवलेपः यस्य तादृशो कंदर्पो मन्मथः तस्य सौन्दर्यस्य सोदर्यं (सोदर्यो बन्धुः समानोदर्यः। अत्र।) सदृशम्। हृद्यं मनोहरं निरवद्यं निर्दोषं च रूपं यस्य। लीलावत्यो योषितस्तासां कुलं तस्य शेखरमणिर्भूषणमवतंसः। **रोषणेति**। रोषणमीक्षणं नेत्रं यस्य तेन। क्रोधताम्रदृशेत्यर्थः। निटिले भालस्थले ईक्षणं नयनं यस्येति निटिलेक्षणः शिवः तेन। मकरकेतनो

१ भुजदण्डमण्डनः. २ गणिकाजनगीयमानया. ३ परिचित. ४ मेखलायित. ५ वसुमतीव. ६ रोषरूक्षेण निटिलाक्षेण.

भस्मीकृतचेतने मकरकेतने तदा मयेनानवद्या वनितेति मत्वा, तस्या रोलम्बावली केशजालम्, प्रेमाकरो रजनीकरो विजितारविन्दं वदनम्, जयध्वजायमानो मीनो जायायुतोऽक्षियुगलम्, सकलसैनिकाङ्गवीरो मलयसमीरो निःश्वासः, पथिकहृद्दलनकरवालः प्रवालश्चाधरबिम्बम्, जयशङ्खो बन्धुरा लावण्यधरा कंधरा, पूर्णकुम्भौ चक्रवाकानुकारौ पयोधरौ, ज्यायमाने मार्दवासमाने बिसलते च बाहू, ईषत्फुल्ललीलावतंसकह्लारकोरको गङ्गावर्तसनाभिर्नाभिः, दूरीकृतयोगिमनोरथो जैत्ररथोऽतिघनं जघनम्, जयस्तम्भभूते सौन्दर्यभूत विघ्नितयतिजनारम्भे रम्भे चोरुयुगम्, आतपत्रसहस्रपत्रं पादद्वयम्, अस्त्रभूतानि प्रसूनानि तानीतराण्यङ्गानि च समभूवन्निव । विजितामरपुरे पुष्पपुरे निवसता साऽनन्तभोगलालिता वसुमती वसुमतीव मगधराजेन यथासुखमन्वभावि ।

तस्य राज्ञः परमविधेया धर्मपालपद्मोद्भवसितवर्मनामधेया धीराधिषणावधीरितविबुधाचार्यविचार्यकार्यसाहित्याः कुलामात्यास्त्रयोऽभूवन् ।

मन्मथः । अनवद्या निर्दोषा । **रोलम्बेति** । रोलम्बावली भ्रमरपङ्क्तिः । अर्थात्कामस्य मौर्वीस्थिता । तस्याः केशजालं समभूत् । एवं सर्वत्र । प्रेम्ण आकरः खनिः । विजितारविन्दं विजितं कान्त्या तिरस्कृतमरविन्दं कमलं येन तत् । जयध्वज इवाचरति जयध्वजे तिष्ठति वा जयध्वजायते । जायायुतः पत्नीसहितः । अक्षियुगलमक्ष्णोर्द्वयम् । अङ्गवीरः प्रधानयोधः । मलयसमीरो दक्षिणानिलः । पथिकाः प्रोषिताः पान्थाः तेषां हृदयस्य यद्दलनं पाटनं तस्मिन्करवालः कृपाणः । प्रवालः किसलयः । बन्धुरोन्नतानता । कंधरा ग्रीवा । ज्यायमाने ज्येवाचरन्त्यौ । मार्दवे मृदुत्वेऽसमाने । कह्लारं कमलं तस्य कोरकः कुड्मलः । गङ्गाया आवर्तोऽम्भसां भ्रमः । तस्य सनाभिः सदृशा । दूरीकृता अपनीता योगिजनानां मनोरथा येनेति । जैत्रो जयनशीलः । रथो लक्षणया रथचक्रम् । **जयस्तम्भेति** । आरम्भाः कर्माणि । आरभ्यन्त इत्यारम्भाः । रम्भे कदली । ऊर्वोर्युगमूरूयुगम् । **आतपत्रेति** । आतपात्त्रायते तदातपत्रं छत्रं तद्रूपं यत्सहस्रपत्रं कमलं तत् । प्रसूनानि पुष्पाणि । तदुक्तम्—'अरविन्दमशोकं च चूतं च नवमल्लिका । नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः' इति । **विजितेति** । विजितं स्ववैभवेन तिरस्कृतममरपुरमिन्द्रनगरी येन तस्मिन् । अनन्ताश्च ते भोगाश्च तैः लालिता । पक्षे अनन्तस्य शेषस्य भोगः शरीरं तेन लालिता उपरिधारणेन । अन्वभावि अनुपूर्वकात् 'भू सत्तायाम्' इति धातोः कर्मणि लुङ् । **तस्येति** । परमं विधेया विनयग्राहिणः । धीरा प्रगल्भा या धिषणा बुद्धिस्तया अवधीरितं विबुधाचार्यः सुरगुरुर्गुरुस्तस्यापि विचार्यं विचारार्हं कार्यसाहित्यं यैस्ते । अतीव पटु-

१ तस्य. २ पथिकहृद्दलनः करवालप्रवालः. ३ अतः परं 'भ्रुकुटी' इत्य० क्वचित्.

तेषां सितवर्मणः सुमतिसत्यवर्माणौ, धर्मपालस्य सुमन्त्रसुमित्रकामपालाः, पद्मोद्भवस्य सुश्रुतरत्नोद्भवाविति तनयाः समभूवन्[1] । तेषु धर्मशीलः सत्यवर्मा संसारासारतां बुद्ध्वा तीर्थयात्राभिलाषी देशान्तरमगमत् । विटनटवारनारीपरायणो दुर्विनीतः कामपालो जनकाग्रजन्मनोः शासनमतिक्रम्य भुवं बभ्राम । रत्नोद्भवोऽपि वाणिज्यनिपुणतया पारावारतरणमकरोत् । इतरे मन्त्रिसूनवः पुरंदरपुरातिथिषु पितृषु यथापूर्वमन्वतिष्ठन् ।

ततः कदाचिन्नानाविधमहदायुधनैपुण्यरचितागण्यजन्यराजन्यमौलिपालिनिहितनिशितसायको मगधनायको मालवेश्वरं प्रत्यग्रसंग्रामघस्मरं समुत्कटमानसारं मानसारं प्रति सहेलं[2] न्यक्कृतजलधिनिर्घोषाहंकारेण भेरीझांकारेण हठिकाकर्णनाक्रान्तभयचण्डिमानं दिग्दन्तावलवलयं विघूर्णयन्निजभरनमन्मेदिनीभरेणायस्त[3]भुजगराजमस्तकबलेन

बुद्ध्वय इति भावः । कुलामात्या वंशक्रमागताः । धर्मशीलो धार्मिकः । असारतां फल्गुताम् । अध्रुवत्वमित्यर्थः । अन्यो देशो देशान्तरम् । वारस्य वृन्दस्य नार्याः साधारणत्वात् वारनार्यो गणिकाः । परायणस्तत्परः । दुर्विनीतोऽविनीतः । जनकश्चाग्रजन्मा च तयोः । पितुर्ज्येष्ठभ्रातुश्चेत्यर्थः । शासनं निदेशम् । वाणिज्यं वणिक्कर्म भाण्डस्य द्वीपान्तरे नयनं द्वीपान्तरादानयनमित्यादि । पारावारः समुद्रः । पुरंदर इन्द्रस्तस्य पुरं नगरं तदतिथयो गृहागताः । ‘ दूराच्चोपनतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयात् ’ इति व्यासः । प्रेत्य महेन्द्रनगरं गतेषु । मृतेष्विति तात्पर्यार्थः । पूर्वमनतिक्रम्य वर्तन इति यथापूर्वम् । अतिष्ठन्कार्याण्यकुर्वन्नित्यर्थः । तत इति । नानाविधान्यनेकप्रकाराणि महान्त्यायुधानि तेषु निपुणता तया रचितानि कृतानि गान्यगण्यान्यसंख्यानि जन्यानि युद्धानि तेषु राजन्यानां क्षत्रियाणां मौलीनां किरीटानां पालिषु प्रान्तप्रदेशेषु निहिता अध्यारोपिताः स्थापिता वा निशितास्तीक्ष्णाः सायका बाणा येनैतादृशः । प्रत्यग्रो नवीनः यः संग्रामो युद्धं तत्र घस्मरो भक्षकः । शत्रुनाशक इत्यर्थः । ‘ घस्मरोऽद्मरः ’ इति अमरश्च । समुत्कटोऽतिशयितो मान एव सारो यस्य तम् । यद्वा समुत्कटौ मानो दर्पः सारो बलं च यस्य तम् । मानसार इति नृपनाम । सहेलं लीलया न्यक्कृतोऽधःकृतस्तिरस्कृतो जलधेः सागरस्य निर्घोषविषयेऽहंकारोऽभिमानो येन । भेरीझांकारेणेत्यस्य विशेषणम् । भेर्या दुन्दुभेर्झांकारो महाशब्दः । हठिकाकर्णनान्महतो ध्वनेर्बलाच्छ्रवणादाक्रान्तो भयस्य चण्डिमा महाभयमित्यर्थः यं तम् । दिशां दन्तावला हस्तिनस्तेषां वलयश्चक्रं समूहः तम् । विघूर्णयंश्चालयन् । निजभरेण स्वभारेण नमन्त्यधोगच्छन्ती या मेदिनी पृथ्वी तस्या भरेण भारेणायस्तं पीडितं भुजगानां राजा शेषस्तस्य मस्तकबलं येन । तस्य मेदिन्या आधारभूतत्वात् ।

१ समभ्रू०. २ सहेलम्. ३ भरणायस्त.

चतुरङ्गबलेन संयुतः संग्रामाभिलाषेण रोषेण महताऽऽविष्टो निर्ययौ। मालवनाथोऽप्यनेकानेकपयूथसनाथो विग्रहः सविग्रह इव साग्रहोऽभिमुखीभूय भूयो निर्जगाम। तयोरथ रथतुरगखुरक्षुण्णक्षोणीसमुद्भूते करिघटाकटस्रवन्मदधाराधौतमूले नव्यवल्लभवरणागतदिव्यकन्याजनजवनिकापटमण्डप इव वियत्तलव्याकुले धूलीपटले दिविषदध्वनि धिक्कृतान्यध्वनिपटहध्वानबधिरिताशेषदिगन्तरालं शस्त्राशस्त्रि हस्ताहस्ति परस्पराभिहतसैन्यं जन्यमजनि। तत्र मगधराजः प्रक्षीणसकलसैन्यमण्डलं मालवराजं जीवग्राहमभिगृह्य कृपालुतया पुनरपि स्वराज्ये प्रतिष्ठापयामास।

ततः स रत्नाकरमेखलामिलामनन्यशासनां शासदनपत्यतया नारायणं सकललोकैककारणं निरन्तरमर्चयामास। अथ कदाचित्तदग्रमहिषी देवी 'देवेन कल्पवल्लीफलमाप्नुहि' इति प्रभातसमये

चतुरङ्गबलेन हस्त्यश्वरथपादातेन। महता रोषेणाभिनिवेशेनेत्यर्थः आविष्टो व्याप्ताकारः। अनेके नेऽनेकपा द्विपाः। हस्तिन इति यावत्। तेषां यूथं वृन्दं तेन सनाथो युक्तः। विग्रहः संग्रामः। सविग्रहो मूर्तिमान। साग्रह आग्रहेण सहितः। 'तयोः अथ' इति छेदः। रथैरथाद्रथचक्रनेमिभिः। तुरगाणामश्वानां खुरैः शफैः क्षुण्णायाश्चूर्णितायाः क्षोण्याः पृथ्व्याः समुद्भूते उत्पन्ने। करिणां हस्तिनां घटाः। 'बहूनां घटना घटा' इति हलायुधः। तासां कटा गण्डाः। तेभ्यः स्रवन्त्यो या मदधारा दानसलिलासारास्ताभिर्धौतं निर्मलीकृतं मूलं यस्य। नव्या नवीना ये वल्लभा रमणास्तेषां वरणं पतित्वेन स्वीकरणं तदर्थमागतो यो दिव्यकन्याजनोऽप्सरःसमुदायस्तस्य जवनिका तिरस्करिणी तदर्थं पटमण्डपो इव। वियत आकाशस्य तले व्याकुलं संभृतं तस्मिन्। धूल्याः पांसोः पटलं चयस्तस्मिन्। दिवि सीदन्ति ते दिविषदः देवाः तेषामध्वनि मार्गे। धिक्कृता अन्यध्वनयो येनैतादृशो यः पटहध्वानो ढक्काध्वनिस्तेन बधिरितमशेषदिगन्तरालं यस्मिन्। शस्त्राशस्त्रि। शस्त्रैः शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति। 'तत्र तेनेदम्–' इति बहुव्रीहिः। 'इच्कर्मव्यतिहारे' इतीच्समासान्तः। परस्परस्याभिहतं सैन्यं यस्मिन्। जन्यं युद्धम्। प्रक्षीणं हतविध्वस्तम्। जीवग्राहं जीवन्तमित्यर्थः। तत इति। रत्नाकरः सागरो मेखला कटिसूत्रं यस्याः। इलां पृथ्वीम्। नास्त्यन्यशासनं यस्याम्। शासत्। अभ्यस्तत्वान्नुमभावः। सकल-

१ मण्डले. २ अवधीरित. ३ आदेहि; आधेहि

सुस्वप्नमवलोकितवती। सा तदा दयितमनोरथपुष्पभूतं गर्भमधत्त[1]। राजाऽपि संपन्नयक्कृताखण्डलः सुहृन्नृपमण्डलं समाहूय निजसंपन्मनोरथानुरूपं देव्याः सीमन्तोत्सवं व्यधत्त।

एकदा हितैः सुहृन्मन्त्रिपुरोहितैः सभायां सिंहासनासीनो गुणैरहीनो ललाटतटन्यस्ताञ्जलिना द्वारपालेन व्यज्ञापि—'देव, देवसंदर्शनलालसमानसः कोऽपि देवेन विरच्यार्चनार्हो यतिर्द्वारदेशमध्यास्ते' इति। तदनुज्ञातेन तेन स संयमी नृपसमीपमनायि। भूपतिरायान्तं तं विलोक्य सम्यग्ज्ञाततदीयगूढचारभावो निखिलमनुचरनिकरं विसृज्य मन्त्रिजनसमेतः प्रणतमेनं[2] मन्दहासमभाषत—'ननु तापस, देशं सापदेशं भ्रमन्भवांस्तत्र तत्र भवदभिज्ञातं कथयतु' इति। तेनाभाषि भूभ्रमणबलिना प्राञ्जलिना—'देव, शिरसि देवस्याज्ञामादायैनं निर्दोषं वेषं स्वीकृत्य मालवेन्द्रनगरं प्रविश्य तत्र गूढतरं वर्तमानस्तस्य राज्ञः समस्तमुदन्तजातं विदित्वा

लोकस्यैककारणमादिहेतुः। दयितमनोरथफलस्य पुष्पमिव भूतम्। संपदा न्यक्कृत आखण्डल इन्द्रो येन। सुहृदश्च ये नृपाश्च स्तेषां मण्डलम्। सुहृदश्च नृपाश्चेति वा। **निजेति**। निजसंपन्मनोरथयोरनुरूपं सदृशम्। रूपस्य योग्यमनुरूपम्। सीमन्तोत्सवं सीमन्तोन्नयनसंज्ञः संस्कारस्तदनुषङ्गिकमुत्सवम्। तथा चाश्वलायनः—'चतुर्थे गर्भमासे सीमन्तोन्नयनम्' इति। सीमन्तः केशवेशो यस्मिन्कर्मण्युन्नीयते तत्सीमन्तोन्नयनम्। **एकदेति**। हितैः पथ्यैः। सिंहासनं भद्रासनं तत्रासीनः। अहीनोऽन्यूनः। ललाटतटे न्यस्तः अञ्जलिर्येन तेन। लालसमभिलाषयुक्तम्। विरच्या कर्तव्या यार्चना तामर्हतीति। यतिर्भिक्षुः। **द्वारदेशमिति**। 'अधिशीङ्स्थासाम्-' इति कर्मत्वम्। द्वारे तिष्ठतीत्यर्थः। तेनानुज्ञातस्तदनुज्ञातः। संयमी यतिः। आयान्तमागच्छन्तम्। सम्यक्समुष्टु ज्ञातोऽवगतः। तदीयः तत्संबन्धी गूढः प्रच्छन्नश्चारभावो यस्य सः। निखिलं सर्वम्। अनुचरनिकरमनुयायिवर्गम्। विसृज्य दूरमपसार्य। प्रणतं प्रह्वम्। मन्दहासमिति क्रियाविशेषणम्। तत्र तत्र तेषु तेषु स्थानेषु। भवताऽभिज्ञातं भवदभिज्ञातम्। कथयत्वित्यत्र भवच्छब्दस्य कर्तृत्वेन प्रयोगात्प्रथमपुरुषः। भूभ्रमणे भ्रमणविषये बली समर्थस्तेन। प्रबद्धोऽञ्जलिर्येन। **शिरसीति**। अङ्गीकृत्येत्यर्थः। निर्दोषं दोषविवर्जितम्। मालवेन्द्रो मानसारः। गूढतरम्। अतिशयेन गूढमित्यर्थः। उदन्तो वार्ता उदन्तजात

१ आधत्त. २ प्रणमन्तम्.

प्रत्यागमम् । मानी मगधेश्वरः स्वसैनिकायुष्मत्तान्तराये संपराये भवतः पराजयमनुभूय वैलक्ष्यलक्ष्यहृदयो वीतदयो महाकालनिवासिनं कालीविलासिनमनश्वरं महेश्वरं समाराध्य तपःप्रभावसंतुष्टादस्मादेकवीरारातिघ्नीं[1] भयदां गदां लब्ध्वाऽऽत्मानमप्रतिभटं मन्यमानो महाभिमानो भवन्तमभियोक्तुमुद्युङ्क्ते । ततः परं देव एव प्रमाणम्' इति । तदालोच्य निश्चिततत्कृत्यैरमात्यै[2] राजा विज्ञापितोऽभूत्—'देव, निरुपायेन देवसहायेन[3] योद्धुमरातिरायाति । तस्मादस्माकं युद्धं सांप्रतमसांप्रतम् । सहसा दुर्गसंश्रयः कार्यः' इति । तैर्बहुधा विज्ञापितोऽप्यखर्वेण गर्वेण विराजमानो राजा तद्वाक्यमकृत्यमित्यनादृत्य प्रतियोद्धुमना बभूव । शितिकण्ठदत्तशक्तिसारो मानसारो[4] योद्धुमनसामग्रीभूय सामग्रीसमेतोऽक्लेशं मगधदेशं प्रविवेश । तदा तदाकर्ण्य मन्त्रिणो भूमहेन्द्रं मगधेन्द्रं कथंचिदनुनीय रिपुभिरसाध्ये[5] विन्ध्याटवीमध्येऽवरोधान्मूलबल-

मखिलां प्रवृत्तिम् । विदित्वा ज्ञात्वा । **मानीति** । ताच्छील्ये णिनिः । स्वसैनिका निजभटास्तेषामायुष्मत्ता जीवितमर्यादा तस्या अन्तरायो विघ्नस्तस्मिन् । संपराये युद्धे । भवतो दैवात् । वैलक्ष्येण दैन्येन लक्ष्यमाक्रान्तं हृदयं यस्य सः । वीता नष्टा दया यस्य सः । महाकाले निवासोऽस्त्यस्य तस्य । कालीविलासिनं कालीपतिम् । अनश्वरं नाशरहितम् । महांश्चासावीश्वरश्च महेश्वरस्तम् । समाराध्य सम्यगाराध्य । तपसस्तदाचरितस्य प्रभावः सामर्थ्यं तेन संतुष्टात्प्रीतात् । अस्मान्महेश्वरात् । एकवीरश्चासावरातिश्च तं हन्तीति । भयदां भयदात्रीम् । गदामायुधविशेषम् । अप्रतिभटं न विद्यते प्रतिभटो यस्य तम् । महानभिमानोऽहंकारो यस्य सः । अभियोक्तुमभिषेणयितुम् । उद्युङ्क्ते उद्युक्तो भवति । देव एव प्रमाणम् । किंकर्तव्यतानिर्णेतेत्यर्थः । निश्चितं निर्णीतं तत्कृत्यं तत्कालोचितं कृत्यं राजकृत्यं वा यैस्तैः । अमात्यैर्मन्त्रिभिः । निरुपायेन नास्त्युपायः प्रतीकारो यस्य तेन । दैवसहायेन दैवसामर्थ्येति यावत् । अरातिः शत्रुः । सांप्रतमधुना । असांप्रतमयुक्तम् । न खर्वोऽखर्वः । महानित्यर्थः । विराजमानः शोभमानः । अकृत्यं कर्तुमनुचितम् । अनादृत्य अनादरं कृत्वा । शितिकण्ठः शिवस्तेन दत्ता या शक्तिः प्रहरणविशेषः स एव सारो बलं यस्य सः । योद्धुमनसां युद्धकामानाम् । 'तुं काममनसोरपि' इत्यनुस्वारलोपः । अग्रीभूय पुरो भूत्वा । सामग्र्या समेतो युक्तः । अक्लेशमिति क्रियाविशेषणम् । 'तत आकर्ण्य' इति छेदः । भुवि पृथिव्यां महेन्द्रस्तम् । कथंचिद्यत्नेन । अनुनीय प्रार्थ्य । असाध्ये दुर्गादनीये । अवरोधान्राजस्त्रियः । मूलबलेन प्रधानसैन्येन

१ एक वीरारातिघ्नीं. २ निश्चितकृ०. ३ दैवमहायेन. ४ अस्मात्पूर्वं मानसार इत्यधि०. ५ असाध्ये.

रक्षितान्निवेशयामासुः। राजहंसस्तु प्रशस्तवीतदैन्यसैन्यसमेतस्तीव्रगत्या निर्गत्याधिकरुषं द्विषं रुरोध। परस्परबद्धवैरयोरेतयोः शूरयोस्तदा तदालोकनकुतूहलागतगगनचराश्चर्यकारणे रणे वर्तमाने जयाकाङ्क्षी मालवदेशरक्षी विविधायुधस्थैर्यचर्याञ्चितसमरतुलितामरेश्वरस्य मगधेश्वरस्य तस्योपरि पुरा पुरारातिदत्तां गदां प्राहिणोत्। निशितशरनिकरशकलीकृताऽपि सा पशुपतिशासनस्यावन्ध्यतया सूतं निहत्य रथस्थं राजानं मूर्च्छितमकार्षीत्। ततो वीतप्रग्रहा अक्षतविग्रहा वाहा रथमादाय दैवगत्याऽन्तःपुरशरण्यं महारण्यं प्राविशन्। मालवनाथो जयलक्ष्मीसनाथो मगधराज्यं प्राज्यं समाक्रम्य पुष्पपुरमध्यतिष्ठत्।

तत्र हेतिततिहतिश्रान्ता अमात्या दैवगत्याऽनुत्क्रान्तजीविता निशान्तवातलब्धसंज्ञाः कथंचिदाश्वस्य राजानं समन्तादन्वीक्ष्या-

रक्षितान्। निवेशयामासुः स्थापितवन्तः। **प्रशस्तेति**। वीतं गतं दैन्यं यस्मात्तद्वीतदैन्यम्। प्रशस्तं च तद्वीतदैन्यं च तादृशं सैन्यं तेन समेतः। तीव्रा चासौ गतिश्च तया। **निर्गत्येति**। अधिका रुट् यस्य तम्। द्विषमरिं रुरोध। **परस्परेति**। परस्परेण बद्धं वैरं याभ्यां तयोः। **तदालोकनेति**। तस्यालोकने दर्शने यत्कुतूहलं कौतुकं तदर्थमागता ये गगनचरा देवाः तेषामाश्चर्यस्य कारणं तस्मिन्। वर्तमाने प्रवृत्ते। जयमाकाङ्क्षते सः। मालवदेशस्य रक्षी रक्षिता नृपः। **विविधेति**। विविधानि नैकप्रकाराणि यान्यायुधानि प्रहरणानि तेषां स्थैर्येण चर्या चालनमुपयोगः प्रयोगो वा। तयाऽञ्चितं युक्तं यत्समरं युद्धं तस्मिंस्तुलितोऽमरेश्वर इन्द्रो येन तस्य। **पुरारातीति**। पुरारातिः शंकरस्तेन दत्ताम्। निशितास्तीक्ष्णाश्च ते शराश्च तेषां निकरः समुदायस्तेन शकलीकृता खण्डशः कृताऽपि। सा गदा। पशूनां जीवानां पतिः पशुपतिः शिवस्तस्य शासनस्याज्ञाया अवन्ध्यतया सफलभावित्वात्। रथस्थं रथे तिष्ठतीति। वीताः प्रग्रहा येषां ते वीतप्रग्रहा मुक्तरश्मयः। अक्षतो विग्रहः शरीरं येषाम्। वाहा अश्वाः। दैवगत्या यदृच्छया। अन्तःपुरस्य राजस्त्रीणां शरणे साधु शरण्यम्। **जयलक्ष्मीति**। जयलक्ष्म्या सनाथो युक्तः। प्राज्यं पुष्कलम्। पुष्पपुरमिति। 'अधिशीङ्स्थासां–' इति कर्मत्वम्। **तत्रेति**। हेतीनामायुधानां ततयः समुदायास्तैर्हतिस्ताडनं प्रहारस्तेन श्रान्ताः। **अनुत्क्रान्तेति**। न उत्क्रान्तं जीवितं प्राणा येषां ते। निशाया अन्तोऽवसानं तत्संबन्धि वातेनार्थाच्छीतलेन लब्धा प्राप्ता संज्ञा यैस्ते। कथंचित्सहता आयासेन। आश्वस्य

१ मध्यापयरि पुरारातिः. २ शरशतेन शकलीकृता. ३ अप्रत्युत्क्रान्त. प्रत्यु०.

नवलोकितवन्तो दैन्यवन्तो देवीमवापुः । वसुमती तु तेभ्यो निखिल-सैन्यक्षतिं राज्ञोऽदृश्यत्वं चाकर्ण्योद्विग्ना शोकसागरमग्ना रमणानुगमने मतिं व्यधत्त । 'कल्याणि, भूरमणमरणमनिश्चितम् । किं च दैवज्ञ-कथितो मथितोद्धतारातिः सार्वभौमोऽभिरामो भविता सुकुमारः कुमार-स्त्वदुदरे वसति । तस्मादद्य तव मरणमनुचितम्' इति भूषितभाषितै-रमात्यपुरोहितैरनुनीयमानया तया क्षणं क्षणहीनया तूष्णीमस्थायि । अथार्धरात्रे निद्रानिलीढनेत्रे परिजने विजने शोकपारावारमपारमुत्तर्तु-मशक्नुवती सेनानिवेशदेशं निःशब्दलेशं शनैरतिक्रम्य यस्मिन्रथस्य संसक्ततया तदानयनपलायनश्रान्ता गन्तुमक्षमाः क्षमापतिरथ्याः पथ्याकुलाः पूर्वमतिष्ठंस्तस्य निकटवटतरोः शाखायां मृतिरेखायामिव क्वचिदुत्तरीयार्धेन बन्धनं मृतिसाधनं विरच्य मर्तुकामाऽभिरामा

धैर्यावष्टम्भं कृत्वा । समन्तादितस्ततः । दैन्यवन्तो दैन्यं खेदस्तद्वन्तः । **निखिलेति** । निखिलस्य सर्वस्य सैन्यस्य क्षतिर्नाशस्तम् । **शोकेति** । शोक एव सागरस्तस्मिन्मग्ना । रमणानुगमने पतिमनु [१]मरणे । मतिं व्यधत्त निश्चयं चकार । **कल्याणीति** । कल्याणि कल्याणलक्षणोपेते इति संबुद्धिः । भुवो रमणो वल्लभः । पतिरित्यर्थः । देवस्येति तात्पर्यम् । अनिश्चितं न निर्णीतम् । किं चापि चान्यच्च । दैवज्ञेन कार्तान्तिकेन । ज्यौतिषिकेणेत्यर्थः । कथितः । मथिता मथिष्यमाणा उद्धता भृशम् अरातयो येन सः । सार्वभौमश्चक्रवर्ती । अभिरामो मनोज्ञः । अनुचितमयुक्तम् । भूषितं भूषणराज्यं भाषितं भाषणं येषां तैः । भाषितमिति भावे क्तः । **अमात्येति** । अमात्याश्च पुरोहिताश्च तैः । पुरोहिताः पुरोभगः । अनुनीयत इत्यनुनीयमाना तया । क्षणं क्षणपर्यन्तम् । 'कालाध्वनोः—' इति द्वितीया । तूष्णीं जोषम् । अथानन्तरम् । अर्धरात्रे निशीथे । निद्रया निलीढे नेत्रे यस्य स तस्मिन् । परिजनेऽनुचरवर्गे । विजने विविक्ते । शोकपारावारं शोकसमुद्रम् । अपारं पारयितुमशक्यम् । सेनाया निवेशः शिबिरम् । वासस्थानमिति यावत् । तस्य देशः प्रदेशः । निर्गतः शब्दलेशो यस्मात्तम् । संसक्तस्य भावस्तया । तस्यानयनं तदानयनं तस्मिन्यत्पलायनं तेन श्रान्ताः । अक्षमा असमर्थाः । क्षमायाः पृथ्व्याः पतिः स्वामी भर्ता वा तस्य रथ्या वाहाः । 'तद्वहति रथयुग—' इति यः । 'पथि आकुलाः' इति च्छेदः । मृतेर्मरणस्य रेखा तस्याम् । उत्तरीयस्य संव्यानस्य । विरच्य कृत्वा । मर्तुं कामो यस्याः सा । 'तुं काममनसोरपि' इत्यनुस्वारलोपः ।

१ नुमरणे. २ अभिरामेति नास्ति क्वचित्.

वाङ्माधुर्यविरसीकृतकलकण्ठा साश्रुकण्ठा व्यलपत्—'लावण्योपमितपुष्पसायक भूनायक, भवानेव भाविन्यपि जन्मनि वल्लभो भवतु' इति। तदाकर्ण्य नीहारकरकिरणनिकरसंपर्कलब्धावबोधो मागधोऽगाधरुधिरविक्षरणनष्टचेष्टो देवीवाक्यमेव निश्चिन्वानस्तन्वानः प्रियवचनानि शनैस्तामाह्वयत्। सा ससंभ्रममागत्यामन्दहृदयानन्दसंफुल्लवदनारविन्दा तमुपोषिताभ्यामिवानिमिषिताभ्यां लोचनाभ्यां पिबन्ती विकस्वरेण स्वरेण पुरोहितामात्यजनमुच्चैराहूय तेभ्यस्तमदर्शयत्। राजा निटिलतटचुम्बितनिजचरणाम्बुजैः प्रशंसितदैवमाहात्म्यैरमात्यैरभाणि—'देव, रथ्यचयः सारथ्यपगमे रथं रभसादरण्यमनयत्' इति। 'तत्र निहतसैनिकग्रामे संग्रामे मालवपतिनाऽऽराधितपुरारातिना प्रहितया गदया दयाहीनेन ताडितो मूर्छामागत्यात्र वने निशान्तपवनेन बोधितोऽभवम्' इति महीपतिरकथयत्।

वाचो माधुरी माधुर्यं तया विरसीकृतोऽस्वरीकृतः कलकण्ठः कोकिलो यया सा। व्यलपत्। रुरोदेत्यर्थः। लावण्येनोपमितः पुष्पसायको मदनो येन तत्संबुद्धौ। भूनायक पृथ्वीपते। भाविन्यागामिनि। वल्लभो रमणः। नीहारकरश्चन्द्रस्तस्य किरणानां मयूखानां निकरस्य समुदायस्य संपर्केण लब्धः प्राप्तोऽवबोधः संज्ञा येन सः। प्रकृतिमापन्न इत्यर्थः। मागधो मगधाधिपो राजहंसः। अगाधं बहुलम्। निश्चिन्वानो निश्चयं कुर्वन्। ससंभ्रमं सत्वरम्। न मन्दोऽमन्दः। हृदयस्यानन्दो हृदयानन्दः। अमन्दश्चासौ हृदयानन्दश्चामन्दहृदयानन्दः। तेन संफुल्लं सम्यग्विकासितं प्रसन्नं वदनारविन्दं मुखकमलं यस्याः सा। उपोषिताभ्यां जातोत्कण्ठाभ्यामित्यर्थः। अनिमिषिताभ्यां निमेषरहिताभ्याम्। विकस्वरेण समुन्मीलितेन। उच्चैरिति क्रियाविशेषणम्। निटिलतटेन भालस्थलेन चुम्बितं निजचरणाम्बुजं यैस्तैः। प्रशंसितं दैवस्य माहात्म्यं महिमा यैस्तैः। रथ्यचयोऽश्वसमुदायः। सारथेरपगमो नाशस्तस्मिन्। रभसाद्वेगेन। निहतो निःशेषं हतः सैनिकग्रामो योधसमूहो यस्मिंस्तथाभूते। आराधितः संतोषितः पुरारातिः शिवो येन तेन। प्रहितया प्रेरितया। निशान्तः प्रभातं तत्संबन्धिना पवनेन वायुना। 'निशीत—' इति पाठे नितरां शीत इति पवनविशेषणम्। 'निशीथ—' इति पाठे निशीथोऽ-

१ दूरीकृतकलकण्ठकण्ठा. २ भवानेकः. ३ चिरक्षरण. ४ देवीवाक्यमिव. ५ संपीय. ६ तल. ७ निशीन; निशीथ.

ततो विरचितमहेन मन्त्रिनिवहेन विरचितदैवानुकूल्येन कालेन शिबिरमानीयापनीताशेषशल्यो विकासितनिजाननारविन्दो राजा सहसा विरोपितव्रणोऽकारि । विरोधिदैवधिक्कृतपुरुषकारो दैन्यव्याप्ताकारो मगधाधिपतिरधिकाधिरमात्यसंमत्या मृदुभाषितया तया वसुमत्या मत्या कलितया च समबोधि—'देव, सकलस्य भूपालकुलस्य मध्ये तेजोवरिष्ठो गरिष्ठो भवानद्य विन्ध्यवनमध्यं निवसतीति जलबुद्बुदसमाना विराजमाना संपत्तडिल्लतेव सहसैवोदेति नश्यति च । तन्निखिलं दैवायत्तमेवावधार्य कार्यम् । किं च पुरा हरिश्चन्द्ररामचन्द्रमुख्या असंख्या महेन्द्रा ऐश्वर्योपमितमहेन्द्रा दैवतन्त्रं दुःखयन्त्रं सम्यगनुभूय पश्चादनेककालं निजराज्यमकुर्वन् । तद्वदेव भवान्भविष्यति । कंचन कालं विरचितदैवसमाधिर्गताधिस्तिष्ठतु तावत्' इति ।

ततः सकलसैन्यसमन्वितो राजहंसस्तपोविभ्राजमानं वामदेवनामानं तपोधनं निजाभिलाषावाप्तिसाधनं जगाम । तं प्रणम्य

---

धराभस्तत्संबन्धिनेति । विरचितो महः पूजासत्कारो येन तेन । मन्त्रिणां निवहो वृन्दं तेन । विरचितं कृतं दैवानुकूल्यं येन तेन । शिबिरं सेनाया वासस्थानम् । अपनीतान्युद्धृतान्यशेषाणि सर्वाणि शल्यानि बाणाग्राणि शङ्कवो वा यस्य सः । शलति गच्छतीति शल्यम् । विरोपिताश्चिकित्सिता व्रणा यस्य सः । विरोधिनाऽननुकूलेन दैवेन भागधेयेन धिक्कृतः पुरुषकारो विक्रमः पौरुषमिति यावद्यस्य सः । दैन्येन खेदेन व्याप्त आकारो यस्य सः । अतिशयेनाधिका आधिर्मनोव्यथा यस्य सः । अमात्यानां संमतिस्तया । मृदु भाषितं यस्यास्तया । मत्या बुद्ध्या कलितया युक्तया । तेजसा वरिष्ठः । अतिशयेन गुरुर्गरिष्ठः । 'प्रियस्थिर—' इत्यादिना 'वर्' 'गर्' इत्यादेशाः । जलस्य बुद्बुदो विकारस्तत्समाना तत्सदृशी । तडिल्लता विद्युत् । सहसाऽकस्मात् । उदेत्युद्गच्छति दृक्पथमायाति । अवधार्य निर्णेतव्यम् । ऐश्वर्येण विभवेनोपमितस्तुल्यीकृतो महेन्द्रो देवराजो यैस्ते । दैवतन्त्रं दैवचालितम् । दुःखयन्त्रं दुःखमेव यन्त्रं तत् । विरचिता दैवसमाधिर्येन सः । गत आधिर्यस्य सः । तत इति । समन्वितो युक्तः । तपसा विशेषेण भ्राजते दीप्यतेऽसौ तम् । तप एव धनं यस्य तम् । निजोऽभिलाषस्तस्यावाप्तिः

---

१ अधिकाधिकाधिः. २ निजकार्यम्.

तेन कृतातिथ्यस्तस्मै कथितकथ्यस्तदाश्रमे दूरीकृतश्रमे कंचन कालमुषित्वा निजराज्याभिलाषी मितभाषी सोमकुलावतंसो राजहंसो मुनिमभाषत—'भगवन्, मानसारः प्रबलेन दैवबलेन मां निर्जित्य मद्भोग्यं राज्यमनुभवति। तद्वदहमप्युग्रं तपो विरच्य तमरातिमुन्मूलयिष्यामि लोकशरण्येन भवत्कारुण्येनेति नियमवन्तं भवन्तं प्राप्नवम्' इति। ततस्त्रिकालज्ञस्तपोधनो राजानमवोचत्—'सखे, शरीरकार्श्यकारिणा तपसाऽलम्। वसुमतीगर्भस्थः सकलरिपुकुलमर्दनो राजनन्दनो नूनं संभविष्यति। कंचन कालं तूष्णीमास्स्व' इति। गगनचारिण्याऽपि वाण्या 'सत्यमेतत्' इति तदैवावाचि[1]। राजाऽपि मुनिवाक्यमङ्गीकृत्यातिष्ठत्।

ततः संपूर्णगर्भदिवसा वसुमती सुमुहूर्ते सकललक्षणलक्षितं सुतमसूत। ब्रह्मवर्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं सुकुमारं जातसंस्कारेण बालालंकारेण च विराजमानं राजवाहननामानं व्यधत्त। तस्मिन्नेव काले सुमतिसुमन्त्रसुमित्रसुश्रुतानां मन्त्रिणां प्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताख्या महाभिख्याः[2]

---

प्राप्तिस्तस्य साधनं साधनभूतम्। कृतमातिथ्यं यस्य सः। कथितं निवेदितं कथ्यं कथयितुं योग्यं सर्वं येनैतादृशः। **तदाश्रम इति**। दूरीकृतः श्रमो यत्रैतादृशे। सोमकुलस्य चन्द्रवंशस्यावतंसो भूषणं ललामभूतः। मानसार इति राजनाम। मया भोग्यं भोक्तव्यम्। अरातिं शत्रुम्। उन्मूलयिष्याम्युन्मूलयितुमुद्यतोऽस्मि। लोकानां शरणे रक्षणे साधु तेन। नियमवन्तं व्रतिनम्। त्रिकालज्ञो भूतभविष्यद्वर्तमानकालगतं जानातीति तथा। सखे इति कोमलामन्त्रणम्। शरीरस्य देहस्य कार्श्यं कृशस्य भावस्तत्करोतीति तेन। तपसाऽलं तपो माऽनुतिष्ठेति भावः। नूनं निश्चितम्। तूष्णीं जोषम्। **तत इति**। संपूर्णा गर्भदिवसा नव मासा नव दिवसाश्च यस्याः सा। सकललक्षणैर्लक्षितं युक्तम्। ब्रह्मणो वर्चो ब्रह्मवर्चसम्। 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच्। तुलितो वेधा ब्रह्मा येन तम्। पुरोधसमुपाध्यायम्। कृत्यं वेत्तीति तथा। जातसंस्कारेण जननकालेऽनुष्ठितसंस्कारेण बालार्हैरलंकारैश्च विराजमानं विशोभमानम्। व्यधत्त कृतवान्। सुमत्यादीनि मन्त्रिनामानि। प्रमत्यादीनि सुतनामानि। महत्यभिख्या शोभा येषां ते महाभिख्याः। 'महदभिख्याः' इति प्रयोगश्चिन्त्यः।

---

१ ०वावोचि. २ महदभिख्याः.

सूनवो नवोद्यदिन्दुरुचश्चिरायुषः समजायन्त । राजवाहनो मन्त्रिपुत्रैरात्ममित्रैः सह बालकेलीरनुभवन्नवर्धत ।

अथ कदाचिदेकेन तापसेन रसेन राजलक्षणविराजितं कंचिन्नयनानन्दकरं सुकुमारं कुमारं राज्ञे समर्प्यावाचि—' भूवल्लभ कुशसमिदानयनाय वनं गतेन मया काचिदशरण्या व्यक्तकार्पण्याऽश्रु मुञ्चन्ती वनिता विलोकिता । ' निर्जने वने किंनिमित्तं रुद्यते त्वया ' इति पृष्टा सा कररुहैरश्रु प्रमृज्य सगद्गदं मामवोचत्—' मुने लावण्यजितपुष्पसायके मिथिलानायके कीर्तिव्यापृतसुधर्मणि निजसुहृदो मगधराजस्य सीमन्तिनीसीमन्तमहोत्सवाय पुत्रदारसमन्विते पुष्पपुरमुपेत्य कंचन कालमधिवसति समाराधितगिरीशो मालवाधीशो मगधराजं योद्धुमभ्यगात् । तत्र प्रख्यातयोरेतयोरसंख्ये संख्ये वर्तमाने सुहृत्साहाय्यकं कुर्वाणो निजबले सति विदेहे विदेहेश्वरः प्रहारवर्मा जयवता रिपुणाऽभिगृह्य कारुण्येन पुण्येन विसृष्टो हतावशेषेण शून्येन सैन्येन

---

नवः प्रातिपदिकः । उद्यन्नुद्गच्छन् । इन्दुश्चन्द्रमाः । तस्य रुक्कान्तिरिव कान्तिर्येषां ते । चिरायुषश्चिरंजीविनः । अथेति । तापसेन मुनिना । रसेन रागेण । कुशाश्च समिधश्च तेषामानयनं तस्मै । नास्ति शरण्यं रक्षिता यस्याः सा । व्यक्तं कार्पण्यं दैन्यं यस्याः सा । मुञ्चन्तीत्यत्र तुदादित्वाद्वैकल्पिको नुम् । निर्जने जनसंचाररहिते । कररुहैः अङ्गुलिभिः । करे रोहन्तीति तैः । यद्यपि कररुहशब्दो नखपरस्तथाऽप्यत्राङ्गुलिवाचकः । करसरोरुहैरिति पाठे करावेव सरोरुहाणि तैः । करसरोरुहाभ्यामिति समीचीनः पाठः । प्रमृज्य । ' मृजू शुद्धौ ' इति धातुः । ल्यबन्तम् । सगद्गदं गद्गदस्वरेण । लावण्येन सौन्दर्येण जितः पुष्पसायको मदनो येन तस्मिन् । कीर्त्या व्यापृता सुधर्मा देवसभा येन तस्मिन् । ' धर्मादनिच्केवलात् ' इति धर्मशब्दस्य धर्मन्नादेशः । निजसुहृदः स्वमित्रस्य । सीमन्तिनी वधूस्तस्याः सीमन्तमहोत्सवो गर्भिण्यवस्थायामनुष्ठातव्यस्य सीमन्तोन्नयनाख्यसंस्कारस्योत्सवस्तदर्थम् । पुत्रश्च दाराश्च पुत्रदारास्तैः समन्विते युक्ते । ' उपान्वध्याङ्वसः ' इत्यनेन कालस्य कर्मत्वम् । समाराधितः सम्यक्पूजितः संतोषितो वा गिरीशः शिवो येन सः । संख्ये युद्धे । सुहृदः साहाय्यकम् । साहाय्यमेव साहाय्यकम् । स्वार्थे कप् । निजबले आत्मसैन्ये । विदेहे मृत इत्यर्थः । ' असति विधेये ' इति पाठे ' विधेयो विनयग्राही ' इति कोशाद्विनयातिक्रमणशील इति भावः । विदेहानामीश्वरः प्रभुः । शून्येन रिक्तेन ।

---

१ करसरोरुहैः. २ व्याप्त. ३ असति विधेये.

सह स्वपुरगमनमकरोत् । ततो वनमार्गेण दुर्गेण गच्छन्नधिकबलेन शबरबलेन रभसादभिहन्यमानो मूलबलाभिरक्षितावरोधः स महानिरोधः पलायिष्ट । तदीयार्भकयोर्यमयोर्धात्रीभावेन परिकल्पिताऽहं मद्दुहिताऽपि तीव्रगतिं भूपतिमनुगन्तुमक्षमे अभूव । तत्र विवृतवदनः कोऽपि रूपी कोप इव व्याघ्रः शीघ्रं मामाघ्रातुमागतवान् । भीताऽहमुदग्रग्राव्णि स्खलन्ती पर्यपतम् । मदीयपाणिभ्रष्टो बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणोऽमर्षिणो व्याघ्रस्य प्राणान्बाणो बाणासनयन्त्रमुक्तोऽपाहरत् । विलोलालको बालकोऽपि शबरैरादाय कुत्रचिदुपानीयत । कुमारमपरमुद्वहन्ती मद्दुहिता कुत्र गता न जाने । साऽहं मोहं गता केनापि कृपालुना वृष्णिपालेन स्वकुटीरमावेश्य विरोपितव्रणाऽभवम् । ततः स्वस्थीभूय भूयः क्ष्माभर्तुरन्तिकमुपतिष्ठासुरसहायतया दुहितुरनभिज्ञाततया च व्याकुलीभवामि ' इत्यभिदधाना ' एकाकिन्यपि स्वामिनं गमिष्यामि ' इति सा तदैव

---

दुःखेन गन्तुं शक्यो दुर्गस्तेन । अधिकं बलं यस्य तेन । शबराणां भिल्लानां बलेन सेनया । रभसाद्वेगेन । अभिहन्यमानः । कर्मणि शानच् । मूलबलं प्रधानसैन्यं तेनाभिरक्षितोऽवरोधः शुद्धान्तो यस्य सः । महान्निरोधो यस्य स तथा । पलायिष्ट । ' अय गतौ ' इति धातुः । परेरुपसर्गस्थरस्य स्थाने ' उपसर्गस्यायतौ ' इति लादेशः । लुङ् । तस्येमौ तदीयौ च तावर्भकौ तयोः । यमयोः सहजातयोः । धात्र्या उपमातुर्भावस्तेन । तीव्रा गतिर्यस्य तम । अक्षमे अभूवेत्यत्र प्रगृह्यत्वान्न संधिः । रूपी मूर्तिमान् । आघ्रातुं नाशयितुम् । उद्गतान्यग्राणि यस्यैतादृशो यो ग्रावा तस्मिन् । ' उदग्रपाणिः ' इति पाठे उदग्रः पाणिर्यस्याः सेत्यहमित्यस्य विशेषणं द्रष्टव्यम् । भ्रष्टश्च्युतः । कपिलाया गोः शवः कुणपस्तस्य । क्रोडमङ्कदेशम् । अभ्यलीयत प्रच्छन्नः अभूत् । बाणासनं धनुस्तदेव यन्त्रं तस्मान्मुक्तः । अपाहरज्जहार । विलोलाश्चञ्चला अलकाश्चूर्णकुन्तला यस्य सः । आदाय गृहीत्वा । कुत्रचिदनिर्दिष्टे । अज्ञातप्रदेशे इति यावत् । अपरं यमजं द्वितीयम् । उद्वहन्ती धारयन्ती । सेति पूर्वनिर्दिष्टा । मोहं गता विगतसंज्ञा । वृष्णिपालेन मेषपालेन । स्वकुटीरं स्ववासगृहम् । आवेश्य । णिजन्ताल्ल्यप् । विरोपिता व्रणा यस्याः सा । भूयः पुनः । क्ष्माभर्तुर्नरेन्द्रस्य । उपतिष्ठासुरुपस्थातुमिच्छुः । अभिदधानाऽभिधत्तेऽसौ । एका एवैकाकिन्यसहाया । तदैव तस्मिन्नेव क्षणे ।

---

१ उदग्रपाणिः. २ उपा०.

निरगात् । अहमपि भवन्मित्रस्य विदेहनाथस्य विपन्निमित्तं विषादमनुभवंस्तदन्वयाङ्कुरं कुमारमन्विष्यंस्तदैकं चण्डिकामन्दिरं सुन्दरं प्रागाम् । तत्र संततमेवंविधविजयसिद्धये कुमारं देवतोपहारं करिष्यन्तः किराताः 'महीरुहशाखावलम्बितमेनमसिलतया वा, सैकततले खननिक्षिप्तचरणं लक्षीकृत्य शितशरनिकरेण वा, अनेकचरणैः पलायमानं कुक्कुरबालकैर्वा दंशयित्वा संहनिष्यामः' इति भाषमाणा मया समभ्यभाष्यन्त— 'ननु किरातोत्तमाः घोरप्रचारे कान्तारे स्खलितपथः स्थविरभूसुरोऽहं मम पुत्रकं क्वचिच्छायायां निक्षिप्य मार्गान्वेषणाय किंचिदन्तरमगच्छम् । स कुत्र गतः केन वा गृहीतः परीक्ष्यापि न वीक्ष्यते । तन्मुखावलोकनेन विनाऽनेकान्यहान्यतीतानि । किं करोमि क्व यामि भवद्भिर्न किमदर्शि' इति । 'द्विजोत्तम कश्चिदत्र तिष्ठति । किमेष तव नन्दनः सत्यमेव । तदेनं गृहाण' इत्युक्त्वा दैवानुकूल्येन मह्यं तं व्यतरन् । तेभ्यो दत्ताशीरहं बालकमङ्गीकृत्य शिशिरोदकादिनोपचारे-

विषादं खेदम् । तस्यान्वयो वंशस्तस्याङ्कुरः प्ररोहः । चण्डिकाया मन्दिरमायतनम् । एवं विधा प्रकारो यस्य तादृशो यो विजयस्तस्य सिद्धिस्तस्यै । देवतायै उपहारस्तम् । महीरुहो वृक्षस्तस्य शाखायामवलम्बितम् । असिलता खड्गः । इदं केचित्किराता आहुः । सिकताः सन्त्यस्मिन्निति सैकतम् । सैकतं च तत्तलं च । खनने निक्षिप्तौ भूमौ कीलितौ चरणौ यस्य तम् । शितास्तीक्ष्णाश्च ते शराश्च तेषां निकरेण । इत्यन्ये । अनेकचरणैरिति कुक्कुरबालकैरित्यस्य विशेषणम् । पलायमानमेनं बालकम् । दंशयित्वा दंशं कारयित्वा । 'दंदशयित्वा' इति पाठे यङन्तप्रयोगः । इदमप्यपरे । किरातोत्तमाः । प्रार्थनानुकूलमेतत्संबोधनम् । घोरः प्रचारः संचारो यस्मिंस्तथा । कान्तारे वने । स्खलितः पन्था यस्य सः । 'ऋक्पूरब्धूःपथामानक्षे' इत्यनेन पथिन् इत्यस्य पथः । स्थविरो वृद्धः । भूसुरो भुवि पृथ्व्यां सुरो द्विजः । निक्षिप्य संस्थाप्य । मार्गस्यान्वेषणं गवेषणम् । मुखावलोकनेन विना । 'पृथग्विनानाना—' इति तृतीया । अतीतानि गतानि । अदर्शि : 'दृशिर् प्रेक्षणे' । कर्मणि लुङ् । गृहाण । 'ग्रह उपादाने' । लोटो रूपम् । दैवस्यानुकूल्यं तेन । व्यतरन्दत्तवन्तः । दत्ता आशीः आशीर्वादो येन सः ।

१ विलम्बि०. २ दंदश०. ३ किराताः; नमोघोरप्रचारे, सुघोरप्र०. ४ ०वलोकनसुखेन. ५ सत्यमेतदेवं तदेनं गृहाण.

णाश्वास्य निःशङ्कं भवदङ्कं समानीतवानस्मि। एनमायुष्मन्तं पितृरूपो भवानभिरक्षतात्' इति। राजा सुहृदापन्निमित्तं शोकं तन्नन्दनविलोकनसुखेन किंचिदधरीकृत्य तमुपहारवर्मनाम्नाऽऽहूय राजवाहनमिव पुपोष।

जनपतिरेकस्मिन्पुण्यदिवसे तीर्थस्नानाय पक्कणनिकटमार्गेण गच्छन्नबलया कयाचिदुपलालितमनुपमशरीरं कुमारं कंचिदवलोक्य कुतूहलाकुलस्तामपृच्छत्—'भामिनि रुचिरमूर्तिः सराजगुणसंपूर्तिरसावर्भको भवदन्वयसंभवो न भवति। कस्य नयनानन्दनः, निमित्तेन केन भवदधीनो जातः, कथ्यतां याथातथ्येन त्वया' इति। प्रणतया तया शबर्या सलीलमलापि—'राजन् आत्मपल्लीसमीपे पदव्यां वर्तमानस्य शक्रसमानस्य मिथिलेश्वरस्य सर्वस्वमपहरति शबरसैन्ये मद्दयितेनापहृत्य कुमार एष मह्यमर्पितो व्यवर्धत।' तदवधार्य कार्यज्ञो राजा मुनिकथितं द्वितीयं राजकुमारमेव निश्चित्य सामदानाभ्यां तामनुनीयापहारवर्मेत्याख्याय देव्यै 'वर्धय' इति समर्पितवान्।

कदाचिद्वामदेवशिष्यः सोमदेवशर्मा नाम कंचिदेकं बालकं राज्ञः पुरो निक्षिप्याभाषत—'देव रामतीर्थे स्नात्वा प्रत्यागच्छता

शिशिरं शीतं च तदुदकं च तदादिर्यस्मिंस्तेन। निःशङ्कमिति क्रियाविशेषणम्। भवदङ्कं भवन्निकटम्। अभिरक्षतात् 'तुह्योस्तातङ्ङाशिष्यन्यतरस्याम्' इति तातङ्। सुहृदः आपन्निमित्तं यस्य तम्। तस्य सुहृदो नन्दनस्तन्नन्दनः। अधरीकृत्य लघूकृत्य। पुपोष वृद्धिं निनाय। **जनपतिरिति**। पुण्यदिवसे पर्वणि। पक्कणः शबरालयः। उपलालितं प्रेमविभृतम्। अनुपमं शरीरं यस्य तम्। कुतूहलेन कौतुकेनाकुलो व्याप्तः। भामिनि कोपने। 'कोपना सैव भामिनी' इत्यमरः। अत्र तु केवलस्त्रीवाचकोऽयं शब्दः कोपकारणाभावात्। रुचिरा सुन्दरा। राज्ञो गुणास्तेषां संपूर्तिस्तत्सहितः। अन्वयो वंशः। नयने आनन्दयति तथा। कस्य सूनुरित्यर्थः। निमित्तेन कारणेन। भवदधीनस्त्वदायत्तः। याथातथ्येन तत्त्वतः। प्रकर्षेण नता तया। पल्ली घोषः। पदव्यां मार्गे। शक्र इन्द्रः। मिथिलेश्वरस्य मिथिलाधिपस्य प्रहारवर्मणः। दयितेन वल्लभेन। भर्त्रेत्यर्थः। व्यवर्धत वृद्धिं प्राप्तः। अवधार्य विमृश्येत्यर्थः। कार्यं जानातीति तथा। साम च दानं च ताभ्याम्। अनुनीय संतोष्य। आख्याय नाम कृत्वा। **कदाचिदिति**। रामतीर्थे एतन्नाम्नि क्षेत्रे। प्रत्यागच्छता प्रतिनिवर्तमानेन।

१ भवन्निकमानीत०. २ संकुचीकृत्य. ३ सुराज०. ४ व्यवर्ध्यत.

मया काननावनौ वनितया कयाऽपि धार्यमाणमेनमुज्ज्वलाकारं कुमारं विलोक्य सादरमभाणि—'स्थविरे का त्वम्। एतस्मिन्नटवीमध्ये बालकमुद्वहन्ती किमर्थमायासेन भ्रमसि' इति। वृद्धयाऽप्यभाषि—'मुनिवर, कालयवननाम्नि द्वीपे कालगुप्तो नाम धनाढ्यो वैश्यवरः कश्चिदस्ति। तन्नन्दिनीं नयनानन्दकारिणीं सुवृत्तां नामैतस्माद् द्वीपादागतो मगधनाथमन्त्रिसंभवो रत्नोद्भवो नाम रमणीयगुणालयो भ्रान्तभूवलयो मनोहारी व्यवहार्युपयम्य सुवस्तुसंपदा श्वशुरेण संमानितोऽभूत्। कालक्रमेण नताङ्गी गर्भिणी जाता। ततः सोदरविलोकनकुतूहलेन रत्नोद्भवः कथंचिच्छ्वशुरमनुनीय चपललोचनयाऽनया सह प्रवहणमारुह्य पुष्पपुरमभिप्रतस्थे। कल्लोलमालिकाभिहतः पोतः समुद्राम्भस्यमज्जत्। गर्भभरालसां तां ललनां धात्रीभावेन कल्पिताऽहं कराभ्यामुद्वहन्ती फलकमेकमधिरुह्य दैवगत्या तीरभूमिमगमम्। सुहृज्जनपरिवृतो रत्नोद्भवस्तत्र निमग्नो वा केनाप्युपायेन तीरमगमद्वा न जानामि। क्लेशस्य परां काष्ठामधिगता सुवृत्ताऽस्मिन्नटवीमध्येऽद्य सुतमसूत। प्रसववेदनया विचेतना सा प्रच्छायशीतले तरुतले निवसति। विजने वने

काननावनौ अरण्यभुवि। उज्ज्वलो दीप्तिमान् आकारो यस्य तम्। स्थविरे वृद्धे इति संबुद्धिः। अटवी अरण्यम्। आयासेन कष्टेन। मुनिवर ऋषिश्रेष्ठ। धनाढ्यो धनसमृद्धः। वैश्यवरो वणिक्श्रेष्ठः। नन्दिनीं कन्याम्। नयनयोरानन्दं करोति तथा। मन्त्रिसंभवो मन्त्रिणः पुत्रः। रमणीयगुणानामालयो वसतिस्थानम्। भ्रान्तं भुवो वलयं चक्रं येनेति तथा। मनोहारी अभिराम इत्यर्थः। व्यवहारी वाणिज्यकर्ता। उपयम्य विवाह्य। सुवस्तुसंपदा सुवस्तूनां शोभनवस्तूनां संपदा समृद्ध्या। संमानितः पूजितः। सत्कृत इति यावत्। नतान्यवनम्राण्यङ्गानि यस्यास्तथा। सोदरः समानोदर्यः। चपले लोचने यस्यास्तया। प्रवहणं नावम्। अभिप्रतस्थे इत्यत्र 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम्। कल्लोलाः महातरङ्गाः तेषां मालिकाः परंपरास्ताभिरभिहतस्ताडितः। पोतो नौः। ललना स्त्री। धात्रीभावेनोपमातृत्वेन। परां काष्ठामतिशयम्। प्रसवकाले या वेदना तया। विचेतना निःसंज्ञा। नष्टचेष्टेत्यर्थः। प्रच्छायेन शीतले। 'गोस्त्रियोरुपसर्जनस्य'

१ वनितया तया. २ गर्भभरानाम्, गर्भविलासालसाम्.

स्थातुमशक्यतया जनपदगामिनं मार्गमन्वेष्टुमुद्युक्तया मया विवशायास्तस्याः समीपे बालकं निक्षिप्य गन्तुमनुचितमिति कुमारोऽप्यानायि' इति । तस्मिन्नेव क्षणे वन्यो वारणः कश्चिददृश्यत । तं विलोक्य भीता सा बालकं निपात्य प्राद्रवत् । अहं समीपलतागुल्मके प्रविश्य परीक्षमाणोऽतिष्ठम् । निपतितं बालकं पल्लवकवलमिवाददति गजपतौ कण्ठीरवो भीमरवो महाग्रहेण न्यपतत् । भयाकुलेन दन्तावलेन झटिति वियति समुत्पात्यमानो बालको न्यपतत् । चिरायुष्मत्तया स चोन्नततरुशाखासमासीनेन वानरेण केनचित्पक्वफलबुद्ध्या परिगृह्य फलेतरतया विततस्कन्धमूले निक्षिप्तोऽभूत् । सोऽपि मर्कटः क्वचिदगात् । बालकेन सत्त्वसंपन्नतया सकलक्लेशसहेनाभावि । केसरिणा करिणं निहत्य कुत्रचिदगामि । लतागृहान्निर्गतोऽहमपि तेजःपुञ्जं बालकं शनैरवनिरुहादवतार्य वनान्तरे वनितामन्विष्याविलोक्यैनमानीय गुरवे निवेद्य तन्निदेशेन भवन्निकटमानीतवानस्मि' इति । सर्वेषां सुहृदामेकदैवानुकूलदैवाभावेन महदाश्चर्यं बिभ्राणो राजा रत्नोद्भवः कथमभवदिति चिन्तयंस्तन्नन्दनं पुष्पोद्भवनामधेयं विधाय तदुदन्तं

इति ह्रस्वः । विजने निर्जने । जनपदं देशं गच्छतीति तथाभूतम् । विवशा विह्वला । विक्लवेत्यर्थः । वने भवो वन्यः । वारणो गजः । निपात्य अधः पातयित्वा । प्राद्रवदधावत् । द्रुतगत्याऽपासरदित्यर्थः । गुल्मके स्तम्बे । स्वार्थेऽल्पार्थे वा कः । परीक्षमाणः परित ईक्षमाणः । कवलं ग्रासम् । कण्ठीरवः सिंहः । भीमो भयंकरो रवो यस्य तथा । महाग्रहेण महताऽऽवेशेन । चिरायुष्मत्तया दीर्घायुषो भावस्तया । उन्नतस्योच्छ्रितस्य । 'आसन्नोन्नत–' इति पाठे आसन्नः समीपवर्ती । पक्वफलबुद्ध्या पक्वं फलं किमप्येतदिति भ्रान्त्या । फलादितरदिति दृष्ट्वा । वितते विस्तृते स्कन्धस्य प्रकाण्डस्य मूले । सत्त्वेन संपन्नस्तस्य भावस्तया । सकलक्लेशसहेनाखिलक्लेशसहिष्णुना । कुत्रचिदनिर्दिष्टे स्थले । लतागृहात्कुञ्जात् । अवन्यां रोहतीत्यवनिरुहो वृक्षस्तस्मात् । अन्यद्वनं वनान्तरं तस्मिन् । एनम् । अन्वादेश इदं रूपम् । निदेशेनाज्ञया । **अनुकूलेति** । दैवस्य प्रातिकूल्यनेत्यर्थः । महत् आश्चर्यम् इति भिन्ने पदे । **रत्नोद्भव इति** । रत्नोद्भवस्य का गतिः । किमभवदित्यर्थः । नामधेयं नाम । 'भागरूपनामभ्यो धेयः' इति धेयप्रत्ययः । विधाय कृत्वा । उदन्तं वार्ताम् ।

---

१ चिरायुष्यतयाऽऽसन्नोन्नत. २ मनीषया. ३ तं नन्दनम्.

व्याख्याय सुश्रुताय विषादसंतोषावनुभवंस्तदनुजतनयं समर्पितवान् ।

अन्येद्युः कंचन बालकमुरसि दधती वसुमती वल्लभमभिगता । तेन 'कुत्रत्योऽयम्' इति पृष्टा समभाषत—'राजन् अतीतायां रात्रौ काचन दिव्यवनिता मत्पुरतः कुमारमेकं संस्थाप्य निद्रामुद्रितां मां विबोध्य विनीताऽब्रवीत्—'देवि त्वन्मन्त्रिणो धर्मपालनन्दनस्य कामपालस्य वल्लभा यक्षकन्याऽहं तारावली नाम नन्दिनी मणिभद्रस्य । यक्षेश्वरानुमत्या मदात्मजमेतं भवत्तनूजस्याम्भोनिधिवलयवेष्टितक्षोणीमण्डलेश्वरस्य भाविनो विशुद्धयशोनिधे राजवाहनस्य परिचर्याकरणायानीतवत्यस्मि । त्वमेनं मनोजसंनिभमभिवर्धय' इति । विस्मयविकसितनयनया मया सविनयं सत्कृता स्वक्षी यक्षी साऽप्यदृश्यतामयासीत्' इति । कामपालस्य यक्षकन्यासंगमे विस्मयमानमानसो राजहंसो रञ्जितमित्रं सुमित्रं मन्त्रिणमाहूय तदीयभ्रातृपुत्रमर्थपालं विधाय तस्मै सर्वं वार्तादिकं व्याख्यायादात् ।

ततः परस्मिन्दिवसे वामदेवान्तेवासी तदाश्रमवासी समाराधितदेव-

व्याख्याय कथयित्वा । रत्नोद्भवस्य नाशाद्विषादः तन्नन्दनस्य च लाभात्संतोषः । अनु पश्चाज्जातोऽनुजः । **अन्येद्युरिति** । अन्येद्युः अपरेद्युः । 'सद्यः—परुत्परार्यैषमः—' इति निपातः । उरसि दधती वक्षसि धारयन्ती । अभ्यस्तत्वान्नुमभावः । कुत्र भवः कुत्रत्यः । 'अव्ययात्त्यप्' इति त्यप् । अतीतायां गतायाम् । दिवि भवा दिव्या सा चासौ वनिता । निद्रया मुद्रितां निमीलितनेत्राम् । विनीता नम्रा । यक्षेश्वरः कुबेरः । अम्भोनिधिः समुद्रः । स एव वलयः कटकस्तेन वेष्टितं क्षोणीमण्डलं धरामण्डलं तस्येश्वर ईशिता तस्य । भाविनो नाद्यापि भूतस्य । विशेषेण शुद्धो यशसो निधिर्यस्य तस्य । परिचर्या शुश्रूषा । मनोजः कामः । संनिभः सदृशः । विस्मयेनाश्चर्येण विकसिते नयने नेत्रे यस्यास्तया । सविनयमिति क्रियाविशेषणम् । 'सविनया' इति पाठे यक्षीविशेषणम् । सत्कृता संमानिता । स्वक्षी शोभननयना । यक्षकन्यया संगमस्तस्मिन् । विस्मयमानं मानसं यस्य सः । रञ्जितानि मित्राणि येन तम् । आहूय आकार्य । आनाय्येत्यर्थः । **तत इति** । अन्तेवासी शिष्य. । 'छात्रान्तेवासिनौ शिष्ये' इत्यमरः । अन्ते वसतीति तथा । 'शयवास—' इत्यलुक् । समारा-

१ यक्षकान्ता. २ सविनया.

कीर्तिं निर्भर्त्सितमारमूर्तिं कुसुमसुकुमारं कुमारमेकमवगमय्य नरपतिमवादीत्—'देव तीर्थयात्राप्रसङ्गेन कावेरीतीरमागतोऽहं विलोलालकं बालकं निजोत्सङ्गतले निधाय रुदतीं स्थविरामेकां विलोक्यावोचम्—'स्थविरे का त्वम्, अयमर्भकः कस्य नयनानन्दकरः, कान्तारं किमर्थमागता, शोककारणं किम्' इति। सा करयुगेन बाष्पजलमुन्मृज्य निजशोकशङ्कूत्पाटनक्षममिव मामवलोक्य शोकहेतुमवोचत्—'द्विजात्मज राजहंसमन्त्रिणः सितवर्मणः कनीयानात्मजः सत्यवर्मा तीर्थयात्राभिलाषेण देशमेनमागच्छत्। स कस्मिंश्चिदग्रहारे कालीं नाम कस्यचिद्भूसुरस्य नन्दिनीं विवाह्य तस्या अनपत्यतया गौरीं नाम तद्भगिनीं काञ्चनकान्तिं परिणीय तस्यामेकं तनयमलभत। काली सासूयमेकदा धात्र्या मया सह बालमेनमेकेन मिषेणानीय तटिन्यामेतस्यामक्षिपत्। करेणैकेन बालमुद्धृत्यापरेण प्लवमाना नदीवेगागतस्य कस्यचित्तरोः शाखामवलम्ब्य तत्र शिशुं निधाय नदीवेगेनोह्यमाना केनचित्तरुलग्नेन कालभोगिनाऽहमदंशि। मदवलम्बीभूतो भूरुहोऽयमस्मिन्देशे तीरमगमत्। गरलस्योद्दीपनतया मयि मृतायामरण्ये कश्चन शरण्यो नास्तीति मया शोच्यते' इति। ततो विषमविषज्वालावलीढावयवा सा धरणीतले न्यपतत्। दयाविष्टहृदयोऽहं

---

धिता लब्धेति यावत् देवकीर्तिर्येन तम्। निर्भर्त्सिता स्वरूपेण मारस्य कंदर्पस्य मूर्तिर्येन तम्। कुसुममिव कुसुमारं पेलवम्। अवगमय्य प्रापय्य। यात्रा गमनम्। प्रसङ्गेन क्रमेण। कावेरी दक्षिणदेशस्था काचिन्नदी। विलोलाश्चञ्चला अलका यस्य तम्। उत्सङ्गोऽङ्कः। कान्तारं महारण्यम्। करयोः युगेन द्वन्द्वेन। बाष्पजलमश्रूणि। निजशोक एव शङ्कुः शल्यं तस्योत्पाटनं तत्र क्षमं समर्थम्। कनीयान्। 'युवाल्पयोः कनन्यतरस्याम्' इति कनादेशः। अग्रहारे नृपात्प्रतिग्रहेण लब्धभूमिप्रदेशे ग्रामादौ वा। भूसुरस्य द्विजस्य। धात्र्युपमाता। मिषेण व्याजेन। तटिन्यां नद्याम्। प्लवमाना तरन्ती। भोगी सर्पः। अदंशि। कर्मणि लुङ्। भूरुहो वृक्षः। गरलस्य विषस्य। उद्दीपनतया प्रबलतरतया। शरण्यो रक्षिता। विषमं दुर्धरम्। अविषह्यमित्यर्थः। विषमविषस्य ज्वालाभिरवलीढा व्याप्ता अवयवा यस्याः सा।

---

१ उन्मृज्य. २ अम्भसि प्लवमाना. ३ विषोल्बणज्वाला.

मन्त्रबलेन विषव्यवस्थामपनेतुमक्षमः समीपकुञ्जेष्वोषधिविशेषमन्विष्य प्रत्यागतो व्युत्क्रान्तजीवितां तां व्यलोकयम्[1] । तदनु तस्याः पावकसंस्कारं विरच्य शोकाकुलचेता बालमेनमगतिमादाय सत्यवर्मवृत्तान्तश्रवणवेलाया तन्निवासाग्रहारनामधेयस्याश्रुततया तदन्वेषणमशक्यमित्यालोच्य भवदमात्यतनयस्य भवानेवाभिरक्षितेति भवन्तमेनमनयम्' इति । तन्निशम्य सत्यवर्मस्थितेः सम्यगनिश्चिततया खिन्नमानसो नरपतिः सुमतये मन्त्रिणे सोमदत्तं नाम तदनुजतनयमर्पितवान् । सोऽपि सोदरमागतमिव मन्यमानो विशेषेण पुपोष ।

एवं मिलितेन कुमारमण्डलेन बालकेलीरनुभवन्नधिरूढानेकवाहनो राजवाहनोऽनुक्रमेण चौलोपनयनादिसंस्कारजामतलभत । ततः सकललिपिज्ञानं निखिलदेशीयभाषापाण्डित्यं षडङ्गसहितवेदसमुदायकोविदत्वं काव्यनाटकाख्यानकाख्यायिकेतिहासचित्रकथासहितपुराणगणनैपुण्यं धर्मशब्दज्योतिस्तर्कमीमांसादिसमस्तशास्त्रनिकरचातुर्यं कौटिल्यकामन्दकीयादिनीतिपटलकौशलं वीणाद्यशेषवाद्यदाक्ष्यं संगीत-

---

दयया आविष्टं हृदयं यस्य । मन्त्रबलेन मन्त्रसामर्थ्येन । अपनेतुं दूरीकर्तुम् । कुञ्जेषु निकुञ्जेषु । व्युत्क्रान्तजीवितां मृताम् । तदनु ततः । पावकसंस्कारं विरच्याग्निसंस्कारं कृत्वा । चिताधिरोपणेन तस्याः शरीरमग्निसात्कृत्वेत्यर्थः । अगतिमशरण्यम् । अनाथमित्यर्थः । **एवमिति** । कुमारमण्डलेन कुमारसमुदायेन । केलीः क्रीडाः । अधिरूढान्यनेकवाहनानि येन सः । चौलं चोपनयनं च चौलोपनयने । एते आदी यस्य तत्संस्कारजातम् । तत्र चौलं चूडाकर्म । 'तृतीये वर्षे चौलं यथाकुलधर्मं वा' इति सूत्रम् । जन्मप्रभृति तृतीये वर्षे कुलधर्ममादृत्यान्यस्मिन्वा केशसंनिवेशानां करणम् । उपनयनं प्रसिद्धम् । लिपिरक्षरसंस्थानं तस्य ज्ञानम् । षडङ्गसहितस्य वेदसमुदायस्य कोविदत्वं ज्ञातृत्वम् । 'शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः । छन्दसां विचितिश्चैव षडङ्गो वेद उच्यते ॥' इति । आख्यानकानि चूर्णकानि । आख्यायिकाः बृहत्कथाद्याः । इतिहासः पुरावृत्तकथनम् । चित्रकथा रम्यकथा । एतैः सर्वैः सहिते पुराणगणे ब्राह्माग्न्यादिपुराणसमुदाये नैपुण्यम् । धर्मशास्त्रं स्मृतयः । शब्दशास्त्रं व्याकरणम् । ज्योतिःशास्त्रं प्रसिद्धम् । तर्कशास्त्रं न्यायः । मीमांसा पूर्वोत्तरभेदेन प्रसिद्धं शास्त्रम् । निकरः समूहः । कौटिल्यश्चाणक्यस्तत्प्रणीतम् ।

१ प्रत्यागच्छन्व्युत्क्रान्त.

साहित्यहारित्वं मणिमन्त्रौषधादिमायाप्रपञ्चचञ्चुत्वं मातङ्गतुरङ्गादिवाहनारोहणपाटवं विविधायुधप्रयोगचणत्वं चौर्यदुरोदरादिकपटकलाप्रौढत्वं च तत्तदाचार्येभ्यः सम्यग्लब्ध्वा यौवनेन विलसन्तं कृत्येष्वनलसं तं कुमारनिकरं निरीक्ष्य महीवल्लभः सः 'अहं शत्रुजनदुर्लभः' इति परमानन्दममन्दमविन्दत ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते कुमारोत्पत्तिर्नाम प्रथम उच्छ्वासः ।

---

## द्वितीयोच्छ्वासः ।

अथैकदा वामदेवः सकलकलाकुशलेन कुसुमसायकसंशयितसौन्दर्येण कल्पितसोदर्येण साहसोपहसितकुमारेण सुकुमारेण जयध्वजातपवारणकुलिशाङ्कितकरेण कुमारनिकरेण परिवेष्टितं राजानमानतशिरसं समभिगम्य तेन तां कृतां परिचर्यामङ्गीकृत्य निजचरणकमलयुगलमिलन्मधुकरायमाणकाकपक्षं विदलिष्यमाण-

---

कामन्दकीयमिति प्रसिद्धम् । दाक्ष्यं दक्षता । साहित्यं शिल्पं नृत्यादिकलाः । हारित्वं मनोहारित्वम् । मायाप्रपञ्चः कपटप्रबन्धः । चञ्चुत्वं कुशलत्वम् । 'तेन वित्तश्चञ्चुप्चणपौ' इति चञ्चुप् । चणत्वं कौशलम् । 'तेन वित्त–' इति चणप् । दुरोदरं द्यूतम् । तत्तदाचार्येभ्यस्तेषु तेषु शास्त्रेषु निष्णातेभ्य आचार्येभ्य इत्यर्थः । विलसन्तं शोभमानम् । अनलसमुद्यमशीलम् । महीवल्लभो राजा राजहंसः ।

**इति श्रीदशकुमारचरितपूर्वपीठिकाटीकायां पदर्दीपिकाभिधायां प्रथम उच्छ्वासः ।**

**अथेति** । सकलकलासु कुशलस्तेन । कुसुमसायकः कामः । संशयितं संशयं प्रापितम् । कल्पितं सोदर्यं बन्धुता येन तथा । साहसेनोपहसितो धिक्कृतः कुमारो गुहो येन सः । जयध्वजः पताका । आतपवारणं छत्रम् । कुलिशं वज्रम् । एतैः रेखामात्रैरङ्कितौ करौ यस्य तेन । परिवेष्टितं परिवृतम् । निजौ वामदेवस्येत्यर्थः चरणौ तावेव कमले तयोर्युगलं तस्मिन्मिलन्तः संयुक्ता ये मधुकरा इवाचरन्तः काकपक्षाः शिखण्डकाः यस्य तम् । विदलिष्यमाणा उद्धरिष्यमाणा विपक्षाः शत्रवो

---

१ पाटवम्, चुञ्चुत्वम्. २ चतुरत्वम्; चरणत्वम्. ३ कलशाङ्कित. ४ गलन्म०.

विपक्षं कुमारचयं गाढमालिङ्ग्य मितसत्यवाक्येन विहिताशीर-भ्यभाषत—'भूवल्लभ भवदीयमनोरथफलमिव समृद्धलावण्यं तारुण्यं नुतमित्रो भवत्पुत्रोऽनुभवति । सहचरसमेतस्य नूनमेतस्य दिग्विजयारम्भसमय एषः । तदस्य सकलक्लेशसहस्य राजवाहनस्य दिग्विजयप्रयाणं क्रियताम्' इति । कुमारा माराभिरामा रामाद्यपौरुषा रुषा भस्मीकृतारयो रयोपहसितसमीरणा रणाभियानेन यानेनाभ्युदयाशंसं राजानमकार्षुः । तत्साचिव्यमितरेषां विधाय समुचितां बुद्धिमुपदिश्य शुभे मुहूर्ते सपरीवारं कुमारं विजयाय विससर्ज ।

राजवाहनो मङ्गलसूचकं शुभशकुनं विलोकयन्देशं कंचिदतिक्रम्य विन्ध्याटवीमध्यमविशत् । तत्र हेतिहतिकिणाङ्कं कालायसकर्कशकायं यज्ञोपवीतेनानुमेयविप्रभावं व्यक्तकिरातप्रभावं लोचनपरुषं कमपि पुरुषं ददर्श । तेन विहितपूजनो राजवाहनो-

---

येन तम् । चयं समुदायम् । गाढं निर्भरम् । मितं च सत्यं च यद्वाक्यं तेन । 'सत्यं मृदु प्रियम्' इति सत्यशब्दप्रयोगः । विहिता आशीराशीर्वादो येन सः । भवदीयानां मनोरथानामिच्छानां फलम् । समृद्धं परिपूर्णं लावण्यं यस्मिन् । नुतानि स्तुतानि स्तुत्यानि वा मित्राणि येन यस्य वा सः । दिशां विजयस्तस्यारम्भस्तस्य समयः कालः । सकलक्लेशसहस्य । सत्त्वशीलसंपन्नत्वात् । **दिग्विजयेति ।** दिग्विजयं कर्तुमयं प्रहीयतामित्यर्थः । मारः कंदर्प इवाभिरामाः सुन्दराः । रामो दाशरथिः स आद्यो येषां ते रामाद्यास्तेषां पौरुषं पराक्रम इव पौरुषं येषां ते । रयेण वेगेन । आवेशेनेति यावत् । उपहसितो न्यक्कृतः समीरणो वायुर्यैः । रणमभियातीत्येतादृशेन । यानेन गमनेन । अभ्युदयस्य वृद्धेराशंसा विद्यते यस्य तम् । इतरेषां कुमाराणाम् । विजयाय । विजयं कर्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । **राजवाहन इति ।** मङ्गलं शुभोदर्कं सूचयति तथा । शुभं शकुनं निमित्तम् । हेतिभिः शस्त्रैर्या हतिः प्रहारस्तस्य किणा व्रणजचिह्नानि तेषामङ्का यस्मिन् । कालायसं लोहं तदिव कर्कशः कठिनः कायो यस्य । यज्ञस्य यज्ञार्थं वा उपवीतं यज्ञोपवीतम् । अनुमातुं योग्यो विप्रभावो विप्रत्वं यस्येति तथा । व्यक्तः स्पष्टः किरातस्य वनचरस्येव प्रभावो यस्य । लोचनयोः परुषं कर्कशम् । दुर्दर्शनमिति यावत् ।

---

१ अमित. २ सहनस्य. ३ रामास्त्र, रामाद्य.

ऽभाषत—'ननु मानव जनसङ्गरहिते मृगहिते घोरप्रचारे कान्तारे विन्ध्याटवीमध्ये भवानेकाकी किमिति निवसति । भवदंसोपनीतं यज्ञोपवीतं भूसुरभावं द्योतयति । हेतिहेतिभिः किरातरीतिरनुमीयते । कथय किमेतत्' इति । 'तेजोमयोऽयं मानुषमात्रपौरुषो नूनं न भवति' इति मत्वा स पुरुषस्तद्वयस्यमुखान्नामजनने विज्ञाय तस्मै निजवृत्तान्तमकथयत्—'राजनन्दन केचिदस्यामटव्यां वेदादिविद्याभ्यासमपहाय निजकुलाचारं दूरीकृत्य सत्यशौचादिधर्मव्रातं परिहृत्य किल्बिषमन्विष्यन्तः पुलिन्दपुरोगमास्तदन्नमुपभुञ्जाना बहवो ब्राह्मणब्रुवा निवसन्ति । तेषु कस्यचित्पुत्रो निन्दापात्रचारित्रो मातङ्गो नामाहं सह किरातबलेन जनपदं प्रविश्य ग्रामेषु धनिनः स्त्रीबालसहितानानीयाटव्यां बन्धने निधाय तेषां सकलधनमपहरन्नुद्धृत्य वीतदयो व्यचरम् । कदाचिदेकस्मिन्कान्तारे मदीयसहचरगणेन जिघांस्यमानं भूसुरमेकमवलोक्य दयायत्तचित्तोऽब्रवम्—'ननु पापाः न हन्तव्यो ब्राह्मणः' इति । ते रोषारुणनयना मां बहुधा निरभर्त्सयन् । तेषां

विहितं कृतं पूजनं सत्कारो यस्य सः । जनसङ्गेन रहिते विवर्जिते । मृगेभ्यो हितमनुकूलं तस्मिन् । घोरः प्रचारः संचारो यस्मिन्निति तथा । एकाक्यसहायः । 'एकादाकिनिच्चासहाये' इत्याकिनिच्प्रत्ययः । अंसो भुजशिरः । उपनीतं गतं प्राप्तम् । भूसुरभावं विप्रत्वम् । हेतिहतिभिः शस्त्रप्रहारचिह्नैः । किरातरीतिर्वनचरवृत्तिः । अनुमीयते उह्यते तर्क्यते । तेजोमयस्तेजःप्रचुरः । 'तत्प्रकृतवचने मयट्' इति मयट् । मानुषमात्रं मानुषप्रमाणं पौरुषं पराक्रमो यस्येति तथा । 'प्रमाणे द्वयसज्दघ्न—' इति प्रमाणार्थे मात्रच् । वेदादि । आदिशब्देन स्मृतिपुराणादीनि गृह्यन्ते । निजकुलाचारं विप्रविहितधर्मान् । सत्यमवितथभाषित्वम् । शौचं शुचित्वम् । आदिशब्देन दयादमक्षान्तिशान्त्यादि गृह्यते । धर्मव्रातं कुलधर्मसमुदायम् । किल्बिषं पापम् । पुलिन्दा म्लेच्छजातिष्वेका जातिः । ते पुरोगमा नेतारो येषां ते । उपभुञ्जाना भक्षयन्तः । ब्राह्मणब्रुवा ब्राह्मणाधमाः । कुत्सनार्थेऽत्र ब्रुवपदम् । निन्दापात्रं गर्ह्यं चारित्रं यस्यैतादृशः । वीता दया यस्य सः । जिघांस्यमानं हन्तुमिष्यमाणम् । निरभर्त्सयंस्तर्जितवन्तः ।

१ हेतिततिभिः. २ निन्दामात्रचरित्रः. ३ उद्धृत्य.

भाषणपारुष्यमसहिष्णुरहमवनिसुररक्षणाय चिरं प्रयुध्य तैरभिहतो गतजीवितोऽभवम् । ततः प्रेतपुरीमुपेत्य तत्र देहधारिभिः पुरुषैः परिवेष्टितं सभामध्ये रत्नखचितसिंहासनासीनं शमनं विलोक्य तस्मै दण्डप्रणाममकरवम् । सोऽपि मामवेक्ष्य चित्रगुप्तं नाम निजामात्यमाहूय तमवोचत्—'सचिव नैषोऽमुष्य मृत्युसमयः । निन्दितचरितोऽप्ययं महीसुरनिमित्तं गतजीवितोऽभूत् । इतः प्रभृति विगलितकल्मषस्यास्य पुण्यकर्मकरणे रुचिरुदेष्यति । पापिष्ठैरनुभूयमानमत्र यातनाविशेषं विलोक्य पुनरपि पूर्वशरीरमनेन गम्यताम्' इति । चित्रगुप्तोऽपि तत्र तत्र संतप्तेष्वायसस्तम्भेषु बध्यमानान्, अत्युष्णीकृते विततशरावे तैले[1] निक्षिप्यमाणान्, लगुडैर्जर्जरीकृतावयवान्, निशितटङ्कैः परितक्ष्यमाणानपि दर्शयित्वा पुण्यबुद्धिमुपदिश्य माममुञ्चत् । तदेव पूर्वशरीरमहं प्राप्तो महाटवीमध्ये शीतलोपचारं रचयता[2] महीसुरेण परीक्ष्यमाणः शिलायां शयितः क्षणमतिष्ठम् । तदनु विदितोदन्तो मदीयवंश[3]बन्धुगणः सहसाऽऽगत्य मन्दिरमानीय मामपक्रान्तव्रणमकरोत् । द्विजन्मा कृतज्ञो मह्यमक्षरशिक्षां विधाय विविधागमतन्त्रमाख्याय कल्मषक्षयकारणं सदाचारमुपदिश्य ज्ञानेक्षणगम्यमानस्य शशिखण्डशेखरस्य

---

भाषणपारुष्यं कठोरवचांसि । असहिष्णुः सोढुमसमर्थः । 'अलंकृञ्निराकृञ्–' इतीष्णुच् । प्रेतपुरीं यमनगरीम् । रत्नैः खचितं प्रत्युप्तं यत्सिंहासनं तत्रासीनम् । शमनं यमम् । दण्डप्रणामं दण्डवद्भूमौ शयित्वा प्रणाममित्यर्थः । विगलितं नष्टं कल्मषं पापं यस्य तस्य । रुचिः प्रीतिः । उदेष्यत्युत्पत्स्यते । अतिशयेन पापाः पापिष्ठाः । 'अतिशायने तमबिष्ठनौ' इतीष्ठन् । अयस इमे आयसाश्च ते स्तम्भास्तेषु । विततो विस्तीर्णो यः शरावः पात्रविशेषः । 'कढई' इति भाषायाम् । जर्जरीकृताः । अर्थात्प्रहारैः । निशितास्तीक्ष्णास्तेजिताष्टङ्काः पाषाणदारणास्तैः परितक्ष्यमाणान्परितस्तक्षणेन तनूक्रियमाणान् । रचयता कुर्वता । विदित उदन्तो वार्ता येन तथा । अपक्रान्ताश्चिकित्सिता व्रणाः प्रहारस्थानानि यस्य तादृशः । अक्षराणां शिक्षोपदेशः । विविधागमानां शास्त्राणां तन्त्रं सिद्धान्तम् । कल्मषस्य पापस्य यः क्षयस्तस्य कारणं निमित्तम् । सदाचारं सद्भिरुपदर्शितं मार्गम् । ज्ञानेक्षणेन न तु चर्मचक्षुषा गम्यमान आसाद्यः प्राप्यस्तस्य । शशिनः खण्डः कला सा शेखरो-

---

१ शरावतैले. २ रचयित्वा. ३ वंशेति नास्ति क्वचित्.

पूजाविधानमभिधाय पूजां मत्कृतामङ्गीकृत्य निरगात् । तदारभ्याहं किरातकृतसंसर्गं बन्धुकुलवर्गमुत्सृज्य सकललोकैकगुरुमिन्दुकलावतंसं चेतसि स्मरन्नस्मिन्कानने दूरीकृतकलङ्को वसामि । देव भवते विज्ञापनीयं रहस्यं किंचिदस्ति । आगम्यताम् ' इति । स वयस्यगणादपनीय रहसि पुनरेनमभाषत—' राजन्, अतीते निशान्ते गौरीपतिः स्वप्नसंनिहितो निद्रामुद्रितलोचनं विबोध्य प्रसन्नवदनकान्तिः प्रश्रयानतं मामवोचत्—'मातङ्ग, दण्डकारण्यान्तरालगामिन्यास्तटिन्यास्तीरभूमौ सिद्धसाध्याराध्यमानस्य स्फटिकलिङ्गस्य पश्चादद्रिपतिकन्यापदपङ्क्तिचिह्नितस्याश्मनः सविधे विधेराननमिव किमपि बिलं विद्यते । तत्प्रविश्य तत्र निक्षिप्तं ताम्रशासनं शासनं विधातुरिव समादाय विधिं तदु¹पदिष्टं² दिष्टविजयमिव विधाय पातालोकाधीश्वरेण भवता भवितव्यम् । भवत्साहाय्यकरो राजकुमारोऽद्य श्वो वा समागमिष्यति ' इति । तदादेशानुगुणमेव भवदागमनमभूत् । साधनाभिलाषिणो मम तोषिणो रचय साहाय्यम् ' इति । ' तथा ' इति राज-

ऽवतंसो यस्य तस्यं । धूर्जटेरित्यर्थः । विधानं विधिम् । अभिधाय कथयित्वा । तदारभ्य ततः प्रभृति । किरातैः कृतः संसर्गो येन तथा । सकललोकानामेकं मुख्यं गुरुम् । इन्दुकला अवतंसः शिरोभूषणं यस्य तम् । दूरीकृतकलङ्को निष्पापः । रहस्यं गुह्यम् । रहस्येकान्ते । निशाया अन्ते प्रत्यूषे । संनिहितः समीपमागतः । निद्रया मुद्रिते निमीलिते लोचने यस्य तम् । प्रश्रयेण विनयेनानतं प्रह्वम् । अन्तरालं मध्यम् । तटिन्या नद्याः । सिद्धाः साध्याश्च तैराराध्यमानस्य पूज्यमानस्य । 'पिशाचो गुह्यकः सिद्धः,' 'महाराजिकसाध्याश्च' इत्युभयत्राप्यमरः । तत्र सिद्धा देवयोनिविशेषाः, साध्या गणदेवताः । स्फटिकलिङ्गस्य स्फटिकनिर्मितलिङ्गस्य विशिष्टाकृतेः शंकरशरीरस्य । अद्रिपतिर्हिमालयस्तत्कन्या पार्वती तस्याः पदपङ्क्त्या चिह्नितस्य अश्मनो प्राव्णः । सविधे समीपे । निक्षिप्तं स्थापितम् । ताम्रशासनं ताम्रपट्टम् । शासनमाज्ञा । विधिं कल्पम् । तदुपदिष्टं तेन ताम्रशासनेनोपदिष्टम् । ' तदुपरिष्ठम् ' इति पाठे तदुपरि तिष्ठतीत्यसौ तम् । दिष्टमदृष्टं तस्य विजयः । अधीश्वरः । ' राजा तु प्रणताशेषसामन्तः स्यादधीश्वरः ' इत्यमरः । अनुगुणमनुरूपम् । साधनमुपायस्तमभिलषतीति तथा । तोषिण आनन्दयुक्तस्य । रचय कुर्वित्यर्थः ।

१ एनं. २ तदुपरिष्ठम्.

वाहनः साकं मातङ्गेन नमितोत्तमाङ्गेन विहायार्धरात्रे निद्रापरतन्त्रं मित्र-गणं वनान्तरमवाप । तदनु तदनुचराः कल्ये. साकल्येन राजकुमारम-नवलोकयन्तो विषण्णहृदयास्तेषु तेषु वनेषु सम्यगन्विष्यानवेक्षमाणा एतदन्वेषणमनीषया देशान्तरं चरिष्णवोऽतिसहिष्णवो निश्चितपुनःसंगम-संकेतस्थानाः परस्परं वियुज्य ययुः ।

लोकैकवीरेण कुमारेण रक्ष्यमाणः संतुष्टान्तरङ्गो मातङ्गोऽपि बिलं शशिशेखरकथिताभिज्ञानपरिज्ञातं निःशङ्कं प्रविश्य गृहीत-ताम्रशासनो रसातलं पथा तेनैवोपेत्य तत्र कस्यचित्पत्तनस्य निकटे केलीकाननकासारस्य विततसारसस्य समीपे नानाविधेनेशशासन-विधानोपपादितेन हविषा होमं विरच्य प्रत्यूहपरिहारिणि सविस्मयं विलोकयति राजवाहने समिदाज्यसमुज्ज्वलिते ज्वलने पुण्यगेहं देहं मन्त्रपूर्वकमाहुतीकृत्य तडित्समानकान्तिं दिव्यां तनुमलभत । तदनु मणिमयमण्डनमण्डलमण्डिता सकललोकललनाकुलललामभूता

---

साकमित्यव्ययं सहेत्यर्थे । नमितमुत्तमाङ्गं शीर्षं येन तेन । निद्रापरतन्त्रं निद्राधीनम् । अनुचराः सचिवा अनुगामिनः । कल्ये प्रातःकाले । 'प्रत्यूषोऽहर्मुखं कल्यमुषःप्रत्युषसी अपि' इत्यमरः । साकल्येन समग्रतः । विषण्णं खिन्नं हृदयं येषां ते । तेषु तेष्वखिलेषु । मनीषया बुद्ध्या । चरिष्णवो गन्तु-मनसः । 'अलंकृञ्–' इतीष्णुच्प्रत्ययः । पुनः संगमः पुनःसंगमस्तस्य संकेत-स्थानम् । निश्चितं निर्णीतं पुनःसंगमसंकेतस्थानं यैस्ते । वियुज्य वियुक्ता भूत्वा । लोकैकेति । लोकेष्वेकवीरः प्रधानयोधः । रक्ष्यमाणः इति कर्मणि शानच् । संतुष्टान्तरङ्गो हृष्टमनाः । अभिज्ञानं चिह्नम् । रसातलं पातालम् । केलीकाननं क्रीडावनम् । कासारः सरः । वितता बहवः सारसाः पक्षि-विशेषा यत्र । 'विगत–' इति पाठे नष्टा इत्यर्थः । नानाविधेनानेकप्रकारेण । उपपादितेन संपादितेन । हविषा हूयते तद्धविस्तेन । आज्यादियाज्यद्रव्येणेत्यर्थः । प्रत्यूहो विघ्नः । विलोकयति सति । समिधश्चाज्यं च तैः समुज्ज्वलिते दीपिते । ज्वलनेऽग्नौ । पुण्यस्य गेहं वसतिस्थानम् । देहविशेषणमेतत् । आहुतीकृत्याग्नौ क्षिप्त्वा । तडि-द्विद्युत् । दिव्यां देवतार्हाम् । तनुं शरीरम् । मणिमयानि मणिप्रचुराणि । 'तत्प्रकृतवचने [ प्राचुर्येण प्रकृतं प्रस्तुतं तस्य वचने ] मयट्' इति मयट् । मण्डनानि भूषणानि । मण्डितोपशोभिता । ललामभूता भूषणभूता । विनीता

---

१ अन्वेक्षमाणाः. २ विगत. ३ ईशेति नास्ति क्वचित्.

कन्यका काचन विनीतानेकसखीजनानुगम्यमाना कलहंसगत्या शनैरागत्यावनिसुरोत्तमाय मणिमेकमुज्ज्वलाकारमुपायनीकृत्य तेन 'का त्वम्' इति पृष्टा सोत्कण्ठा कलकण्ठस्वनेन मन्दं मन्दमुदञ्जलिरभाषत—'भूसुरोत्तम, अहमसुरोत्तमनन्दिनी कालिन्दी नाम। मम पिताऽस्य लोकस्य शासिता महानुभावो निजपराक्रमासहिष्णुना विष्णुना दूरीकृतामरे समरे यमनगरातिथिरकारि। तद्वियोगशोकसागरमग्नां मामवेक्ष्य कोऽपि कारुणिकः सिद्धतापसोऽभाषत—'बाले, कश्चिद्दिव्यदेहधारी मानवो नवो वल्लभस्तव भूत्वा सकलं रसातलं पालयिष्यति' इति। तदादेशं निशम्य घनशब्दोन्मुखी चातकी वर्षागमनमिव तवालोकनकाङ्क्षिणी चिरमतिष्ठम्। मन्मनोरथफलायमानं भवदागमनमवगम्य मद्राज्यावलम्बभूतामात्यानुमत्या मदनकृतसारथ्येन मनसा भवन्तमागच्छम्। लोकस्यास्य राज्यलक्ष्मीमङ्गीकृत्य मां तत्सपत्नीं करोतु भवान्' इति। मातङ्गोऽपि राजवाहनानुमत्या तां तरुणीं परिणीय दिव्याङ्गनालाभेन हृष्टतरो रसातलराज्यमुररीकृत्य परमानन्दमाससाद।

वञ्चयित्वा वयस्यगणं समागतो राजवाहनस्तदवलोकनकौतूहलेन भुवं गमिष्णुः कालिन्दीदत्तं क्षुत्पिपासादिक्लेशनाशनं मणिं साहाय्यकरणसंतुष्टान्मातङ्गाल्लब्ध्वा कंचनाध्वानमनुवर्तमानं तं विसृज्य बिलपथेन तेन निर्ययौ। तत्र च मित्रगणमनवलोक्य भुवं बभ्राम।

---

नम्रा। कलहंसस्य गत्या। मन्थरगत्येत्यर्थः। अवनिसुरोत्तमाय द्विजश्रेष्ठाय। उज्ज्वलाकारं दीप्तम्। उपायनीकृत्य। उपायनं दत्त्वेत्यर्थः। सोत्कण्ठा उत्कण्ठया सहिता। कलकण्ठः कोकिलः। उदञ्जलिः प्रबद्धाञ्जलिः। शासिता पालकः। महाननुभावः प्रभावो यस्यैतादृशः। असहिष्णुना सहनासमर्थेन। दूरीकृताः। पराजिता इति यावत्। अमरा देवा यस्मात्। यमनगरस्यातिथिरकारि हत इत्यर्थः। तेन वियोगस्तस्मादुद्भूतो यः शोकः स एव सागरस्तस्मिन्मग्नाम्। कारुणिकोऽनुकम्पावान्। सिद्धतापसो हस्तधृतसिद्धिस्तपस्वी। वल्लभो रमणः। घनशब्दो मेघशब्दः। तस्योन्मुखी उन्नतं मुखं यस्या इति तथा। फलायमानं फलवदाचरति तथा। मम राज्यस्यावलम्बभूतानाममात्यानामनुमत्या। मदनेन कृतं सारथ्यं यस्यैतादृशेन। समानः पतिर्यस्याः सा सपत्नी। तस्या राजलक्ष्म्याः सपत्नीम्। उररीकृत्य स्वीकृत्य। **वञ्चयित्वेति**। वञ्चयित्वा प्रतार्य। कौतूहलेन कौतुकेन। कालिन्दी रसातलगतमातङ्गपत्नी। नाशयतीति नाशनस्तम्। उपशल्ये ग्रामान्ते।

भ्रमंश्च विशालोपशल्ये कमप्याक्रीडमासाद्य तत्र विशिश्रमिषुरान्दोलिकारूढं रमणीसहितमाप्तजनपरिवृतमुद्याने समागतमेकं पुरुषमपश्यत् । सोऽपि परमानन्देन पल्लवितचेता विकासितवदनारविन्दः 'मम स्वामी सोमकुलावतंसो विशुद्धयशोनिधी राजवाहन एषः । महाभाग्यतयाऽकाण्ड एवास्य पादमूल गतवानस्मि । संप्रति महान्नयनोत्सवो जातः' इति ससंभ्रममान्दोलिकाया अवतीर्य सरभसपदविन्यासविलासिहर्षोत्कर्षचरितस्त्रिचतुरपदान्युद्गतस्य चरणकमलयुगलं गलदुल्लसन्मल्लिकावलयेन मौलिना पस्पर्श । प्रमोदाश्रुपूर्णो राजा पुलकिताङ्गं तं गाढमालिङ्ग्य 'अये सौम्य सोमदत्त' इति व्याजहार । ततः कस्यापि पुंनागभूरुहस्य प्रच्छायशीतले तले संविष्टेन मनुजनाथेन सप्रणयमभाणि—'सखे कालमेतावन्तं देशे कस्मिन् प्रकारेण केनास्थायि भवता, संप्रति कुत्र गम्यते, तरुणी केयम्, एष परिजनः संपादितः कथम्, कथय' इति । सोऽपि मित्रसंदर्शनव्यतिकरापगतचिन्ताज्वरातिशयो मुकुलितकरकमलः सविनयमात्मीयप्रचारप्रकारमवोचत्—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते द्विजोपकृतिर्नाम द्वितीय उच्छ्वासः ।

---

आक्रीड उद्यानम् । विशिश्रमिषुर्विश्रमितुमिच्छुः । आन्दोलिका दोला । पल्लवितं विकसितं प्रसन्नमिति यावत् चेतोऽन्तःकरणं यस्य स तथा । वदनं अरविन्दं कमलमिव । सोमकुलस्य चन्द्रवंशस्य । अवतंसो भूषणम् । विशुद्धोऽतिशुद्धो यशोनिधिर्यस्य । 'निधिः राजवाहनः' इति च्छेदः । अकाण्डे सहसा । ससंभ्रमं सत्वरं सादरं च । रभसेन सहेति सरभसः । सरभसो यः पदविन्यासस्तस्य यो विलासस्तद्वान् । हर्षोत्कर्षो हर्षातिरेकश्चरिते यस्य सः । पश्चात्कर्मधारयः । त्रिचतुरपदानि त्रीणि वा चत्वारि वा । उद्गतस्य प्रत्युद्यातस्य । मल्लिका पुष्पविशेषः । गलत्स्खलदुल्लसदुद्धतं च मल्लिकावलयं यस्य तेन । मौलिना शीर्षेण । प्रमोदाश्रुभिः पूर्णः । पुलका अस्य संजातास्तत् पुलकितं हृषितरोमाञ्चमङ्गं यस्य तम् । गाढं दृढम् । पुनागः केसरः । भूरुहो वृक्षः । संविष्टेनोपविष्टेन । मित्रसंदर्शनमेव व्यतिकरस्तेनापगतश्चिन्ता एव ज्वरस्तस्यातिशयो यस्य । व्यतिकरो व्यापारः । 'व्यतिकरः समाख्यातो व्यसनव्यतिषङ्गयोः' इति विश्वः । मुकुलिते करकमले यस्य । मुकुलितकरकमलः संयोजितकरयुगलः । बद्धाञ्जलिरिति यावत् । प्रचारो यात्रा भूभ्रमणम् ।

**इति श्रीदशकुमारचरितपूर्वपीठिकाटीकायां पदचन्द्रिकाभिधायां द्वितीय उच्छ्वासः ।**

# तृतीयोच्छ्वासः ।

>•0•<

'देव, भवच्चरणकमलसेवाभिलाषीभूतोऽहं भ्रमन्नेकस्यां वनावनौ पिपासाकुलो लतापरिवृतं शीतलं नदसलिलं पिबन्नुज्ज्वलाकारं रत्नं तत्रैकमद्राक्षम् । तदादाय गत्वा कंचनाध्वानमम्बरमणेरत्युष्णतया गन्तुमक्षमो वनेऽस्मिन्नेव किमपि देवतायतनं प्रविष्टो दीनाननं बहुतनयसमेतं स्थविरमहीसुरमेकमवलोक्य कुशलमुदितदयोऽहमपृच्छम् । कार्पण्यविवर्णवदनो महदाशापूर्णमानसोऽवोचदग्रजन्मा—'महाभाग, सुतानेतान्मातृहीनाननेकैरुपायै रक्षन्निदानीमस्मिन्कुदेशे भैक्ष्यं[1] संपाद्य ददेतेभ्यो वसामि शिवालयेऽस्मिन्' इति । 'भूदेव, एतत्कटकाधिपती राजा कस्य देशस्य, किंनामधेयः, किमत्रागमनकारणमस्य' इति पृष्टोऽभाषत महीसुरः—'सौम्य, मत्तकालो नाम लाटेश्वरो देशस्यास्य पालयितुर्वीरकेतोस्तनयां वामलोचनां नाम तरुणीरत्नमसमानलावण्यं श्रावंश्रावमवधूतदुहितृप्रार्थनस्य तस्य नगरीम्[2]अरौत्सीत् । वीरकेतुरपि भीतो महदुपायनमिव तनयां मत्तकालायादात् । तरुणीलाभहृष्टचेता लाटपतिः 'परिणेया निजपुर एव' इति निश्चित्य गच्छन्निजदेशं प्रति संप्रति मृगयादरेणात्र वने सैन्यवासमकारयत् । कन्यासारणे[3]

---

देवेति । वनावनौ काननभूमौ । पातुमिच्छा पिपासा तयाऽऽकुलः । अम्बरमणिः सूर्यः । देवतायतनं मन्दिरम् । दीनं दैन्यव्याप्तमाननं यस्य । उदिता उत्पन्ना दया यस्य सः । कार्पण्यं कृपणस्य भावः । दैन्यमित्यर्थः । विवर्णं विगतवर्णं पाण्डु । महदाशेति प्रयोगश्चिन्त्यः । महति कार्ये आशा इति वा व्याख्येयम् । अग्रजन्मा ब्राह्मणः । भैक्ष्यं भिक्षावृत्त्या संपादितमन्नादि । कटकस्य निवेशितसैन्यस्य । किं नामधेयं यस्येति बहुव्रीहिः । लाट इति देशनाम । तरुणीषु रत्नम् । 'जातौ जातौ यदुत्कृष्टं तद्रत्नमभिधीयते' इति । असमानमनुपमं लावण्यं सौन्दर्यं यस्य तत् । श्रावं श्रावमिति णमुलन्तमेतत् । असकृच्छ्रुत्वेत्यर्थः । आभीक्ष्ण्ये णमुल् । अवधूता तिरस्कृता दुहितुः प्रार्थना तत्कृताऽभ्यर्थना येन । अरौत्सीदभियुयोज । मृगयादरेण मृगयानुरोधेन । कन्यायाः सारणे प्रापणे । कन्यासारेणेति पाठे कन्यैव सारो धनं तेन । 'सारो बले स्थिरांशे च मज्जि पुंसि

---

१ भैक्षम्. २ पाटलीं नाम्ना नगरीम्. ३ कन्यासारेण.

नियुक्तो मानपालो नाम वीरकेतुमन्त्री मानधनश्चतुरङ्गबलसमन्वितोऽन्यत्र रचितशिबिरस्तं निजनाथावमानखिन्नमानसोऽन्तर्बिभेद' इति । 'विप्रोऽसौ बहुतनयो विद्वान्निर्धनः स्थविरश्च दानयोग्यः' इति तस्मै करुणापूर्णमना रत्नमदाम् । परमाह्लादविकासिताननोऽभिहितानेकाशीः कुत्रचिदग्रजन्मा जगाम । अध्वश्रमखिन्नेन मया तत्र निरवेशि निद्रासुखम् । तदनु पश्चान्निगडितबाहुयुगलः स भूसुरः कशाघातचिह्नितगात्रोऽनेकनैस्त्रिंशिकानुयातोऽभ्येत्य माम् 'असौ दस्युः' इत्यदर्शयत् । परित्यक्तभूसुरा राजभटा रत्नावाप्तिप्रकारं मदुक्तमनाकर्ण्य भयरहितं मां गाढं नियम्य रज्जुभिरानीय कारागारम् 'एते तव सखायः' इति निगडितान्कांश्चिन्निर्दिष्टवन्तो मामपि निगडितचरणयुगलमकार्षुः । किंकर्तव्यतामूढेन निराशक्लेशानुभवेनावाचि मया—'ननु पुरुषा वीर्यपरुषाः, निमित्तेन केन निर्विशथ कारावासदुःखं दुस्तरम् । यूयं वयस्या इति निर्दिष्टमेतैः, किमिदम्' इति । तथाविधं मामवेक्ष्य भूसुरान्मया श्रुतं लाटपतिवृत्तान्तं व्याख्याय चौरवीराः पुनरवोचन्—'महाभाग, वीरकेतुमन्त्रिणो मानपालस्य किंकरा वयम् । तदाज्ञया लाटेश्वरमारणाय रात्रौ सुरङ्गाद्वारेण तदगारं प्रविश्य तत्र राजाभावेन विषण्णा बहु धनमपहृत्य महाटवीं प्राविशाम । अपरेद्युश्च पदा-

जले धने' इति मेदिनी । मान एव धनं यस्येति तथा । शिबिरं सैन्यवासस्थानम् । 'तळ' इति ख्यातम् । नाथः स्वामी राजा । बिभेद भेदं चकार । अभिहिता उच्चारिताः । दत्ता इति यावत् । अनेकाशिषो येन सः । निद्रासुखं निरवेशि उपभुक्तम् । अहं निद्रावशोऽभवमित्यर्थः । पश्चात्पृष्ठदेशे निगडितं शृङ्खलादिना बद्धं बाहुयुगलं यस्येति तथा । दत्तपश्चाद्बन्ध इत्यर्थः । कशायाः कशया वा घात आघातो वा ताडनम् । नैस्त्रिंशिकाः खड्गधारिणः । दस्युश्चौरः । परित्यक्तो बन्धनान्मुक्तो भूसुरो यैस्ते । रत्नस्यावाप्तेः प्रकारम् । रज्जुभिर्दोरकैः । कारागारं बन्धनगृहम् । निगडितान्बद्धान् । किंकर्तव्यतायां तद्विषये मूढः । किं कर्तव्यमित्यजानतेत्यर्थः । वीर्येण पराक्रमेण परुषाः कठिनाः । निमित्तेन कारणेन । निर्विशथानुभवथ । व्याख्याय कथयित्वा । चौराश्च ते वीराश्च । सुरङ्गा बिलपथः । अगारं गृहम् । विषण्णाः खिन्नाः । पदानि पादप्रतिमास्ता

१ रत्नान्निजनाथा°. २ अवोचि. ३ सुरुङ्गा.

न्वेषिणो राजानुचरा बहवोऽभ्येत्य धृतधनचयानस्मान्परितः परिवृत्य दृढतरं बद्ध्वा निकटमानीय समस्तवस्तुशोधनवेलायामेकस्यानर्घ्यरत्नस्याभावेनास्मद्वधाय माणिक्यादानायास्मान्किलाशृङ्खलयन्' इति। श्रुतरत्नरत्नावलोकनस्थानोऽहम् 'इदं तदेव माणिक्यम्' इति निश्चित्य भूदेवदाननिमित्तां दुरवस्थामात्मनो जन्म नामधेयं युष्मदन्वेषणपर्यटनप्रकारं चाभाष्य समयोचितैः संलापैर्मैत्रीमकार्षम्। ततोऽर्धरात्रे तेषां मम च शृङ्खलाबन्धनं निर्भिद्य तैरनुगम्यमानो निद्रितस्य द्वाःस्थगणस्यायुधजालमादाय पुररक्षान्पुरतोऽभिमुखागतान्पटुपराक्रमलीलयाऽभिद्राव्य मानपालशिबिरं प्राविशम्। मानपालो निजकिंकरेभ्यो मम कुलाभिमानवृत्तान्तं तत्कालीनं विक्रमं च निशम्य मामार्चयत्। परेद्युर्मत्तकालेन प्रेषिताः केचन पुरुषा मानपालमुपेत्य 'मन्त्रिन् मदीयराजमन्दिरे सुरङ्गया बहु धनमपहृत्य चौरवीरा भवदीयं कटकं प्राविशन्। तानर्पय। नो चेन्महाननर्थः संभविष्यति' इति क्रूरतरं वाक्यमब्रुवन्। तदाकर्ण्य रोषारुणितनेत्रो मन्त्री 'लाटपतिः कः, तेन मैत्री का, पुनरस्य वराकस्य सेवया किं लभ्यम्' इति तान्निरभर्त्सयत्। ते च मानपालेनोक्तं विप्रलापं मत्तकालाय तथैवाकथयन्। कुपितोऽपि लाटपतिर्दोर्वीर्यगर्वेणाल्पसैनिकसमेतो योद्धुमभ्यगात्। पूर्वमेव कृतरणनिश्चयो मानी मानपालः संनद्धयोधो युद्धकामो भूत्वा निःशङ्कं निरगात्।

---

अन्विष्यन्तीति पदान्वेषिणः। शोधनमन्वेषणम्। अनर्घ्यममूल्यम्। महामूल्यमित्यर्थः। माणिक्यस्य आदानाय ग्रहणाय। अशृङ्खलयन् शृङ्खलाभिर्निगडितानकुर्वन्। श्रुतं रत्नस्य रत्नावलोकनस्य च स्थानं येन सः। भूदेवेति। विप्रदानात् संजाताम्। दुरवस्थां संकटम्। नामधेयं नाम। युष्मच्छब्दे राजवाहनग्रहणम्। द्वारि तिष्ठन्ति ते द्वाःस्थास्तेषां गणस्तस्य। आयुधानां जालं समूहम्। पुररक्षान्पुररक्षणनियुक्तपुरुषान्। अभिद्राव्य प्रपलाय्य। तत्काले भवं तत्कालीनम्। भवदीयं युष्माकम्। रोषेणारुणिते नेत्रे यस्य तथा। वराकस्य नीचस्य। निरभर्त्सयद्धिक्चकार। विप्रलापं विरोधोक्तिम्। दोर्वीर्यं भुजबलम्। सैनिका योद्धारः। कृतरणनिश्चयः कृतयुद्धव्यवसायः। संनद्धाः सज्जाः। वर्मिता इति

---

१ आयुधजातम्. २ योद्धुकामः.

अहमपि सबहुमानं मन्त्रिदत्तानि बहुलतुरङ्गमोपेतं चतुरसारथिं रथं च दृढतरं कवचं मदनुरूपं चापं च विविधबाणपूर्णं तूणीरद्वयं रणसमुचितान्यायुधानि गृहीत्वा युद्धसंनद्धो मदीयबलविश्वासेन रिपूद्धरणोद्युक्तं मन्त्रिणमन्वगाम् । परस्परमत्सरेण तुमुलसंगरकरमुभयसैन्यमतिक्रम्य समुल्लसद्भुजाटोपेन बाणवर्षं तदङ्गे विमुञ्चन्नराातिं प्राहरम् । ततोऽतिरयतुरङ्गमं मद्रथं तन्निकटं नीत्वा शीघ्रलङ्घनोपेततदीयरथोऽहमरातेः शिरःकर्तनमकार्षम् । तस्मिन्निपतिते तदवशिष्टसैनिकेषु पलायितेषु नानाविधहयगजादिवस्तुजातमादाय परमानन्दसंनतो मन्त्री समानेकविधां संभावनामकार्षीत् । मानपालप्रेषितात्तदनुचरादेतदखिलमुदन्तजातमाकर्ण्य संतुष्टमना राजाऽभ्युद्गतो मदीयपराक्रमे विस्मयमानः समहोत्सवममात्यबान्धवानुमत्या शुभदिने निजतनया मह्यमदात् । ततो यौवराज्याभिषिक्तोऽहमनुदिनमाराधितमहीपालचित्तो वामलोचनयाऽनया सह नानाविधं सौख्यमनुभवन्भवद्विरहवेदनाशल्यसुलभवैकल्यहृदयः सिद्धादेशेन सुहृज्जनावलोकनफलं प्रदेशं महाकालनिवासिनः परमेश्वरस्याराधनायाद्य पत्नीसमेतः समागतोऽस्मि । भक्तवत्सलस्य गौरीपतेः कारुण्येन त्वत्पदारविन्दसंदर्शनानन्दसंदोहो मया लब्धः ' इति ।

तान्निशम्याभिनन्दितपराक्रमो राजवाहनस्तान्निरपराधदण्डं दैवमुपा-

यावत् । योधा यस्य सः । बहुलैः महाकायैः तुरङ्गमैरुपेतम् । चतुरसारथिमिति बहुव्रीहिः । कवचं वर्म । ' चिलखत ' इति भाषायाम् । तूणीर इषुधिः । ' भाता ' इति ख्यातः । उद्धरणमुच्छेदः । तुमुलः संकुलः संगरो युद्धम् । समुल्लसन्त्यौ भ्राजमाने भुजे बाहू तयोः आटोपो गर्वः । बाणानां वर्षो वृष्टिः । अरातिं शत्रुम् । अतिरया वेगवन्तस्तुरङ्गमा यस्य तम् । शीघ्रं लङ्घनमाक्रमणं तेन उपेतः प्राप्तः तस्येयं तदीयो रथो येन । तद्रथं गत्वेत्यर्थः । संनतो युक्तः । संभावनां सत्कारम् । अभ्युद्गतः संमानार्थं प्रत्युद्यातः । युवा चासौ राजा चेति युवराजः । तस्य भावः यौवराज्यम् । आराधितं संतोषितम् । शल्यं शङ्कुम् । विकलस्य भावो वैकल्यं विह्वलत्वम् । भवतो विरहस्तस्य वेदना एव शल्यानि तेभ्यः सुलभं वैकल्यं यस्य तादृक् हृदयं यस्य । महाकालेत्याख्यस्थले निवसतीति तम् । संदोहोऽतिशयः । तदिति । निशम्य श्रुत्वा । अभिनन्दितः स्तुतः पराक्रमो येन । दण्डः कारावासादिरूपः ।

१ अरातीन्. २ तदाऽवशिष्ट. ३ संभृतः.

लम्य तस्मै क्रमेणात्मचरितं कथयामास। तस्मिन्नवसरे पुरतः पुष्पोद्भवं विलोक्य ससंभ्रमं निजनिटिलतटस्पृष्टचरणाङ्गुलिमुदञ्जलिममुं गाढमालिङ्ग्यानन्दबाष्पसंकुलसंफुल्ललोचनः 'सौम्य सोमदत्त, अयं स पुष्पोद्भवः' इति तस्मै तं दर्शयामास। तौ च चिरविरहदुःखं विसृज्यान्योन्यालिङ्गनसुखमन्वभूताम्। ततस्तस्यैव महीरुहस्य च्छायायामुपविश्य राजा सादरहासमभाषत—'वयस्य, भूसुरकार्यं करिष्णुरहं मित्रगणो विदितार्थः सर्वथाऽन्तरायं करिष्यतीति निद्रितान्भवतः परित्यज्य निरगाम्। तदनु प्रबुद्धो वयस्यवर्गः किमिति निश्चित्य मदन्वेषणाय कुत्र गतवान्। भवानेकाकी कुत्र गतः' इति। सोऽपि ललाटतटचुम्बदञ्जलिपुटः सविनयमलपत्—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते सोमदत्तचरितं नाम तृतीय उच्छ्वासः।

---

## चतुर्थोच्छ्वासः।

'देव, महीसुरोपकारायैव देवो गतवानिति निश्चित्यापि देवेन गन्तव्यं देशं निर्णेतुमशक्नुवानो मित्रगणः परस्परं वियुज्य दिक्षु देवमन्वेष्टुमगच्छत्। अहमपि देवस्यान्वेषणाय महीमटन्कदाचिदम्बरमध्यगतस्याम्बरमणेः किरणमसहिष्णुरेकस्य गिरितटमहीरुहस्य प्रच्छायशीतले तले क्षणमुपाविशम। मम पुरोभागे दिनमध्यसंकुचितसर्वावयवां कूर्माकृतिं मानुषच्छायां निरीक्ष्योन्मुखो गगनतलान्महारयेण पतन्तं पुरुषं कंचिदन्तराल एव दयोपनतहृदयोऽहमवलम्ब्य शनैरवनितले

---

उपालम्य गहित्वा। निजं निटिलं ललाटं तस्य तटेन स्पृष्टः चरणयोरङ्गुल्यो येन तम्। आनन्दस्य बाष्पाणि तैः संकुले पूर्णे संफुल्ले च लोचने यस्य। अन्तरायं विघ्नम्। ललाटतटं चुम्बद् अञ्जलिपुटं यस्य। अलपद्भाषे।

**इति श्रीदशकुमारचरितपूर्वपीठिकाटीकायां पददीपिकाभिधायां तृतीय उच्छ्वासः।**

---

**देवेति।** अशक्नुवानः। अत्र आत्मनेपदं चिन्त्यम्। यद्वा 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति चानश्। अम्बरमणेः सूर्यस्य। दिनमध्येन संकुचिताः सर्वेऽवयवा यस्याः सा। कूर्मस्येवाकृतिर्यस्याः सा ताम्। वीतसंज्ञं नष्टचेष्टम्।

---

१ गन्ता. २ दिनमध्यसमये संकु॰. ३ अस्मात्प्राक् 'शूर्पाकृतिम्' इत्यधि॰ ए॰ पुस्तके.

निक्षिप्य दूरापातवीतसंज्ञं तं शिशिरोपचारेण विबोध्य शोकातिरेकेणोद्गतबाष्पलोचनं तं भृगुपतनकारणमपृच्छम् । सोऽपि कररुहैरश्रुकणानपनयन्नभाषत—'सौम्य, मगधाधिनाथामात्यस्य पद्मोद्भवस्यात्मसंभवो रत्नोद्भवो नामाहम् । वाणिज्यरूपेण कालयवनद्वीपमुपेत्य कामपि वणिक्कन्यकां परिणीय तया सह प्रत्यागच्छन्नम्बुधौ तीरस्यानतिदूर एव प्रवहणस्य भग्नतया सर्वेषु निमग्नेषु कथं कथमपि दैवानुकूल्येन तीरभूमिमभिगम्य निजाङ्गनावियोगदुःखार्णवे प्लवमानः कस्यापि सिद्धतापसस्यादेशादरेण षोडश हायनानि कथंचिन्नीत्वा दुःखस्य पारमनवेक्षमाणो गिरिपतनमकार्षम्' इति । तस्मिन्नेवावसरे किमपि नारीकूजितमश्रावि—'न खलु समुचितमिदं यत्सिद्धादिष्टे पतितनयमिलने विरहमसहिष्णुर्वैश्वानरं विशसि' इति । तन्निशम्य मनोविदितजनकभावं तमवादिषम्—'तात, भवते विज्ञापनीयानि बहूनि सन्ति । भवतु । पश्चादखिलमाख्यातव्यम् । अधुना नारीकूजितमनुपेक्षणीयं मया । क्षणमात्रमत्र भवता स्थीयताम्' इति । तदनु सोऽहं त्वरया किंचिदन्तरमगमम् । तत्र पुरतो भयंकरज्वालाकुलहुतभुगवगाहनसाहसिकां मुकुलिताञ्जलिपुटां वनितां कांचिदवलोक्य ससंभ्रममनलादपनीय कूजन्त्या वृद्धया सह मत्पितुरभ्यर्णमभिगमय्य स्थविरामवोचम्—'वृद्धे, भवत्यौ कुत्रत्ये । कान्तारे निमित्तेन केन दुरवस्थाऽनुभूयते । कथ्यताम्' इति । सा सगद्गदमवादीत्—'पुत्र, कालयवनद्वीपे कालगुप्तनाम्नो

---

विबोध्य प्रकृतिमापाद्य । अतिरेकोऽतिशयः । भृगोः पतनस्य कारणं हेतुम् । कररुहैर्नखैः । प्रवहणस्य पोतस्य । कथं कथमपि महताऽऽयासेन । अङ्गना भार्या । तस्या वियोगदुःखमेवार्णवस्तस्मिन् । हायनानि वत्सरान् । कूजितं शब्दः । सिद्धेनादिष्टे कथिते । वैश्वानरं वह्निम् । मनसा विदितो जनकभावो यस्य तम् । विज्ञापनीयानि विज्ञापयितुं योग्यानि । ज्वालाभिराकुलो व्याप्तो यो हुतभुगग्निस्तत्रावगाहनं प्रवेशः तदेव साहसं तत्रोद्यतामित्यर्थः । कूजन्त्या विलपन्त्या । अभ्यर्णं समीपम् । अभिगमय्य प्रापय्य । णिजन्तात्ल्यप् । कुत्रत्ये कुत आगते । दुरवस्था सव्यसनिता । सगद्गदं गद्गदस्वरेण ।

---

१ अम्बुतीरस्य.

वणिजः कस्यचिदेषा सुता सुवृत्ता नाम रत्नोद्भवेन निजकान्तेनागच्छन्ती जलधौ मग्ने प्रवहणे निजधात्र्या मया सह फलकमेकमवलम्ब्य दैवयोगेन कूलमुपेताऽऽसन्नप्रसवसमया कस्यांचिदटव्यामात्मजमसूत। मम तु मन्दभाग्यतया बाले वनमातङ्गेन गृहीते मद्द्वितीया परिभ्रमन्ती 'षोडशवर्षानन्तरं भर्तृपुत्रसंगमो भविष्यति' इति सिद्धवाक्यविश्वासादेकस्मिन्पुण्याश्रमे तावन्तं समयं नीत्वा शोकमपारं सोढुमक्षमा समुज्ज्वलिते वैश्वानरे शरीरमाहुतीकर्तुमुद्युक्ताऽऽसीत्' इति। तदाकर्ण्य निजजननीं ज्ञात्वा तामहं दण्डवत्प्रणम्य तस्यै मदुदन्तमखिलमाख्याय धात्रीभाषणफुल्लवदनं विस्मयविकसिताक्षं जनकमदर्शयम्। पितरौ तौ साभिज्ञानमन्योन्यं ज्ञात्वा मुदितान्तरात्मानौ विनीतं मामानन्दाश्रुवर्षेणाभिषिच्य गाढमाश्लिष्य शिरस्युपाघ्राय कस्यांचिन्महीरुहच्छायायामुपाविशताम्। 'कथं निवसति महीवल्लभो राजहंसः' इति जनकेन पृष्टोऽहं तस्य राज्यच्युतिं त्वदीयजननं सकलकुमारावाप्तिं तव दिग्विजयारम्भं भवतो मातङ्गानुयानमस्माकं युष्मदन्वेषणकारणं सकलमभ्यधाम्। ततस्तौ कस्यचिदाश्रमे मुनेरस्थापयम्। ततो देवस्यान्वेषणपरायणोऽहमखिलकार्यनिमित्तं वित्तं निश्चित्य भवदनुग्रहाल्लब्धस्य साधकतन्त्रस्य साहाय्यकरणदक्षं शिष्यगणं निष्पाद्य विन्ध्यवनमध्ये पुरातनपत्तनस्थानान्युपेत्य विविधनिधिसूचकानां महीरुहाणामधोनिक्षिप्तान्वसुपूर्णान्कलशान्सिद्धाञ्जनेन ज्ञात्वा रक्षिषु परितः स्थितेषु खनन-

आसन्नः प्राप्तः प्रसवस्य समयो यस्याः सा। वनमातङ्गेन वन्यकरिणा। अहं द्वितीया सहायभूता यस्याः सा। तावन्तं तत्परिमाणकं समयं षोडशाब्दानित्यर्थः। अक्षमाऽसमर्था। दण्डः काष्ठदण्डस्तेन तुल्यं दण्डवत्। धात्र्या यद्भाषणं तेन फुल्लमानन्दविकसितं वदनं यस्य तम्। साभिज्ञानमन्योन्यप्रत्यभिज्ञादर्शकचिह्नानि दृष्ट्वा पृष्ट्वा च। मुदितो हृष्टोऽन्तरात्मा ययोस्तौ। विनीतं प्रश्रयावनतम्। च्युतिर्भ्रंशः। परायणस्तत्परः। दक्षश्चतुरः। सिद्धाञ्जनेन सिद्धादिष्टेन दत्तेन वाऽञ्जनेन। खननसाधनैः

१ अमन्दा. २ पुरतः.

साधनैरुत्पाट्य[1] दीनारानसंख्यान्राशीकृत्य तत्कालागतम[2]नतिदूरे निवेशितं वणिक्कटकं कंचिदभ्येत्य तत्र बलिनो बलीवर्दान्गोणीश्च क्रीत्वाऽन्यद्रव्यमिषेण वसु तद्गोणीसंचितं[3] तैरुह्यमानं शनैः कटक-नयम् । तदधिकारिणा चन्द्रपालेन केनचिद्वणिक्पुत्रेण विरचितसौहृदोऽहममुनैव साकमुज्जयिनीमुपाविशम् । मत्पितरावपि तां पुरीमभिगमय्य सकलगुणनिलयेन बन्धुपालनाम्ना चन्द्रपालजनकेन नीयमानो मालवनाथदर्शनं विधाय तदनुमत्या गूढवसतिमकरवम् । ततः काननभूमिषु भवन्तमन्वेष्टुमुद्युक्तं मां परममित्रं बन्धुपालो निशम्यावदत्—'सकलं धरणीतलमपारमन्वेष्टुमक्षमो भवान्मनोग्लानिं विहाय तूष्णीं तिष्ठतु । भवन्नायकालोकनकारणं शुभशकुनं निरीक्ष्य कथयिष्यामि' इति । तल्लपितामृताश्वासितहृदयोऽहमनुदिनं तदुपकण्ठवर्ती कदाचिदिन्दुमुखीं नवयौवनावलीढावयवां नयनचन्द्रिकां बालचन्द्रिकां नाम तरुणीरत्नं वणिङ्मन्दिरलक्ष्मीं मूर्तामिवावलोक्य तदीयलावण्यावधूतधीरभावो लतान्तबाणबाणलक्ष्यतामयासिषम् । चकितबालकुरङ्गलोचना साऽपि कुसुमसायकसायकायमानेन कटाक्षवीक्षणेन मामसकृन्निरीक्ष्य मन्दमारुतान्दोलिता लतेवाकम्पत । मनसाऽभिमुखैश्च समाकुञ्चितै

---

खनित्रादिभिः । दीनारानेतत्संज्ञकनाणकान् । वणिक्कटकं वणिक्समाजम् । बलीवर्दान्वृषभान् । गोणीर्धान्यावपनानि । 'जानपदकुण्डगोण—' इति ङीष् आवपनार्थे । अन्यद्रव्यमिषेणान्यद्रव्यमिति कथयित्वा । अभिगमय्य प्रापय्य । निलयो गृहं वासस्थानम् । न विद्यते पारोऽन्तो यस्य तदपारम् । ग्लानिं हर्षक्षयं निर्वेदम् । तस्या लपितं भाषितमेवामृतं तेनाश्वासितं हृदयं यस्य । उपकण्ठवर्ती समीपवर्ती । नवयौवनेन अवलीढा व्याप्ता अवयवा यस्यास्ताम् । मूर्तां मूर्तिमतीम् । तदीयेति । तस्या लावण्येन सौन्दर्येणावधूतश्चालितो धीरभावो धैर्यं यस्यैतादृशः । लतान्ता बाणा यस्य स लतान्तबाणः कामस्तस्य बाणास्तेषां लक्ष्यतां शरव्यत्वम् । लावण्यवतीं तां दृष्ट्वा कामबाणैर्विद्धोऽभवमिति तात्पर्यार्थः । चकितो भीतो यः बालकुरङ्गस्तस्येव लोचने यस्याः । बालशब्देनातिकातरत्वमतिलोलत्वं च नयनयोर्दर्शितम् । कुसुमानि सायका यस्य स कामस्तस्य सायक इवाचरतीति तथा तेन । कटाक्षवीक्षणेन चेष्टाविशेषेणापाङ्गदर्शनेन । असकृद्वारंवारम् । आन्दोलिता कम्पिता । मनसा अकथयदिति संबन्धः । रागश्च लज्जा च तयोरन्तराले मध्ये वर्तन्ते इति तैः ।

१ उत्पाद्य. २ तत्कालगतम्. ३ संमितम्.

रागलज्जान्तरालवर्तिभिरपाङ्गवर्तिभिरीक्षणविशेषैर्निजमनोवृत्तिमकथयत् । चतुरगूढचेष्टाभिरस्या मनोनुरागं सम्यग्ज्ञात्वा सुखसंगमोपायमचिन्तयम् । अन्यदा बन्धुपालः शकुनैर्भवद्गतिं प्रेक्षिष्यमाणः पुरोपान्तविहारवनं मया सहोपेत्य कस्मिंश्चिन्महीरुहे शकुन्तवचनानि शृण्वन्नतिष्ठत् । अहमुत्कलिकाविनोदपरायणो वनान्तरे परिभ्रमन्सरोवरतीरे चिन्ताक्रान्तचित्तां दीनवदनां मन्मनोरथैकभूमिं बालचन्द्रिकां व्यलोकयम् । तस्याः ससंभ्रमप्रेमलज्जाकौतुकमनोरमं लीलाविलोकनसुखमनुभवन्सुदत्या वदनारविन्दे विषण्णभावं मदनकदनखेदानुभूतं ज्ञात्वा तन्निमित्तं ज्ञास्यँल्लीलया तदुपकण्ठमुपेत्यावोचम्—'सुमुखि तव मुखारविन्दस्य दैन्यकारणं कथय' इति । सा रहस्यसंजातविश्रम्भतया विहाय लज्जाभये शनैरभाषत—'सौम्य मानसारो मालवाधीश्वरो वार्द्धकस्य प्रबलतया निजनन्दनं दर्पसारमुज्जयिन्यामभ्यषिञ्चत् । स कुमारः सप्तसागरपर्यन्तं महीमण्डलं पालयिष्यन्निजपैतृष्वस्रीयावुद्दण्डकर्माणौ चण्डवर्मदारुवर्माणौ धरणीभरणे नियुज्य तपश्चरणाय राजराजगिरिमभ्यगात् । राज्यं सर्वमसपत्नं शासति चण्डवर्मणि दारुवर्मा मातुलाग्रजन्मनोः शासनमतिक्रम्य

अपाङ्गयोर्नयनप्रान्तयोर्वर्तन्ते तैः । 'साङ्गभङ्गिभिः' इति पाठेऽङ्गभङ्गिभिः विकृतिभिः सहितैः । 'व्याजच्छलांनभे भङ्गिः' इति रभसः । विशेषावस्थानशोभिभिरित्यर्थः । मनोवृत्तिं मनोव्यापारम् । अभिलाषमिति यावत् । अनुरागं प्रीतिम् । अन्यदैकस्मिन्काले । भवतो गतिं दशां स्थितिमिति यावत् । 'गतिर्मार्गे दशायां च' इति विश्वः । उपान्ते समीपे । विहारवनं क्रीडोद्यानम् । शकुन्ताः पक्षिणः । उत्कलिकोत्कण्ठा । चिन्तयाऽऽक्रान्तं पर्याकुलं चित्तं यस्याः । दीनवदनां विषण्णमुखीम् । एकभूमिं मुख्यस्थानम् । संभ्रमेण सहितं ससंभ्रमं यत् प्रेम च लज्जा च कौतुकं च तैर्मनोरमम् । लीलया लीलानां वा विलोकनं तस्य सुखम् । मदनकदनं उन्माथस्तस्मात्खेदः तस्मादनुभूतम् । उपकण्ठं समीपम् । रहस्यविषये संजात उत्पन्नो विश्रम्भः तत्तया । वार्द्धकस्य जरायाः । पैतृष्वस्रीयौ पितुः स्वसायास्तनयौ । 'पितृष्वसुश्छण्' इति छण् । 'मातृपितृभ्यां स्वसा' इति स्वसुः सस्य षत्वं च । उद्दण्डं घोरं कर्म ययोः । धरणीभरणे पृथ्वीपोषणे । राज्यपालन इत्यर्थः । राजराजः कुबेरस्तस्य गिरिः कैलासः । असपत्नं निर्जितशत्रुम् । निष्कण्टकमिति यावत् । शासति सति । मातुलो मातुर्भ्राता अग्रजन्मा ज्यायान्भ्राता च तयोः । 'मातुर्डुलच्' । 'पितृव्यमातुल–' इति

१ साऽङ्गवर्तिभिः; साङ्गभङ्गिभिः. २ वनान्ते. ३ अवोचिषम. ४ राजगिरिम्.

पारदार्यपरद्रव्यापहरणादि दुष्कर्म कुर्वाणो मन्मथसमानस्य भवतो लावण्यायत्तचित्तां मामेकदा विलोक्य कन्यादूषणदोषं दूरीकृत्य बलात्कारेण रन्तुमुद्युङ्क्ते । तच्चिन्तया दैन्यमगच्छम्' इति । तस्या मनोगतं मयि रागोद्रेकं मन्मनोरथसिद्ध्यन्तरायं च निशम्य बाष्पपूर्णलोचनां तामाश्वास्य दारुवर्मणो मारणोपायं च विचार्य वल्लभामवोचम्—'तरुणि भवदभिलाषिणं दुष्टहृदयमेनं निहन्तुं मृदुरुपायः कश्चिन्मया चिन्त्यते । यक्षः कश्चिदधिष्ठाय बालचन्द्रिकां निवसति । तदाकारसंपदाशाशृङ्खलितहृदयो यः संबन्धयोग्यः साहसिको रतिमन्दिरे तं यक्षं निर्जित्य तयैकसखीसमेतया मृगाक्ष्या संलापामृतसुखमनुभूय कुशली निर्गमिष्यति तेन चक्रवाकसंशयाकारपयोधरा विवाह-
सिद्धेनैकेनावादीति पुरजनस्य पुरतो भवदीयैः सत्य-वाक्यैर्जनैरसकृत्कथनीयम् । तदनु दारुवर्मा वाक्यानीत्थंविधानि श्रावंश्रावं तूष्णीं यदि भिया स्थास्यति तर्हि वरम् । यदि वा दौर्जन्येन त्वया संगमङ्गीकरिष्यति तदा स भवदीयैरित्थं वाच्यः—'सौम्य दर्पसारवसुधाधिपामात्यस्य भवतोऽस्मन्निवासे साहसकरणमनुचितम् । पौरजनसाक्षिकं भवन्मन्दिरमानीतया तया तोयजाक्ष्या सह क्रीडन्नायुष्मान्यदि भविष्यसि तदा परिणीय तरुणीं मनोरथान्निर्विश' इति । सोऽप्येतदङ्गीकरिष्यति । त्वं सखीवेषधारिणा मया सह तस्य मन्दिरं गच्छ । अहमेकान्तनिकेतने मुष्टिजानुपादाघातैस्तं रभसान्निहत्य पुनरपि वयस्यामिषेण भवतीमनु निःशङ्कं निर्ग-

---

निपातः । शासनमतिक्रम्य तन्निदेशमतिक्रम्य । उल्लङ्घ्येत्यर्थः । पारदार्यं परदाराभिमर्शः । मन्मथः कामः । मनो मथ्नातीति मन्मथः । आयत्तमधीनम् । रागोद्रेकं प्रीत्यतिशयम् । मृदुः कोमलः । बालचन्द्रिकामिति 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् । तस्या आकारसंपदः शोभनाकृतेराशा तया शृङ्खलितं हृदयं यस्य सः । साहसिकः साहसं कर्तुमुद्यतः । सत्यवाक्यैः आप्तैरित्यर्थः । श्रावंश्रावं श्रुत्वा श्रुत्वा । णमुल् । तोयजं कमलम् । निर्विशोपभुङ्क्ष्व । निकेतने गृहे । रभसाद्वेगेन ।

ष्यामि । तदेनमुपायमङ्गीकृत्य विगतसाध्वसलज्जा भवज्जनकजननीसहोदराणां पुरत आवयोः प्रेमातिशयमाख्याय सर्वथाऽस्मत्परिणयकरणे ताननुनयेः । तेऽपि वंशसंपल्लावण्याढ्याय यूने मह्यं त्वां दास्यन्त्येव । दारुवर्मणो मारणोपायं तेभ्यः कथयित्वा तेषामुत्तरमाख्येयं मह्यम्' इति । साऽपि किंचिदुत्फुल्लसरसिजानना मामब्रवीत्—'सुभग क्रूरकर्माणं दारुवर्माणं भवानेव हन्तुमर्हति । तस्मिन्हते सर्वथा युष्मन्मनोरथः फलिष्यति । एवं क्रियताम् । भवदुक्तं सर्वमहमपि तथा करिष्ये' इति मामसकृद्विवृत्तवदना विलोकयन्ती मन्दं मन्दमगारमगात् । अहमपि बन्धुपालमुपेत्य शकुनज्ञात्तस्मात् 'त्रिंशद्दिवसानन्तरमेव भवत्सङ्गः संभविष्यति' इत्यशृणवम् । तदनु मदनुगम्यमानो बन्धुपालो निजावासं प्रविश्य मामपि निलयाय विससर्ज । मन्मायोपायवागुरापाशलग्नेन दारुवर्मणा रतिमन्दिरे रन्तुं समाहूता बालचन्द्रिका तं गमिष्यन्ती दूतिकां मन्निकटमभिप्रेषितवती । अहमपि मणिनूपुरमेखलाकङ्कणकटकताटङ्कहारक्षौमकज्जलं वनितायोग्यं मण्डनजातं निपुणतया तत्तत्स्थानेषु निक्षिप्य सम्यगङ्गीकृतमनोज्ञवेषो वल्लभया तया सह तदागारद्वारोपान्तमगच्छम् । द्वाःस्थकथितास्मदागमनेन सादरं विहिताभ्युद्गतिना तेन द्वारोपान्तनिवारिताशेषपरिवारेण मदन्विता बालचन्द्रिका संकेतागारमनीयत । नगरव्याकुलां यक्षकथां परीक्षन्नागरिकजनोऽपि कुतूहलेन दारुवर्मणः प्रतीहारभूमिमगमत् । विवेकशून्य-

---

अनुनयेस्तोषयेः । लिङ् । वंशसंपच्च लावण्यं च ताभ्यामाढ्याय युक्ताय संपन्नाय वा । किंचिदुत्फुल्लं यत्सरसिजं कमलं तद्वदाननं यस्याः । अलुक्समासः । विवृत्तं परावृत्तं वदनं मुखं यस्याः सा । अगारं गृहम् । निलयाय । गृहं गन्तुमित्यर्थः । 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । मम मायोपायः कपटयुक्तिः स एव वागुरा बन्धनं तस्याः पाशलग्नेन । नूपुरो मञ्जीरः पादभूषणम् । मेखला काञ्चीदाम कटिभूषणम् । कङ्कणं कटकं च हस्तभूषणे । ताटङ्कं कर्णभूषणम् । क्षौमं दुकूलम् । तत्तत्स्थानेषु योग्यस्थानेषु । विहिताऽभ्युद्गतिर्येन । नगरव्याकुलां पुरप्रसृताम् । परीक्षन्निति प्रयोगः प्रामादिकः । परीक्षमाण इति वक्तव्यम् । कुतूहलेन कौतुकेन । प्रतीहारभूमिं द्वार-

मतिरसौ रागातिरेकेण रत्नखचितहेमपर्यङ्के हंसतूलगर्भशयन-मानीय तरुणीं तस्यै मह्यं तामिस्रासम्यगनवलोकितपुंभावाय मनोरम-स्त्रीवेषाय च चामीकरमणिमयमण्डनानि सूक्ष्माणि चित्रवस्त्राणि कस्तूरिकामिलितं हरिचन्दनं कर्पूरसहितं ताम्बूलं सुरभीणि कुसुमानीत्यादिवस्तुजातं समर्प्य मुहूर्तद्वयमात्रं हासवचनैः संलपन्नतिष्ठत् । ततो रागान्धतया सुमुरूर्यालिङ्गने मतिं व्यधत्त । रोषारुणितोऽहमेनं पर्यङ्कतलान्निःशङ्को निपात्य मुष्टिजानुपादा-घातैः प्राहरम् । नियुद्धरभसविकलमलंकारं पूर्ववन्मेलयित्वा भयकम्पितां नताङ्गीमुपलालयन्मन्दिराङ्गणमुपेतः साध्वस-कम्पित इवोच्चैरकूजमहम्—'हा बालचन्द्रिकाधिष्ठितेन घोरा-कारेण यक्षेण दारुवर्मा निहन्यते । सहसा समागच्छत । पश्यतेमम्' इति । तदाकर्ण्य मिलिता जनाः समुद्यद्बाष्पा हाहानिनादेन दिशो बधिरयन्तः 'बालचन्द्रिकामधिष्ठितं यक्षं बलवन्तं शृण्वन्नपि दारुवर्मा मदान्धस्तामेवायाचत । तदसौ स्वकीयेन कर्मणा निहतः । किं तस्य विलापेन' इति मिथो लपन्तः प्राविशन् । कोलाहले तस्मिंश्चटुल-लोचनया सह नैपुण्येन सहसा निर्गतो निजावासमगाम् । ततो गतेषु कतिपयदिनेषु पौरजनसमक्षं सिद्धादेशप्रकारेण विवाह्य तामिन्दुमुखीं पूर्वसंकल्पितान्सुरतविशेषान्यथेष्टमन्वभूवम् । बन्धुपालशकुननिर्दिष्टे दिवसेऽस्मिन्निर्गत्य पुराद्बहिर्वर्तमानो नेत्रोत्सवकारि भवदवलोकनसुखमप्य-नुभवामि' इति ।

---

प्रदेशम् । विवेकेन शून्या रहिता मतिर्यस्य । हंसतूलो गर्भे यस्य तत् । तमिस्रा रात्रिस्तस्यां सम्यगनवलोकितो न दृष्टः पुंभावः पुंस्त्वं यस्य तस्मै । चामीकरं सुवर्णं मणयश्च तेषां विकाराः चामीकरमणिमयानि । 'चामीकरं जातरूपम्' इत्यमरः । मण्डनान्यलंकाराम् । चित्राणि रमणीयानि । मुहूर्तो द्वादशक्षणा-वधिः कालः । नियुद्धस्य बाहुयुद्धस्य रभसेन वेगेन विकलं स्वस्थानच्युतम् । 'नियुद्धं बाहुयुद्धेऽथ' इत्यमरः । मेलयित्वा स्थाने स्थाने पर्यवस्थाप्य । उपलाल-यन्सान्त्वयन् । अङ्गणमजिरम् । साध्वसं भयम् । अकूजमाक्रोशं कृतवान् । घोर आकारो यस्य । समुद्यन्ति बाष्पाणि येषां ते । हाहानिनादेन हा हा इति शब्देन ।

---

१ कुसुमानि ललितं वस्तुजातम्. २ ०स्त्रीकुच-कच-ग्रहणे. ३ अहह.

एवं मित्रवृत्तान्तं निशम्याम्लानमानसो राजवाहनः स्वस्य च सोमदत्तस्य च वृत्तान्तमस्मै निवेद्य सोमदत्तम् 'महाकालेश्वराराधनानन्तरं भवद्वल्लभां सपरिवारां निजकटकं प्रापय्यागच्छ' इति नियुज्य पुष्पोद्भवेन सेव्यमानो भूस्वर्गायमानमवन्तिकापुरं विवेश । तत्र 'अयं मम स्वामिकुमारः' इति बन्धुपालादये बन्धुजनाय कथयित्वा तेन राजवाहनाय बहुविधां सपर्यां कारयन्सकलकलाकुशलो महीसुरवर इति पुरि प्रकटयन्पुष्पोद्भवोऽमुष्य राज्ञो मज्जनभोजनादिकमनुदिनं स्वमन्दिरे कारयामास ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते पुष्पोद्भवचरितं नाम चतुर्थ उच्छ्वासः ।

## पञ्चमोच्छ्वासः ।

अथ मनिकेतनसेनानायकेन मलयगिरिमहीरुहनिरन्तरावासिभुजंगमभुक्तावशिष्टेनेव सूक्ष्मतरेण धृतहरिचन्दनपरिमलभरेणेव मन्दगतिना दक्षिणानिलेन वियोगिहृदयस्थं मन्मथानलमुज्ज्वलयन्, सहकारकिसलयमकरन्दास्वादनरक्तकण्ठानां मधुकरकल-

---

दिशो बधिरयन्त उच्चैराक्रोशन्तः । चटुले चञ्चले । **एवमिति** । निजकटकं स्ववासस्थानम् । भुवि स्वर्ग इव आचरति तम् । सपर्यां पूजां सत्कारं वा । प्रकटयन्प्रथयन् । मज्जनं स्नानम् ।

**इति श्रीदशकुमारचरितपूर्वपीठिकाटीकायां पददीपिकाभिधायां चतुर्थ उच्छ्वासः ।**

**अथेति** । मीनो मत्स्यः केतनो ध्वजो यस्य । काम इत्यर्थः । तस्य सेनाया नायकोऽग्रवीरः । सेनापतिरित्यर्थः । दक्षिणानिलस्यात्युद्दीपकत्वान्नायक इत्युक्तिः । मलय एतत्संज्ञको दक्षिणदेशवर्ती कोऽपि गिरिः । निरन्तरं निबिडमित्यर्थः । सर्पा वाताशिन इत्यनिलस्य भुक्तत्वम् । अनिलः सूक्ष्मतरोऽल्पोऽतीव मन्दः । मन्दत्वे पूर्वपदं हेतुः । एवमुत्तरत्रापि धृतहरीत्यादि मन्दगतित्वे हेतुभूतम् । परिमल आमोदः । यो भाराक्रान्तः स मन्दं यातीति स्वभावोक्तिः । अनिलो वायुः । मन्मथानलं कामाग्निम् । उज्ज्वलयन्दीप्तं कुर्वन् । मकरन्दो मधु । रक्तो रागयुक्तः ।

---

१ मज्जन. २ धृत.

कण्ठानां काकलीकलकलेन दिक्चक्रं वाचालयन्, मानिनीमानसोत्कलिकामुपनयन्, माकन्दसिन्दुवाररक्ताशोककिंशुकतिलकेषु कलिकामुपपादयन्, मदनमहोत्सवाय रसिकमनांसि समुल्लासयन्, वसन्तसमयः समाजगाम । तस्मिन्नतिरमणीये कालेऽवन्तिसुन्दरी नाम मानसारनन्दिनी प्रियवयस्यया बालचन्द्रिकया सह नगरोपान्तरम्योद्याने विहारोत्कण्ठया पौरसुन्दरीसमवायसमन्विता कस्यचिच्चूतपोतकस्य च्छायाशीतले सैकततले गन्धकुसुमहरिद्राक्षतचीनाम्बरादिनानाविधेन परिमलद्रव्यनिकरेण मनोभवमर्चयन्ती रेमे । तत्र रतिप्रतिकृतिमवन्तिसुन्दरीं द्रष्टुकामः काम इव वसन्तसहायः पुष्पोद्भवसमन्वितो राजवाहनस्तदुपवनं प्रविश्य तत्र तत्र मलयमारुतान्दोलितशाखानिरन्तरसमुद्भिन्नकिसलयकुसुमफलसमुल्लसितेषु रसालतरुषु कोकिलकुलकीरालिमधुकराणामालापाञ्श्रावंश्रावं[1] किंचिद्विकसदिन्दीवरकह्लारकैरवराजीवराजिकेलिलोलकलहंससारसकारण्डवचक्रवाकचक्रवालकलरवव्याकुलविमलशीतलसलिलललितानि सरांसि दर्शंदर्शम्, अमन्दलीलया ललनासमीपमवाप । बालचन्द्रिकया 'निःशङ्कमित आगम्यताम्' इति

कलकण्ठाः कोकिलाः । कलकलः कोलाहलः । वाचालयन्मुखरं कुर्वन् । मानिन्यो मानवत्यः स्त्रियः । उत्कलिकोत्कण्ठा । उपनयन्प्रापयन् । माकन्दः सहकारः । सिन्दुवारो निर्गुण्डी । किंशुकः पलाशः । तिलकस्तत्संज्ञको वृक्षः । कलिका कोरकः । उपपादयन् जनयन् । रसिकशब्देनात्र कामिजना गृह्यन्ते । समुल्लासयन्नुत्साहयन् । मानसार इति मालवेश्वरनाम । वयस्या सखी । चूतपोतको बालाम्रः । सैकतः सिकतामयः प्रदेशः । चीनाम्बरं सूक्ष्मवस्त्रम् । एतान्यादौ येषां तानि गन्धादीनि तैर्नानाविधस्तेन । प्रतिकृतिं प्रतिमाम् । वसन्तः सहायो यस्येति तथा । मलयमारुतो दक्षिणानिलस्तेन आन्दोलिताश्चालिताः याः शाखाः तत्र निरन्तरं समुद्भिन्नानि यानि किस० फलानि तैः समुल्लसितेषु । रसालतरुराम्रवृक्षः । कीराः शुकाः । आलयः पङ्क्तयः । आलापान्रवान् । किंचिद्विकसन्ति यानि इन्दीवरकह्लारकैरवराजीवानि तेषां राजिषु याः केलयः क्रीडास्तत्र लोला आसक्ता ये कलहंससारसकारण्डवचक्रवाकास्तेषां चक्रवालस्य मण्डलस्य यः कलरवः कलोऽव्यक्तमधुरः स्वरः तेन व्याकुलानि व्याप्तानि यानि विमल० सलिलानि तैः ललितानि । इन्दीवरं नीलम् । कह्लारं शुक्लम् । कैरवमपि सितम् । राजीवमिति कमलसामान्यनाम । कलहंसो हंसजातिः पक्षिविशेषः । सारसः पुष्कराह्वः । कारण्डवो मद्गुः । 'पाणकोंबडा' इति ख्यातः । विमलान्यकलुषाणि । दर्शंदर्शम् ।

१ कोकिलकीरालिकुलमधु०

हस्तसंज्ञया समाहूतो निजतेजोनिर्जितपुरुहूतो राजवाहनः कृशोदर्या अवन्तिसुन्दर्या अन्तिकं समाजगाम। या वसन्तसहायेन समुत्सुकतया रतेः केलीशालभञ्जिकाविधित्सया कंचन नारीविशेषं विरच्यात्मनः क्रीडाकासारशारदारविन्दसौन्दर्येण पादद्वयम्, उद्यानवनदीर्घिकामत्तमरालिकागमनरीत्या लीलालसगतिविलासम्, तूणीरलावण्येन जङ्घे, लीलामन्दिरद्वारकदलीलालित्येन मनोज्ञमूरुयुगम्, जैत्ररथचक्रचातुर्येण घनं जघनम्, किंचिद्विकसल्लीलावतंसकह्लारकोरककोटरानुवृत्त्या गङ्गावर्तसनाभिं नाभिम्, सौधारोहणपरिपाट्या वलित्रयम्, मौर्वीमधुकरपङ्क्तिनीलिमलीलया रोमावलिम्, पूर्णसुवर्णकलशशोभया कुचद्वन्द्वम्, लतामण्डपसौकुमार्येण बाहू, जयशङ्खाभिख्यया कण्ठम्, कमनीयकर्णपूरसहकारपल्लवरागेण प्रतिबिम्बीकृतबिम्बं रदनच्छदम्, बाणायमानपुष्पलावण्येन शुचिस्मितम्, अग्रदूतिकाकलकण्ठिकाकलालापमाधुर्येण वचनजातम्, सकलसैनिकनायकमलयमारुतसौरभ्येण निःश्वासपवनम्, जयध्वजमीनदर्पेण लोचनयुगलम्, चापयष्टिश्रिया भ्रूलते, प्रथमसुहृदः सुधा-

वारंवारं दृष्ट्वेत्यर्थः। 'णमुल्'। निजतेजसा स्वानुभावेन निःशेषं जितः पुरुहूत इन्द्रो येन। कृशमुदरं यस्याः। येति। वसन्तसहायेन कामेन। रतेः कामपत्न्याः केलीशालभञ्जिका क्रीडार्थं निर्मिता पुत्रिका। विधातुं कर्तुमिच्छा विधित्सा तया। 'सनि मीमाघुरभलभ—' इत्यच इसभ्यासलोपश्च। शारदं शरत्संबन्धि। दीर्घिका वापी। मरालिका हंसी। लीलया अलसा जडा गतिः। तूणीरो निषङ्गः। लालित्येन सौन्दर्येण। किंचिद्विकसन् यः लीलावतंसभूतः कह्लारकोरकस्तस्य कोटरं मध्यभागः तस्य अनुवृत्तिः सादृश्यं तथा। सौधः सुधानिर्मितं शिरोगृहं प्रासादतलं वा। परिपाट्यनुक्रमः। सोपानपङ्क्तिरित्यर्थः। वलीनामुदरस्थानां त्रयम्। मौर्वी ज्या। नीलिमा नीलत्वम्। रोमावलिं रोमपङ्क्तिम्। पूर्णाः जलेनेति शेषः। सुवर्णकलशा अनङ्गद्वारमङ्गलसूचकाः। अभिख्या शोभा। कमनीयः सुन्दरः कर्णपूरः कर्णभूषणभूतः यः सहकारपल्लवस्तस्य रागेण। प्रतिबिम्बीकृतं बिम्बं येनेतादृशः। बिम्बफलमधरनिर्माणात्प्राक् बिम्बमासीत्। अधुना तु प्रतिबिम्बं जातम्। बिम्बफलादप्यस्या अधरोष्ठेऽधिको राग इति तात्पर्यम्। रदनच्छदमोष्ठम्। बाणवदाचरति तत्। अग्रदूतिका या कलकण्ठिका कोकिला तस्या यः कल आलापस्तस्य माधुर्येण। जातं समूहः। सुरभेर्भावः सौरभ्यम्। सुधाकरश्चन्द्रः। अपनीतः कलङ्कोऽङ्को यस्यास्तया।

१ शारारविन्द॰ २ कामि कर्ण॰.

करस्यापनीतकलङ्कया कान्त्या वदनम्, लीलामयूरबर्हभङ्गया केशपाशं च विधाय समस्तमकरन्दकस्तूरिकासंमितेन मलयजरसेन प्रक्षाल्य कर्पूरपरागेण संमृज्य निर्मितेव रराज । सा मूर्तिमतीव लक्ष्मीर्मालवेशकन्यका स्वेनैवाराध्यमानं संकल्पितवरप्रदानायाविर्भूतं मूर्तिमन्तं मन्मथमिव तमालोक्य मन्दमारुतान्दोलिता लतेव मदनावेशवती चकम्पे । तदनु क्रीडाविश्रम्भान्निवृत्ता लज्जया कानि कान्यपि भावान्तराणि व्यधत्त । 'ललनाजनं सृजता विधात्रा नूनमेषा घुणाक्षरन्यायेन निर्मिता । नो चेदब्जभूरेवंविधनिर्माणनिपुणो यदि स्यात्तर्हि तत्समानलावण्यामन्यां तरुणीं किं न करोति' इति सविस्मयानुरागं विलोकयतस्तस्य समक्षं स्थातुं लज्जिता सती किंचित्सखीजनान्तरितगात्रा तन्नयनाभिमुखैः किंचिदाकुञ्चितै रेचितैर्भ्रूलतैरपाङ्गवीक्षितैरात्मनः कुरङ्गस्यानायमानलावण्यं राजवाहनं विलोकयन्त्यतिष्ठत् । सोऽपि तस्यास्तदोत्पादितभावरसानां सामग्र्या लब्धबलस्येव विषमशरस्य शरव्यायमाणमानसो बभूव। सा मनसीत्थमचिन्तयत्—'अनन्यसाधारणसौन्दर्येणानेन कस्यां पुरि भाग्यवतीनां तरुणीनां लोचनोत्सवः क्रियते । पुत्ररत्नेनामुना पुरंध्रीणां पुत्रवतीनां सीमन्तिनीनां का नाम सीमन्तमौक्तिकीक्रियते । काऽस्य देवी । किमत्रागमनकारण-

बर्हं पिच्छम् । भङ्गी रचना । पाशं कलापम् । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । समस्तः सर्वः एकीकृतो वा । संमितेन युक्तेन । मलये जातं मलयजं चन्दनम् । परागो धूलिः । मूर्तिमती साक्षात् । संकल्पितस्य मनसि चिन्तितस्य वरस्य प्रदानाय । आविर्भूतमागतम् । मन्मथः कामः । विश्रम्भो विश्वासः । यथा घुणसंज्ञः कीटः काष्ठं विध्यन्नक्षराकृतिं निर्मातुं यदृच्छया कदाऽपि प्रभवति तथा । काकतालीयन्यायेनेत्यर्थः । नोचेद्यद्येवं न स्यात्तर्हि । अब्जभूर्ब्रह्मा । अन्तरितान्याच्छादितानि । रेचिता तिर्यग्विवर्तिता । कुरङ्गो मृगः । आनायो जालं स इवाचरत् लावण्यं यस्य । विषमाः पञ्च कठिनास्तीव्रा वा शरा यस्य । कामस्येत्यर्थः । शरव्यं लक्ष्यम् । पुरंध्रीणां पतिपुत्रवतीनाम् । सीमन्तिनी नारी । सीमन्तः केशवेशः तत्र मौक्तिकं तत्क्रियते । का पुत्रवतीनां धुरि तिष्ठतीति तात्पर्यार्थः ।

१ अञ्चित.

मस्य । मन्मथो मामपहसितनिजलावण्यमेनं विलोकयन्तीमसूययेवातिमात्रं मथ्नन्निजनाम सान्वयं करोति । किं करोमि । कथमयं ज्ञातव्यः ' इति । ततो बालचन्द्रिका तयोरन्तरङ्गवृत्तिं भावविवेकैर्ज्ञात्वा कान्तासमाजसंनिधौ राजनन्दनोदन्तस्य सम्यगाख्यानमनुचितमिति लोकसाधारणैर्वाक्यैरभाषत—' भर्तृदारिके अयं सकलकलाप्रवीणो देवतासांनिध्यकरण आहवनिपुणो भूसुरकुमारो मणिमन्त्रौषधिज्ञः परिचर्यार्हो भवत्या पूज्यताम् ' इति। तदाकर्ण्य निजमनोरथमनुवदन्त्या बालचन्द्रिकया संतुष्टान्तरङ्गा तरङ्गावली मन्दानिलेनेव संकल्पजेनाकुलीकृता राजकन्या जितमारं कुमारं समुचितासनासीनं विधाय सखीहस्तेन शस्तेन गन्धकुसुमाक्षतघनसारताम्बूलादिनानाजातिवस्तुनिचयेन पूजां तस्मै कारयामास । राजवाहनोऽप्येवमचिन्तयत्—'नूनमेषा पूर्वजन्मनि मे जाया यज्ञवती । नो चेदेतस्यामेवंविधोऽनुरागो मन्मनसि न जायेत । शापावसानसमये तपोनिधिदत्तं जातिस्मरत्वमावयोः समानमेव । तथाऽपि कालजनितविशेषसूचकवाक्यैरस्या ज्ञानमुत्पादयिष्यामि ।' तस्मिन्नेव समये कोऽपि मनोरमो राजहंसः केलीविधित्सया तदुपकण्ठमगमत् । समुत्सुकया राजकन्यया मरालग्रहणे नियुक्तां बालचन्द्रिकामवलोक्य ' समुचितो वाक्यावसर एषः ' इति संभाषणनिपुणो राजवाहनः सलीलमलपत्—' सखि पुरा शाम्बो नाम कश्चिन्महीवल्लभो मनोवल्लभया सह विहारवाञ्छया कमलाकरमवाप्य तत्र कोकनदकदम्बसमीपे निद्राधीनमानसं राजहंसं शनैर्गृहीत्वा बिसगुणेन तस्य चरणयुगलं निगडयित्वा कान्तामुखं सानुरागं विलोकयन्मन्दस्मितविकसितैककपोलमण्डलस्तामभाषत—' इन्दुमुखि मया बद्धो मरालः

असूययाऽक्षमया । सान्वयमन्वर्थम् । मननं मत् संज्ञा । मथतीति मथः । मतो मथः मन्मथः इति व्युत्पत्त्येति भावः । अन्तरङ्गवृत्तिं मनोवृत्तिम् । भावो मानसो विकारः । सांनिध्यकरणो देवतासाक्षात्कारवान् । आहवो युद्धम् । अनुवदन्त्या सदृशं वदन्त्या । संकल्पजः कामः । नाना जातयो येषां तानि नानाजातीनि ताम्बूलादीनि वस्तूनि तेषां निचयेन समूहेन । जातिस्मरत्वं पूर्वजातिस्मरणम् । विधित्सा कर्तुमिच्छा । मरालो हंसः । महीवल्लभो राजा । कमलाकरः सरः । कोकनदं रक्तोत्पलम् । बिसानां मृणाल-

१ इतरंतररागवृत्तिम्.

शान्तो मुनिवदास्ते । स्वेच्छयाऽनेन गम्यताम् ' इति । सोऽपि राजहंसः शाम्बमशपत्—' महीपाल यदस्मिन्नम्बुजखण्डेऽनुष्ठानपरायणतया परमानन्देन तिष्ठन्तं नैष्ठिकं मामकारणं राज्यगर्वेणावमानितवानसि तदेतत्पाप्मना रमणीविरहसंतापमनुभव ' इति । विषण्णवदनः शाम्बो जीवितेश्वरीविरहमसहिष्णुर्भूमौ दण्डवत्प्रणम्य सविनयमभाषत—' महाभाग यदज्ञानेनाकरवं तत्क्षमस्व' इति । स तापसः करुणाकृष्टचेतास्तमवदत्—' राजन् इह जन्मनि भवतः शापफलाभावो भवतु । मद्वचनस्यामोघतया भाविनि जनने शरीरान्तरं गताया अस्याः सरसिजाक्ष्या रसेन रमणो भूत्वा मुहूर्तद्वयं मच्चरणयुगलबन्धनकारितया मासद्वयं शृङ्खलानिगडितचरणो रमणीवियोगविषादमनुभूय पश्चादनेककालं वल्लभया सह राज्यसुखं लभस्व ' इति । तदनु जातिस्मरत्वमपि तयोरन्वगृह्णात् । तस्मान्मरालबन्धनं न करणीयं त्वया ' इति । साऽपि भर्तृदारिका तद्वचनाकर्णनाभिज्ञातस्वपुरातनजननवृत्तान्ता ' नूनमयं मत्प्राणवल्लभः ' इति मनसि जानती रागपल्लवितमानसा [1]समन्दहासमवोचत्—' सौम्य पुरा शाम्बो यज्ञवतीसंदेशपरिपालनाय तथाविधं हंसबन्धनमकार्षीत् । तथा हि लोके पण्डिता अपि दाक्षिण्येनाकार्यं कुर्वन्ति ' इति । कन्याकुमारावेवमन्योन्यपुरातनजननना[2]मधेये परिचिते परस्परज्ञानाय साभिज्ञमुक्त्वा मनोजरागपूर्णमानसौ बभूवतुः ।

तस्मिन्नवसरे मालवेन्द्रमहिषी परिजनपरिवृता दुहितृकेलीविलोकनाय तं देशमवाप । बालचन्द्रिका तु तां दूरतो विलोक्य ससंभ्रमं रहस्यनिर्भेदभिया हस्तसंज्ञया पुष्पोद्भवसेव्यमानं राजवाहनं वृक्षवाटिकान्तरितगात्रमकरोत् । सा मानसारमहिषी सखीसमेताया

---

नन्तूनां गुणो रज्जुः । तन्निर्मित इत्यर्थः । खण्डे समुदाये । नैष्ठिकं ब्रह्मचारिणम् । पाप्मना पापेन । **इहेति** । मम शापो न त्वां बाधेतेत्यर्थः । अमोघतया अनिष्फलतया । जनने जन्मनि । रसेनानुरागेण । निगडितौ बद्धौ । रागपल्लवितमुद्भूतप्रेमपूर्णमित्यर्थः । दाक्षिण्यं ' दाक्षिण्यं चेष्टया वाचा परच्छन्दानुवर्तनम् ' इति । साभिज्ञं सप्रत्यभिज्ञम् । परस्परप्रत्ययो यथा स्यात्तथेत्यर्थः । **तस्मिन्निति** । महिषी पट्टाभिषिक्ता । रहस्यं भिद्येदिति भिया । वाटिका गृहोद्यानम् । ' वाटी वास्तौ गृहोद्यानकट्योः '

1 मन्दहासपूर्वम्. 2 नामधेयपरिचिते.

दुहितुर्नानाविधां विहारलीलामनुभवन्ती क्षणं स्थित्वा दुहित्रा समेता निजागारगमनायोद्युक्ता बभूव । मातरमनुगच्छन्त्यवन्तिसुन्दरी ‘ राजहंसकुलतिलक विहारवाञ्छया केलीवने मदन्तिकमागतं भवन्तमकाण्ड एव विसृज्य मया समुचितमिति जनन्यनुगमनं क्रियते । तदनेन भवन्मनोरागोऽन्यथा मा भूत् ’ इति मरालमिव कुमारमुद्दिश्य समुचितालापकलापं वदन्ती पुनः पुनः परिवृत्तदीननयना वदनं विलोकयन्ती निजमन्दिरमगात् । तत्र हृदयवल्लभकथाप्रसङ्गे बालचन्द्रिकाकथिततदन्वयनामधेया मन्मथबाणपतनव्याकुलमानसा विरहवेदनया दिने दिने बहुलपक्षशशिकलेव क्षामक्षामाऽऽहारादिसकलव्यापारं परिहृत्य रहस्यमन्दिरे मलयजरसक्षालितपल्लवकुसुमकल्पिततल्पतलावर्तितनुलता बभूव । तत्र तथाविधावस्थामनुभवन्तीं मन्मथानलसंतप्तां सुकुमारीं कुमारीं निरीक्ष्य खिन्नो वयस्यागणः काञ्चनकलशसंचितानि हरिचन्दनोशीरघनसारमिलितानि तदभिषेककल्पितानि सलिलानि बिसतन्तुमयानि वासांसि च नलिनीदलमयानि तालवृन्तानि च संतापहरणानि बहूनि संपाद्य तस्याः शरीरमशिशिरयत् । तदपि शीतलोपचरणं सलिलमिव तप्ततैले तदङ्गे दहनमेव समन्तादाविश्चकार । किंकर्तव्यतामूढां विषण्णां बालचन्द्रिकामीषदुन्मीलितेन कटाक्षवीक्षितेन बाष्पकणाकुलेन विलोक्य विरहानलोष्णनिःश्वासग्लपिताधरया नताङ्ग्या शनैः सगद्गदं व्यलापि—‘ प्रियसखि कामः कुसुमायुधः पञ्चबाण इति नूनमसत्यमुच्यते । इयमहमयोमयैरसंख्यैरिषुभिरनेन हन्ये । सखि चन्द्रमसं वाडवानलादतितापकरं मन्ये ।

---

इति हैमः । राजहंसस्य पक्षिविशेषस्य कुले तिलक इव भूषणभूतः । पक्षे राजहंसस्यैतन्नाम्नो राज्ञः कुले तिलकः । अकाण्डे सहसा । आलापकलापं वचनजातम् । बहुलपक्षः कृष्णपक्षः । क्षामक्षामाऽतिकृशा । मलयजं चन्दनं तस्य रसेन क्षालिताः पल्लवाः ते च कुसुमानि च तैः कल्पितं तल्पं शय्या तस्य तले आवर्तिनी तनुलता यस्याः । उशीरो नलदः । ‘वाळा’ इति ख्यातः । घनसारः कर्पूरः । अभिषेकः स्नानम् । तालवृन्तानि व्यजनानि । वयस्यागणोऽशिशिरयदिति संबन्धः । शीतलोपचरणं शिशिरोपचारकल्पना । दहनमग्निम् । अयोमयैर्लोहनिर्मितैः । वाडवानलात्सागरान्तर्गताद्वह्नेः । पारावारः समुद्रः । तदैव तस्मिन्नेव

---

१ अनुरागः. २ परिवृत्य. ३ नलायन्त. ४ बबधा०.

यदाऽयमन्तः प्रविशति शुष्यति पारावारः । सति निर्गते तदैव वर्धते । दोषाकरस्य दुष्कर्म किं वर्ण्यते मया । यदनेन निजसहोदर्याः पद्मालयाया गेहभूतमपि कमलं विहन्यते । विरहानलसंतप्तहृदयस्पर्शेन नूनमुष्णीकृतः स्वल्पीभवति मलयानिलः । नवपल्लवकल्पितं तल्पमिदमनङ्गाग्निशिखापटलमिव संतापं तनोस्तनोति । हरिचन्दनमपि पुरा निजयष्टिसंश्लेषवदुरगरदनलिप्तोल्बणगरलसंकलितमिव तापयति शरीरम् । तस्मादलमलमायासेन शीतलोपचारे । लावण्यजितमारो राजकुमार एवागदंकारो मन्मथज्वरापहरणे । सोऽपि लब्धुमशक्यो मया । किं करोमि' इति । बालचन्द्रिका मनोजज्वरावस्थापरमकाष्ठां गतां कोमलाङ्गीं तां राजवाहनलावण्याधीनमानसामनन्यशरणामवेक्ष्यात्मन्यचिन्तयत्—'कुमारः सत्वरमानेतव्यो मया । नो चेदेनां स्मरणीयां गतिं नेष्यति मीनकेतनः । तत्रोद्याने कुमारयोरन्योन्यावलोकनवेलायामसमसायकः समं मुक्तसायकोऽभूत् । तस्मात्कुमारानयनं सुकरम्' । ततोऽवन्तिसुन्दरीरक्षणाय समयोचितकरणीयचतुरं सखीगणं नियुज्य राजकुमारमन्दिरमवाप । पुष्पबाणबाणतूणीरायमानमानसोऽनङ्गतप्तावयवसंपर्कपरिम्लानपल्लवशयनमधिष्ठितो राजवाहनः प्राणेश्वरीमुद्दिश्य सह पुष्पोद्भवेन संलपन्नागतां प्रियवयस्यामालोक्य पादमूलम्[1], अन्वेषणीया लतेव बालचन्द्रिकाऽऽगतेति संतुष्टमना निटिलतटमण्डनीभवदम्बुजकोरकाकृतिलसदञ्जलिपुटाम् 'इतो निषीद' इति

---

काले । दोषा रात्रिस्तां करोतीति तथा । दोषाणामाकरश्च । सहोदरी भागिनी । पद्मालया लक्ष्मीः । गेहं गृहम् । विरहानलेन संतप्तं च तद्धृदयं च तस्य स्पर्शेन । निजयष्टेः निजकाण्डस्य संश्लेषवन्त आश्लेषिणो ये उरगाः पन्नगास्तेषां रदनेषु दन्तेषु लिप्तं यदुल्बणं तीव्रं गरलं तेन संकलितं व्याप्तम् । न विद्यते गदः अस्य असौ अगदः । अगदमरोगं जन्तुं करोतीति अगदंकारो भिषक् । 'कारे सत्यागदस्य' इति मुम् । स्मरणीयां गतिं नेष्यति कथीकृतवपुषं करिष्यति । कुमारः कुमारी च कुमारौ तयोः । असमसायको मदनः । सममेककाले । मुक्तसायकोऽभूद्वेधमकरोत् । समयस्योचितानि समयोचितानि च तानि करणीयानि च तत्र चतुरम् । **अनङ्गेति** । अनङ्गेन कामेन तप्ता ये अवयवास्तैः संपर्केण परिम्लानाः पल्लवा यस्य तादृक् शयनम् । पादमूलमागतामित्यन्वयः । अन्वेषणीया, महौषधत्वादन्वेषणार्हा । **निटिलेति** । निटिलतटे ललाटदेशे मण्डनीभवन् अम्बुजकोरकस्य इव आकृतिर्यस्य सः अम्बुजकोरकाकृतिः लसन् यद्वा ०कृतिरिव लसन् शोभमानः अञ्जलिपुटो यस्यास्ताम् ।

---

१ पादपद्मूलम्.

निर्दिष्टसमुचितासनासीनामवन्तिसुन्दरीप्रेषितं सकर्पूरं ताम्बूलं विनयेन ददतीं तां कान्तावृत्तान्तमपृच्छत् । तया सविनयमभाणि—'देव क्रीडावने भवदवलोकनकालमारभ्य मन्मथमथ्यमाना पुष्पतल्पादिषु तापशमनमलभमाना वामनेनेवोन्नततरुफलमलभ्यं त्वदुरःस्थलालिङ्गन-सौख्यं स्मरान्धतया लिप्सुः सा स्वयमेव पत्रिकामालिख्य 'वल्लभायै-नामर्पय' इति मां नियुक्तवती'। राजकुमारः पत्रिकां तामादाय पपाठ—

**'सुभग कुसुमसुकुमारं जगदनवद्यं विलोक्य ते रूपम् ।**
**मम मानसमभिलषति त्वं चित्तं कुरु तथा मृदुलम्' ॥**

इति पठित्वा सादरमभाषत—'सखि छायावन्मामनुवर्तमानस्य पुष्पोद्भवस्य वल्लभा त्वमेव तस्या मृगीदृशो बहिश्चराः प्राणा इव वर्तसे । त्वच्चातुर्यमस्यां क्रियालतायामालवालमभूत् । तदखिलं करिष्यामि । नताङ्ग्या मन्मनःकाठिन्यमाख्यातम् । यदा केलीवने कुरङ्गलोचना लोचनपथमवर्तत तदैवापहृतमदीयमानसा सा स्वमन्दिर-मगात् । सा चेतसो माधुर्यकाठिन्ये स्वयमेव जानाति । दुष्करः कन्यान्तःपुरप्रवेशः । तदनुरूपमुपायमुपपाद्य श्वः परश्वो वा नताङ्गीं संगमिष्यामि । मदुदन्तमेवमाख्याय शिरीषकुसुमसुकुमाराया यथा शरीरबाधा न जायेत तथाविधमुपायमाचर' इति । बाल-चन्द्रिकाऽपि तस्य प्रेमगर्भितं वचनमाकर्ण्य संतुष्टा कन्यापुरमगच्छत् । राजवाहनोऽपि यत्र हृदयवल्लभावलोकनसुखमलभत तदुद्यानं विरहविनोदाय पुष्पोद्भवसमन्वितो जगाम । तत्र चकोर-

---

वामनो ह्रस्वाकृतिर्नरः । उन्नत उच्चः । लिप्सुर्लब्धुमिच्छति तथा । **सुभगेति ।** सुभग सुन्दरेति कोमलामन्त्रणे । कुसुममिव सुकुमारं पेलवम् । जगति अनवद्यं निर्दोषम् । यथा तव वपुः कोमलं न तथा तव चित्तमिति तद्विषया प्रार्थना । अत एवाग्र उक्तम्–'नताङ्ग्या मन्मनःकाठिन्यमाख्यातम्' इति । बहिश्चरन्ति ते । त्वं तस्याः प्राणतुल्या । ते प्राणा अन्तर्निवसन्ति त्वद्रूपा बहिश्चरन्तीत्येव भेदः । क्रियैव लता तस्याम् । आलवालमावालम् । 'अळें'. इति भाषायाम् । तस्या अनुरागवर्धनमिति भावः । लोचनपथमवर्तत दृष्टेत्यर्थः । अनुरूपं योग्यम् । उपपाद्य संपाद्य । श्व आगामिनि दिवसे । परश्वस्ततः परस्मिन्दिवसे । प्रेम-गर्भितं प्रेमयुक्तम् । चकोरस्येव लोचने यस्याः सा चकोरलोचना । तया

---

१ कान्तवृत्तान्तम्. २ त्वच्चित्तं. ३ यत्त्वाभीष्टं येन क्रियामनोरथः फलिष्यति तदखिलम्. ४ रन्तु-गन्तु-मम० कुरङ्ग०; ०नयना. ५ अभ्यवर्तत.

लोचनावचितपल्लवकुसुमनिकुरम्बं महीरुहसमूहं शरदिन्दुमुख्या मन्मथसमाराधनस्थानं च नताङ्गीपदपङ्क्तिचिह्नितं शीतलसैकततलं च सुदतीभुक्तमुक्तं माधवीलतामण्डपान्तरपल्लवतल्पं च विलोकयँल्ललनातिलकविलोकनवेलाजनितशेषाणि स्मारंस्मारं मन्दमारुतकम्पितानि नवचूतपल्लवानि मदनाग्निशिखा इव चकितो दर्शंदर्शं मनोजकर्णेजपानामिव कोकिलकीरमधुकराणां क्वणितानि श्रावंश्रावं मारविकारेण क्वचिदप्यवस्थातुमसहिष्णुः परिबभ्राम । ७

तस्मिन्नवसरे धरणीसुर एकः सूक्ष्मचित्रनिवसनः स्फुरन्मणिकुण्डलमण्डितो मुण्डितमस्तकमानवसमेतश्चतुरवेषमनोरमो यदृच्छया समागतः समन्ततोऽभ्युल्लसत्तेजोमण्डलं राजवाहनमाशीर्वादपूर्वकं ददर्श । राजा सादरम् 'को भवान् कस्यां विद्यायां निपुणः' इति तं पप्रच्छ । स च 'विद्येश्वरनामधेयोऽहमैन्द्रजालिकविद्याकोविदो विविधदेशेषु राजमनोरञ्जनाय भ्रमन्नुज्जयिनीमद्यागतोऽस्मि' इति शशंस । पुनरपि राजवाहनं सम्यगालोक्य 'अस्यां लीलावनौ पाण्डुरतानिमित्तं किम्' इति साभिप्रायं विहस्यापृच्छत् । पुष्पोद्भवश्च निजकार्यकरणं तर्कयन्[1]नेनमादरेण बभाषे—'ननु सतां सख्यस्याभाषणपूर्वतयाऽचिरं रुचिरभाषणो भवानस्माकं प्रियवयस्यो जातः । सुहृदामकथ्यं च किमस्ति । केलीवनेऽस्मिन्वसन्तमहोत्सवायागताया मालवेन्द्रसुताया राजनन्दन-

अवचितं पल्लवकुसुमानां निकुरम्बं समूहः यस्य । शरद इन्दुः शरदिन्दुस्तद्वन्मुखं यस्यास्तस्याः । शोभना दन्ता यस्याः सा सुदती तया आदौ भुक्तं पश्चान्मुक्तम् । ललनातिलकशब्देन सैव गृह्यते । •जनितानि यानि शेषाणि स्मरणीयानि । स्मारंस्मारं स्मृत्वा । दर्शंदर्शं दृष्ट्वा दृष्ट्वा । कर्णेजपः सूचकः । 'तत्पुरुषे कृति बहुलम्' इत्यनेन सप्तम्या अलुक् । तस्मिन्निति । सूक्ष्मं चित्रं च निवसनं वासो यस्य । स्फुरद्भ्यां मणिनिर्मिताभ्यां कुण्डलाभ्यां कर्णभूषणाभ्यां मण्डितः शोभितः । मुण्डितं मस्तकं येषामेतादृशैर्मानवैः समेतो युक्तः । यदृच्छया अकस्मात् । अभ्युल्लसत्तेजसो मण्डलं यस्य तम् । ऐन्द्रजालिकविद्या गारुडम् । लीलायाः क्रीडाया अवनिर्भूमिः । आभाषणं पूर्वं यस्मिंस्तत्तस्य भावस्तया । अकथ्यं कथनायोग्यम् ।

१ पुष्पोद्भवऐन्द्रजालिकं, ०ऐन्द्रजालिकचातुर्यम्. २ एवम्.

स्यास्य चाकस्मिकदर्शनेऽन्योन्यानुरागातिरेकः समजायत। सततसंभोगसिद्ध्युपायाभावेनासावीदृशीमवस्थामनुभवति' इति। विद्येश्वरो लज्जाभिरामं राजकुमारमुखमभिवीक्ष्य विरचितमन्दहासो व्याजहार—'देव भवदनुचरे मयि तिष्ठति तत्र कार्यमसाध्यं किमस्ति। अहमिन्द्रजालविद्यया मालवेन्द्रं मोहयन्पौरजनसमक्षमेव तत्तनयापरिणयं रचयित्वा कन्यान्तःपुरप्रवेशं कारयिष्यामीति वृत्तान्त एष राजकन्यकायै सखीमुखेन पूर्वमेव कथयितव्यः' इति। संतुष्टमना महीपतिरनिमित्तं मित्रं प्रकटीकृतकृत्रिमक्रियापाटवं विप्रलम्भकृत्रिमप्रेमसहजसौहार्दवेदिनं तं विद्येश्वरं सबहुमानं विससर्ज।

अथ राजवाहनो विद्येश्वरस्य क्रियापाटवेन फलितमिव मनोरथं मन्यमानः पुष्पोद्भवेन सह स्वमन्दिरमुपेत्य सादरं बालचन्द्रिकामुखेन निजवल्लभायै महीसुरक्रियमाणं संगमोपायं वेदयित्वा कौतुकाकृष्टहृदयः 'कथमिमां क्षपां क्षपयामि' इत्यतिष्ठत्। परेद्युः प्रभाते विद्येश्वरो रसभावरीतिगतिचतुरस्तादृशेन महता निजपरिजनेन सह राजभवनद्वारान्तिकमुपेत्य दौवारिकनिवेदितनिजवृत्तान्तः सहसोपगम्य सप्रणामम् 'ऐन्द्रजालिकः समागतः' इति द्वाःस्थैर्विज्ञापितेन तद्दर्शनकुतूहलाविष्टेन समुत्सुकावरोधसहितेन मालवेन्द्रेण समाहूयमानो विद्येश्वरः कक्षान्तरं प्रविश्य सविनयमाशिषं दत्त्वा तदनुज्ञातः परिजनताड्यमानेषु वाद्येषु नदत्सु, गायकीषु मदकलकोकिलामञ्जुलध्वनिषु

---

सततो नित्यः। नित्यसंभोगसिद्धिर्यथा भवेत्तथोपायं न लभत इत्यर्थः। लज्जयाऽभिरामं सुन्दरम्। अनिमित्तं निष्कारणम्। प्रकटीकृतं दर्शितं कृत्रिमक्रियायामिन्द्रजालविद्यायां पाटवं कुशलत्वं येन तम्। विप्रलम्भं च कृत्रिमप्रेम च सहजसौहार्दं च वेत्तीति तथा। अथेति। क्षपां रात्रिम्। क्षपयामि नयामि। 'क्षै क्षये' इति धातुः। णिजन्तम्। 'आदेच उपदेशे—' इत्यात्वम्। 'अर्तिह्री—' इत्यादिना पुगागमः। मित्त्वाद्ध्रस्वः। परेद्युरन्येद्युः। रसाः शृङ्गारादयः। भावोऽभिप्रायसूचनम्। रीतिगतयः इन्द्रजालविद्यान्तर्गताः। दौवारिको द्वाःस्थः। अवरोधः शुद्धान्तः। राजस्त्रिय इत्यर्थः। कक्षान्तरमन्यां कक्षाम्। गायक्यो गानकर्त्र्यः स्त्रियः। मदेन कलोऽव्यक्तमधुरस्वनो यः कोकिलस्तद्वन्मञ्जुलो ध्वनिर्यासां तासु। सामा-

---

१ रसभावगीतिरीतिगति०. २ इदं नास्ति क्वचित्.

समधिकरागरञ्जितसामाजिकमनोवृत्तिषु, पिच्छिकाभ्रमणेषु स परिवारं परिवृतं भ्रामयन्मुकुलितनयनः क्षणमतिष्ठत् । तदनु विषमं विषमुल्बणं वमन्तः फणालंकरणा रत्नराजिनीराजितराजमन्दिराभोगा भोगिनो भयं जनयन्तो निश्चेरुः । गृध्राश्च बहवस्तुण्डैरहिपतीनादाय दिवि समचरन् । ततोऽग्रजन्मा नरसिंहस्य हिरण्यकशिपोर्दैत्येश्वरस्य विदारणमभिनीय महदाश्चर्यान्वितं राजानमभाषत—'राजन्, अवसानसमये भवता शुभसूचकं द्रष्टुमुचितम् । ततः कल्याणपरंपरावाप्त्यै भवदात्मजाकारायास्तरुण्या निखिललक्षणोपेतस्य राजनन्दनस्य [ च ] विवाहः कार्यः' इति । तदवलोकनकुतूहलेन महीपालेनानुज्ञातः स संकल्पितार्थसिद्धिसंभावनसंफुल्लवदनः सकलमोहजननकमञ्जनं लोचनयोर्निक्षिप्य परितो व्यलोकयत् । सर्वेषु 'तदैन्द्रजालिकमेव कर्म' इति साद्भुतं पश्यत्सु रागपल्लवितहृदयेन राजवाहनेन पूर्वसंकेतसमागतामनेकभूषणभूषिताङ्गीमवन्तिसुन्दरीं वैवाहिकमन्त्रतन्त्रनैपुण्येनाग्निं साक्षीकृत्य संयोजयामास । क्रियावसाने सति 'इन्द्रजालपुरुषाः, सर्वे गच्छन्तु भवन्तः' इति द्विजन्मनोच्चैरुच्यमाने सर्वे मायामानवा यथायथमन्तर्भावं गताः । राजवाहनोऽपि पूर्वसंकल्पितेन गूढोपायचातुर्येणैन्द्रजालिकपुरुषवत्कन्यान्तःपुरं विवेश । मालवेन्द्रोऽपि तदद्भुतं मन्यमानस्तस्मै वाडवाय

---

जिकाः सभ्याः प्रेक्षकजनाः । पिच्छिकाः पिच्छगुच्छाः । ऐन्द्रजालिकानामुपकरणभूता एताः । परिवृतं मण्डलाकारम् । 'परिबृढम्' इति पाठे बहुनेकविधं वेत्यर्थः । मुकुलिते पिहिते ईषदुन्मीलिते वा । उल्बणं तीव्रम् । रत्नानां शिरःस्थितानामित्यर्थः । राजयः पङ्क्तयस्ताभिर्नीराजितो राजमन्दिरप्रदेशो यैस्ते । भोगिनः सर्पाः । तुण्डैर्मुखैः । अहिपतीन्भोगश्रेष्ठान् । विदारणं नखैः पाटनम् । अभिनीय दर्शयित्वा । भूमिकादिग्रहणेनेत्यर्थः । महदाश्चर्यान्वितमिति प्रामादिकम् । कल्याणानां परंपरा तस्या अवाप्तिस्तस्यै । निखिलानि सर्वाणि । संकल्पितस्यार्थस्य सिद्धेः संभावनं संभवस्तेन संफुल्लं वदनं यस्य सः । इन्द्रजालस्येदमैन्द्रजालिकम् । साद्भुतमिति क्रियाविशेषणम् । वैवाहिका विवाहसंबन्धिनः । तन्त्राणि नानाविधदेवतोपासनामार्गप्रतिपादका ग्रन्थविशेषाः । ०वमानमन्तः ; इन्द्रजालपुरुषा मायापुरुषाः । अन्तर्भावमदर्शनम् ।

---

१ सपरिवारः परिबृढम्.

प्रचुरतरं धनं दत्त्वा विद्येश्वरम् 'इदानीं साधय' इति विसृज्य स्वयमन्तर्मन्दिरं जगाम। ततोऽवन्तिसुन्दरी प्रियसहचरीवरपरिवारा वल्लभोपेता सुन्दरं मन्दिरं ययौ। एवं दैवमानुषबलेन मनोरथसाफल्यमुपेतो राजवाहनः सरसमधुरचेष्टाभिः शनैः शनैर्हरिणलोचनाया लज्जामपनयन्सुरतरागमुपनयन्नहो विश्रम्भमुपजनयन्संलापे तदनुलापपीयूषपानलोलश्चित्रचित्रं चित्तहारिणं चतुर्दशभुवनवृत्तान्तं श्रावयामास।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽवन्तिसुन्दरीपरिणयो नाम पञ्चम उच्छ्वासः।

समाप्तेयं दशकुमारचरितपूर्वपीठिका।

# दशकुमारचरितम्।

## प्रथमोच्छ्वासः।

श्रुत्वा तु भुवनवृत्तान्तमुत्तमाङ्गना विस्मयविकसिताक्षी सस्मितमिदमभाषत—'दयित त्वत्प्रसादादद्य मे चरितार्था श्रोत्र-

वाडवाय ब्राह्मणाय। साधय गच्छ। दैवं च तन्मानुषं च। अनुलापः पुनः पुनर्भाषणं स एव पीयूषममृतं तस्य पाने लोलः सतृष्णः। चित्रचित्रमतिशयेन चित्रम्। श्रावयामास श्रावयति स्म।

इति श्रीदशकुमारचरितपूर्वपीठिकाटीकायां
पददीपिकाभिधायां पञ्चम उच्छ्वासः।

**श्रुत्वेति**। भुवनवृत्तान्तं चतुर्दशभुवनवृत्तान्तम्। 'भुवनस्य जगतो वृत्तान्तं रुक्मिण्यादिभिः कृष्णस्येन्द्रस्य गुरोः पितामहस्य शकुन्तलादुष्यन्तादीनां च गान्धर्वविवाहकरणविषयां प्रवृत्तिम्। अनेन गान्धर्वविवाहेन परिणीतानां पुण्यवत्त्वज्ञानाद्राजवाहनेन सह गान्धर्वविवाहो मम पुण्यवत्त्वं संपादयेदिति मतिरुत्पन्ना। तेन च तस्मिन्राजवाहनेऽतिरागः। अत एव 'त्रिभुवनसर्गयात्रासंहारसंश्रितनाभिः प्रत्यानीयमानरागपूराम्' इति वक्ष्यति' इति भूषणा। उत्तमाङ्गना नायिका मालवेन्द्रतनया। विस्मयेन विकसिते अक्षिणी लोचने यस्याः। 'विस्मयोऽद्भुतमाश्चर्यम्' इत्यमरः। सस्मितमिति क्रियाविशेषणम्। सहासमित्यर्थः। 'स्यादाच्छुरितकं हासः सोत्प्रासः स मनाक् स्मितम्' इत्यमरः। **दयितेति**।

१ विद्येश्वर त्वमिदानीं साधयेति तं विसृज्य. २ सुन्दरीमन्दिरम्.

वृत्तिः । अद्य मे मनसि तमोपहस्त्वया दत्तो ज्ञानप्रदीपः । पक्कमिदानीं त्वत्पादपद्मपरिचर्याफलम् । अस्य च त्वत्प्रसादस्य किमुपकृत्य प्रत्युपकृतवती भवेयम् । अभवदीयं हि नैव किंचिन्मत्संबद्धम् । अथ वाऽस्त्येवास्यापि जनस्य क्वचित्प्रभुत्वम् । अशक्यं हि मदिच्छया विना सरस्वतीमुखग्रहणोच्छेषणीकृतो [1]दशनच्छद एष चुम्बयितुम् । अम्बुजासनास्तनतटोपभुक्तमुरःस्थलं चेदमालिङ्गयितुम्' इति प्रियोरसि प्रावृडिव नभस्युपास्तीर्णगुरुपयोधरमण्डला प्रौढकन्दलीकुड्मलमिव रूढराग[2]रूषितं चक्षुरुल्लासयन्ती बर्हिबर्हावलीविडम्बिना कुसुमचन्द्रकशारेण मधुकरकुलव्याकुलेन केशकलापेन स्फुरदरुणकिरणकेसरकरालं [3]कदम्बमुकुलमिव कान्तस्याधरमणिमधीरमाचुचुम्ब । तदारम्भस्फारितया च रागवृत्त्या [4]भूयोऽप्यावर्तताितमात्रचित्रोपचारशीकरो रतिप्रबन्धः । सुरत-

---

चरितार्था सफलेत्यर्थः । तमोपहोऽज्ञानहन्ता । ' अभिमतवरलाभेऽपि कन्यानामात्मदाने न प्रभुत्वमित्येवंरूपाज्ञानापहः । ज्ञानप्रदीपः । गान्धर्वादिभिः परिणीतानां पुण्यश्लोकता । पुण्यकृतां न जातु पातकं पीडयतीत्येवंरूपं यज्ज्ञानं तदेव प्रदीप इत्यर्थः ' इति भूषणा । पक्कं परिणतम् । परिचर्योपासना । किमुपकृत्य कमुपकारं कृत्वेत्यर्थः । प्रत्युपकृतवती कृतप्रत्युपकारेत्यर्थः । अभवदीयम् । न भवदीयमित्यर्थः । ममैव भवदीयत्वादिति भावः । अथ वेति पूर्वापरितोषे । **अशक्यमिति** । मदिच्छया विना । ' पृथग्विना—' इति तृतीया । सरस्वत्या मुखग्रहणेनोच्छेषणीकृत उच्छिष्टीकृतः । एषः । भवदीय इत्यर्थः । दशनच्छद ओष्ठः । अम्बुजासना लक्ष्मीस्तस्याः स्तनतटोपभुक्तमिदमुरःस्थलम् । त्वदीयमित्यर्थः । ' एतेन विशेषणद्वयेन विष्णुरूपवर्णनाद्भावि सार्वभौमत्वं सूचितं ' इति भूषणा । **इतीति** । उक्त्वेति शेषः । प्रियोरसि प्रावृडिव नभसि । पयोधरमण्डलं स्तनमण्डलम् । पक्षे मेघमण्डलम् । 'स्त्रीस्तनाब्दौ पयोधरौ' इत्यमरः । प्रौढा या कन्दली द्रोणपर्णी तस्याः कुड्मला मुकुलाः । रूषितम् । युक्तमित्यर्थः । बर्ही मयूरः तस्य बर्हाणि पिच्छानि । विडम्बिना निर्भर्त्सयता । कुसुमान्येव चन्द्रका मेचकास्तैः शारेण विचित्रेण । केशकलापेनोपलक्षितेति उपलक्षणे तृतीया । स्फुरन्तोऽरुणा ये किरणास्त एव केसराणि किञ्जल्कानि तैः करालमुन्नतम् । तदारम्भेण । चुम्बनारम्भेणेत्यर्थः । अतिमात्रम् । ' अतिवेलभृशात्यर्थातिमात्रोद्गाढनिर्भरम् ' इत्यमरः । शीकरो रम्यः । ' शीकरः स्फीतरम्ययोः ' इत्यजयः । **सुरतेति** । विरागुणेन मृणालतन्तुना

---

१ रदन. २ ०वल्लीं विडम्बयता. ३ नन्धूकमुकुल–कुसुम–मिव. ४ भूयोभूयः प्रावर्तत.

खेदसुप्तयोस्तु तयोः स्वप्ने बिसगुणनिगडितपादो जरठः कश्चिज्जालपादोऽदृश्यत। प्रत्यबुध्येतां चोभौ। अथ तस्य राजकुमारस्य कमलमूढशशिकिरणरज्जुदामनिगृहीतमिव रजतशृङ्खलोपगूढं चरणयुगलमासीत्। उपलभ्यैव च 'किमेतत्' इत्यतिपरित्रासविह्वला मुक्तकण्ठमाचक्रन्द राजकन्या। येन च तत्सकलमेव कन्यान्तःपुरमग्निपरीतमिव पिशाचोपहतमिव वेपमानमनिरूप्यमाणतदात्वायतिविभागम्, अगण्यमानरहस्यरक्षासमयम्, अवनितलविप्रविध्यमानगात्रम्, आक्रन्दविदीर्यमाणकण्ठम्, अश्रुस्रोतोवगुण्ठितकपोलतलमाकुलीबभूव। तुमुले चास्मिन्समयेऽनियन्त्रितप्रवेशाः 'किं किम्' इति सहसोपसृत्य विविशुरन्तर्वंशिकाः पुरुषा ददृशुश्च तदवस्थं राजकुमारम्। तदनुभावनिरुद्धनिग्रहेच्छास्तु सद्य एव ते तमर्थं चण्डवर्मणे निवेदयांचक्रुः। सोऽपि कोपादागत्य निर्दहन्निव दहनगर्भया दृशा निशाम्योत्पन्नप्रत्यभिज्ञः 'कथं स एवैष मदनुजमरणनिमित्तभूतायाः पापाया बालचन्द्रिकायाः पत्युरत्यभिनिविष्टवित्तदर्पस्य वैदेशिकवणिक्पुत्रस्य पुष्पोद्भवस्य मित्रं रूपमत्तः कलाभिमानी नैकविधविप्रलम्भोपाय-

निगडितः। 'तदस्य संजातं–' इतीतच्। जालपादो हंसः। जरठग्रहणमशुभसूचकम्। **अदृश्यतेति**। ताभ्यामित्यर्थादध्याहार्यम्। **अथेति**। कमलमूढः कमलत्वेन भ्रान्तो यः शशी तस्य किरणानां रज्जुदाम समुदायस्तेन निगृहीतमिव। मुक्तकण्ठमुच्चैःस्वरम्। **येन चेति**। 'तत्कालस्तु तदात्वं स्यादुत्तरः काल आयतिः' इत्यमरः। विभागः कृत्यम्। अनिरूप्यमाणस्तदात्वायत्योर्विभागो यस्मिन्कर्मणि तथा। तत्काले उत्तरकाले वा किं कर्तव्यमित्यत्र मूढमित्यर्थः। रहस्यमेकान्तोद्भूतं राजकन्यायाः कान्तसंगमादिकम्। आक्रन्दो रोदनम्। अवगुण्ठितं वेष्टितम्। तुमुले संकुले। अनियन्त्रितप्रवेशा अनिवारितप्रवेशाः। अन्तर्वंशिकाः अन्तःपुरे अधिकृताः पुरुषाः। तदवस्थम्। निगडितपादमित्यर्थः। तस्य राजकुमारस्यानुभावेन सामर्थ्येन। 'अनुभावः प्रभावे च निश्चये भावसूचके' इति वैजयन्ती। निरुद्धा निग्रहेच्छा येषां ते। अन्तर्वंशिका इत्यर्थः। **सोऽपीति**। सोऽपि। चण्डवर्मेत्यर्थः। दहनगर्भयाऽग्निगर्भया। निशाम्यालोक्य। 'शम आलोचने' इत्यस्मात्स्वार्थणिजन्तात्क्त्वाप्रत्यये समासे ल्यप्। अत्यभिनिविष्टोऽत्यारूढः। नैकविधा अनेकप्रकारा ये विप्रलम्भोपायाः प्रतारणयुक्तयस्तेषु यत्पाटवं कौशलं

१ जरठजालपादः. २ कपोलम्. ३ राजपुत्रम्.

पाटवावर्जितमूढपौरजैनमिथ्यारोपितवितथदेवतानुभावः कपटधर्मकञ्चुको निगूढपापशीलश्चपलो ब्राह्मणब्रुवः । कथमिवैनमनुरक्ता मादृशेष्वपि पुरुषसिंहेषु सावमाना पापेयमवन्तिसुन्दरी । पश्यतु पतिमद्यैव शूलावतंसितमियमनार्यशीला कुलपांसनी ' इति निर्भर्त्सयन्भीषणभ्रुकुटिदूषितललाटः काल इव काललोहदण्डकर्कशेन बाहुदण्डेनावलम्ब्य हस्ताम्बुजे रेखाम्बुजरथाङ्गलाञ्छने राजपुत्रं सरभसमाचकर्ष । स तु स्वभावधीरः सर्वपौरुषातिभूमिः सहिष्णुतैकप्रतिक्रियां दैवीमेव तामापदमवधार्य 'स्मर तस्या हंसगामिनि हंसकथायाः । सहस्व वासु मासद्वयम्' इति प्राणपरित्यागरागिणीं प्राणसमां समाश्वास्यादृश्यतामयासीत् ।

अथ विदितवार्तावार्तौ महादेवीमालवेन्द्रौ जामातरमाकारपक्षपातिनावात्मपरित्यागोपन्यासेनारिणा जिघांस्यमानं ररक्षतुः । न शेकतुस्तु तमप्रभुत्वादुत्तारयितुमापदः । स किल चण्डशीलश्चण्डवर्मा सर्वमिदमुदन्तजातं राजराजगिरौ तपस्यते दर्पसाराय संदिश्य सर्वमेव पुष्पोद्भवकुटुम्बकं सर्वस्वहरणपूर्वकं सद्य एव बन्धने क्षिप्त्वा कृत्वा च राजवाहनं राजकेसरिकिशोरकमिव दारुपञ्जरनिरुद्धं मूर्धजजाल-

तेनावर्जितो वशीकृतो मूढो यः पौरजनस्तेन मिथ्यारोपितो वितथो निष्फलो देवतानुभावो यस्मिन्निति । कपटमेव धर्मकञ्चुकं यस्येति । निगूढं गुप्तम् । ब्राह्मणब्रुवः आत्मानं ब्राह्मणं ब्रूतेऽसौ तथा । पुरुषसिंहेषु पुरुषश्रेष्ठेषु । सावमाना हेलनापरा । 'अनेन तस्यां सामिलापध्वनिः' इति भूषणा । शूलावतंसितं शूलारोपितम् । कुलपांसनी कुलदूषिका । कालो यमः । काललोहः श्यामायसम् । रेखारूपाण्यम्बुजानि रथाङ्गानि चक्राणि लाञ्छनानि यस्मिन्निति । सरभसं सवेगम् । **स त्विति** । सर्वपौरुषाणां पुरुषार्थानामतिभूमिरधिष्ठानम् । सहिष्णुतैव सहनशीलतैवैका प्रतिक्रिया प्रतीकारो यस्या इति । दैवीमेवादृष्टकृतामेव । तस्या हंसकथाया इति 'अधीगर्थदयेशां—' इति कर्मणि षष्ठी । वासु बाले । **अथेति** । विदितवार्तौ ज्ञातवृत्तान्तौ । आर्तौ पीडितौ । आकारेण सौन्दर्येण पक्षपातिनाविति महादेवीमालवेन्द्रयोर्विशेषणम् । आत्मपरित्यागस्य देहपरित्यागस्योपन्यासेन । वचनेनेत्यर्थः । **स किलेति** । राजराजगिरौ कैलासपर्वते । बन्धने कारागृहे । किशोरकमिव बालकमिव । दारुपञ्जरे

१ जनाध्यारोपित. २ किशोरम्.

विलीनचूडामणिप्रभावविक्षिप्तक्षुत्पिपासादिखेदं च तमवधूतदुहितृप्रार्थनस्याङ्गराजस्योद्धरणायाङ्गानभियास्यन्ननन्यविश्वासान्निनाय। रुरोध च बलभरदत्तकम्पश्चम्पाम्। चम्पेश्वरोऽपि सिंहवर्मा सिंह इवासह्यविक्रमः प्राकारं भेदयित्वा महता बलसमुदायेन निर्गत्य स्वप्रहितदूतव्राताहूतानां साहाय्यदानायातिसत्वरमापततां धरापतीनामचिरकालभाविन्यपि संनिधावदत्तापेक्षः साक्षादिवावलेपो वपुष्मानक्षमापरीतः प्रतिबलं प्रतिजग्राह। जगृहे च महति संपराये क्षीणसकलसैन्यमण्डलः प्रचण्डप्रहरणशतभिन्नवर्मा सिंहवर्मा करिणः करिणमवप्लुत्यातिमानुषप्राणबलेन चण्डवर्मणा। स च तद्दुहितर्यम्बालिकायामबलारत्नसमाख्यातायामतिमात्राभिलाषः प्राणैरेनं न व्ययूयुजत्। अपि त्वनीनयदपनीताशेषशल्यमकल्यसंधो बन्धनम्। अजीगणच्च गणकसंघैः—'अद्यैव क्षपावसाने विवाहनीया राजदुहिता' इति। कृतकौतुकमङ्गले च तस्मिन्नेकपिङ्गाचलात्प्रतिनिवृत्त्यैणजङ्घो नाम जङ्घाकरिकः प्रभवतो दर्पसारस्य प्रतिसंदेशमावेदयत्—'अयि मूढ किमस्ति कन्यान्तःपुरदूषकेऽपि

---

काष्ठपञ्जरे। मूर्धजजाले केशसमूहे विलीनो यश्चूडामणिर्मुनिकन्यया दत्तस्तस्य प्रभावेन विक्षिप्तो दूरीकृतः क्षुत्पिपासादिखेदो यस्येति तम्। अवधूता तिरस्कृता दुहितुः कन्यायाः प्रार्थना येनेति तस्याङ्गराजस्योद्धरणायोन्मूलनायाङ्गान्देशानभियास्यन्गच्छन्ननन्यविश्वासादन्यविश्वासाभावान्निनायेत्यन्वयः। **चम्पेश्वर इति।** प्राकारो वप्रः। दूतव्रातो दूतसमूहः। अचिरकालभाविनि अचिराद्भविष्यति। न दत्ताऽपेक्षा येनेति। अवलेपो गर्वः। संपराये युद्धे। 'संपरायस्तु संयुगे' इति हैमः। वर्म कवचम्। मानुषमतिक्रम्य वर्तत इत्यतिमानुषं प्राणबलं यस्येति। स चेति चण्डवर्मा। तद्दुहितरि सिंहवर्मकन्यायाम्। अम्बालिकेति नाम्ना प्रसिद्धायाम्। रत्नत्वेनोत्कृष्टत्वेन। अतिमात्रत्यन्तमभिलाषो यस्येति तथा। **अपि त्विति।** अकल्या अचिन्त्या संधा प्रतिज्ञा यस्येति स तथा। गणकसंघैः। ज्यौतिषिकसमूहैः। क्षपावसाने प्रातःकाले। कृतकौतुकमङ्गले बद्धवैवाहिककङ्कणे तस्मिंश्चण्डवर्मणि। एकपिङ्गस्य कुबेरस्य। एणजङ्घो नाम जङ्घाकरिकः। जङ्घैव करी गमनवाहनं हस्ती यस्य सः। शीघ्रगामीत्यर्थः। 'जङ्घालोऽतिजवो जङ्घाकरिको जाङ्घिको जवी' इति हैमः। दर्पसारस्य प्रतिसंदेशं प्रत्युत्तरम्। अयीति कोमलामन्त्रणे। मूढेत्यात्मीयतया संबोधनम्। कन्यान्तःपुरदूषके दूषणोद्भाविके। स्थविरो

१ भिन्नमर्मा. २ अकल्यसंधः. ३ बन्धनगृहम.

कश्चित्कृपावसरः । स्थविरः स राजा जराविलुप्तमानावमानचित्तो दुश्चरितदुहितृपक्षपाती यदेव किंचित्प्रलपति त्वयाऽपि किं तदनुमत्या स्थातव्यम् । अविलम्बितमेव तस्य कामोन्मत्तस्य चित्रवधवार्ताप्रेषणेन श्रवणोत्सवोऽस्माकं विधेयः । सा च दुष्टकन्या सहानुजेन कीर्तिसारेण निगडितचरणा चारके निरोद्धव्या ' इति । तच्चाकर्ण्य ' प्रातरेव राजभवनद्वारे स दुरात्मा कन्यान्तःपुरदूषकः संनिधापयितव्यः । चण्डपोतश्च मातङ्गपतिरुचितकल्पनोपपन्नस्तत्रैव सम्मुस्थापनीयः । कृतविवाहकृत्यश्चोत्थायाहमेव तमनार्यशीलं तस्य हस्तिनः कृत्वा क्रीडनकं तदधिरूढ एव गत्वा शत्रुसाहाय्यकाय प्रत्यासीदतो राजन्यकस्य सकोशवाहनस्यावग्रहणं करिष्यामि ' इति पार्श्वचरानवेक्षांचक्रे । निन्ये चासावहन्यन्यस्मिन्नुन्मिषत्येवोषोरागे राजपुत्रो राजाङ्गणं रक्षिभिः । उपतस्थे च क्षरितगण्डश्चण्डपोतः । क्षणे च तस्मिन्मुमुचे तदङ्घ्रियुगलं रजतशृङ्खलया । सा चैनं चन्द्रलेखाच्छविः काचिदप्सरोरूपिणी भूत्वा प्रदक्षिणीकृत्य प्राञ्जलिर्व्यजिज्ञपत्— ' देव दीयतामनुग्रहार्द्रं चित्तम् । अहमस्मि सोमरश्मिसंभवा सुरतमञ्जरी

---

वृद्धः । जरया विलुप्तौ मानावमानौ यस्यैवंविधं चित्तं यस्येति । दुश्चरिता दुराचारा । ' प्रलापोऽनर्थकं वचः ' इत्यमरः । किमित्याक्षेपे । **सा चेति** । सा दुष्टकन्या । अनुजेन कीर्तिसारेण सह । चारके बन्धनागारे । ' चारकं बन्धनालयः ' इति वैजयन्ती । **तच्चेति** । संनिधौ स्थापनीय इत्यर्थः । चण्डपोतनामा मातङ्गपतिः करिवरः । उचिताः याः कल्पनाः अलंकारादिरचनाः तैरुपपन्नो युक्तः । तमनार्यशीलं दुष्टस्वभावं तस्य हस्तिनः क्रीडनकं खेलनं कृत्वेति । प्रत्यासीदतः समीपमागच्छतः । राजन्यकस्य क्षत्रियसमूहस्य । वाहनानि हस्त्यश्वादीनि । अवग्रहणं बन्धनम् । **निन्ये चेति** । द्विकर्मकोऽयं धातुः । असौ राजपुत्रो राजवाहन इति । उषोरागे प्रातःकालसंबन्धिनि लौहित्ये । राजाङ्गणम् । ' अङ्गणं चत्वराजिरे ' इत्यमरः । उपतस्थे । ' ष्ठा गतिनिवृत्तौ ' । प्राप्त इत्यर्थः । 'अकर्मकाच्च' इत्यात्मनेपदम् । क्षरितः स्रवन्गण्डः कटो यस्येति । **सा चेति** । सा च रजतशृङ्खला । नभ-

१ उपचित. २ अनार्यम्. ३ क्रीडनम्. ४ साहाय्याय. ५ अप्सराः.

नाम सुरसुन्दरी। तस्या मे नभसि नलिनलुब्धमुग्धकलहंसानुबद्धवक्त्रायास्तन्निवारणक्षोभविच्छिन्नविगलिता हारयष्टिर्यदृच्छया जातु हैमवते सरसि मन्दोदके मग्नोन्मग्नस्य महर्षेर्मार्कण्डेयस्य मस्तके मणिकिरणद्विगुणितपलितमपतत्। पातितश्च कोपितेन कोऽपि तेन मयि शापः—'पापे भजस्व लोहजातिमजातचैतन्या सती' इति। स पुनः प्रसाद्यमानस्त्वत्पादपद्मद्वयस्य मासद्वयमात्रं संदानतामेत्य निस्तरणीयामिमामापदमपरिक्षीणशक्तित्वं चेन्द्रियाणामकल्पयत्। अनल्पेन च पाप्मना रजतशृङ्खलीभूतां मामैक्ष्वाकस्य राज्ञो वेगवतः पौत्रः पुत्रो मानसवेगस्य वीरशेखरो नाम विद्याधरः शंकरगिरौ समध्यगमत्। आत्मसात्कृता च तेनाहमासम्। अथासौ पितृप्रयुक्तवैरे प्रवर्तमाने विद्याधरचक्रवर्तिनि वत्सराजवंशवर्धने नरवाहनदत्ते विरसाशयस्तदपकारक्षमोऽयमिति तपस्यता दर्पसारेण सह समसृज्यत। प्रतिश्रुतं च तेन तस्मै स्वसुरवन्तिसुन्दर्याः प्रदानम्। अन्यदा तु वियति व्यवदायमानचन्द्रिके मनोरथप्रियतमामवन्तिसुन्दरीं दिदृक्षुरवशेन्द्रियस्तदिन्द्रमन्दिरद्युति कुमारीपुरमुपासरत्। अन्तरितश्च तिरस्करिण्या विद्यया स च

स्याकाशे। मुग्धो मूढः यः कलहंसस्तेनानुबद्धं वक्त्रं यस्याः। तन्निवारणं कलहंसनिवारणम्। तत्र विच्छिन्ना त्रुटिताऽत एव विगलिता। हारयष्टिर्हारलता। जातु कदाचित्। मग्नोन्मग्नस्य स्नानं कृत्वोत्थितस्य। पलितं जराजातशौक्ल्यम्। मणी यादि क्रियाविशेषणम्। कोपितेन कोपः संजातो यस्येति तथा। 'तदस्य संजातं–' इतीतच्। लोहजातिं लोहत्वम्। 'जातिर्जातं च सामान्यम्' इत्यमरः। मासद्वयमात्रं मासद्वयप्रमाणम्। 'प्रमाणे द्वयसज्–' इति मात्रच्। संदानतां पादबन्धनताम्। निस्तरणीयां समापनीयामित्यर्थः। अनल्पेन बहुना। पाप्मना पापेन। रजतशृङ्खलीभूतामिति 'अभूत–' इति च्विः। इक्ष्वाकोरयमैक्ष्वाकः। वेगवतस्तन्नाम्नो राज्ञः। शंकरगिरौ कैलासपर्वते। मां समध्यगमत् प्रापेत्यर्थः। आत्मसादात्माधीना। तदधीने सातिः। **अथेति**। असौ वीरशेखरो विद्याधरः। पित्रा प्रयुक्तं यद्वैरं तस्मिन्। प्रवर्तमाने कुर्वाण इत्यर्थः। नरवाहनदत्ते विरसाशयः परुषान्तःकरणः। तस्य नरवाहनदत्तस्यापकारे निग्रहे क्षमः समर्थ इति। दर्पसारेण समसृज्यत। संगतोऽभूदित्यर्थः। तेन दर्पसारेण। **अन्यदेति**। व्यवदायमानचन्द्रिके निर्मलज्योत्स्ने। 'दैप् शोधने'। मनोरथैः प्रियतमाम्। तिरस्करिण्याऽन्तर्धानकारिण्या विद्यया। स चेति वीरशेखरः।

१ परिपतन्नलिन०. २ च पञ्चेन्द्रियाणाम्. ३ वर्तमाने. ४ स्वस्वसु०.

तां तदा त्वदङ्कापाश्रयां सुरतखेदसुप्तगात्रीं त्रिभुवनसर्गयात्रासंहार-संबद्धाभिः कथाभिरमृतस्यन्दिनीभिः प्रत्यानीयमानरागपूरा न्यरूपयत् । स तु प्रकुपितोऽपि त्वदनुभावप्रतिबद्धनिग्रहान्तराध्यवसायः समाश्लिष्टेतरेतरमत्यन्तसुखसुप्तयोर्युवयोर्दैवदत्तोत्साहः पाण्डुलोहशृङ्खलात्मना मया पादपद्मयोर्युगलं तव निगडयित्वा सरोषरभसमपासरत् । अवसितश्च ममाद्य शापः । तच्च मासद्वयं तव पारतन्त्र्यम् । प्रसीदेदानीम् । किं तव करणीयम् ' इति प्रणिपतन्तीं ' वार्तयाऽनया मत्प्राणसमां समाश्वासय ' इति व्यादिश्य विससर्ज ।

तस्मिन्नेव क्षणान्तरे ' हतो हतश्चण्डवर्मा सिंहवर्मदुहितुरम्बालिकायाः पाणिस्पर्शरागप्रसारिते बाहुदण्ड एव बलवदवलम्ब्य सरभसमाकृष्य केनापि दुष्करकर्मणा तस्करेण नखप्रहारेण । राजमन्दिरोद्देशं च शवशतमयमापादयन्नचकितगतिरसौ विहरति ' इति वाचः समभवन् । श्रुत्वा चैतत्तमेव मत्तहस्तिनमुदस्ताधोरणो राजपुत्रोऽधिरुह्य रंहसोत्तमेन राजभवनमभ्यवर्तत । स्तम्बेरमरयावधूतपङ्क्तिदत्तवर्त्मा च प्रविश्य वेश्माभ्यन्तरमदभ्राभ्रनिर्घोषगम्भीरेण स्वरेणाभ्यधात्—

तामवन्तिसुन्दरीम् । त्वदङ्कोऽपाश्रयो यस्या इति । ' अपाश्रयः शिरोभागः ' इति वैजयन्ती । सर्ग उत्पत्तिः । यात्रा व्यवहारस्थितिरिति यावत् । अमृतस्यन्दिनीभिरमृतस्राविणीभिः । प्रत्यानीयमानः परावृत्त्या साध्यमानो रागपूरो यस्यास्ताम् । न्यरूपयत् । दृष्टवानित्यर्थः । त्वदनुभावेन त्वत्सामर्थ्येन प्रतिबद्धो निवारितो निग्रहान्तराध्यवसायो निग्रहे मारणादावन्तरेऽन्तर्गतोऽध्यवसायो निश्चयात्मिका बुद्धिर्यस्य । दैवेन दत्त उत्साहो यस्येति स विद्याधरः । पाण्डुलोहं रजतम् । ' सर्वं च तैजसं लोहम् ' इत्यमरः । सरोषरभसं सक्रोधवेगम् । अवसितः समाप्तिं प्राप्तः । व्यादिश्य कथयित्वा । सरभसं सवेगम् । दुष्करकर्मणाऽसुकरकर्मणा । नखं व्याघ्रनखाख्यमायुधम् । ' एकेनैव नखरप्रहारेण ' इति पाठे नखरश्छुरिका । ' नखरस्त्वसिपुत्रिका ' इति वैजयन्ती । राजमन्दिरोद्देशं राजगृहप्रदेशम् । आपादयन्कुर्वन् । अचकितगतिरत्रस्तगमनः । श्रुत्वेति । तमेव चण्डवर्माधिष्ठितमेव । उदस्तोऽधःक्षिप्तः आधोरणो हस्तिपको येनेति । उत्तमेन रंहसा वेगेन । स्तम्बेरमो हस्ती । स्तम्बे रमते असौ । ' स्तम्बकर्णयो रमिजपोः ' इत्यच् । ' हलदन्तात्— ' इत्यलुक् । तस्य रयो वेगस्तेनावधूता दूरीकृता ये पत्तयः पदातयस्तैर्दत्तं वर्त्म यस्येति । अदभ्रं बहुलम् । अभ्रनिर्घोषगम्भीरेण मेघरसितगम्भीरेण । ' निर्घोषे रसितादि च ' इत्यमरः ।

१ त्वदङ्कोपा०. २ संश्रितानाभिः. ३ दुष्करकर्मकारिणा. ४ नखर. ५ पङ्क्ति

'कः स महापुरुषो येनैतन्मानुषमात्रदुष्करं महत्कर्मानुष्ठितम् । आगच्छतु । मया सहेमं मत्तहस्तिनमारोहतु । अभयं मदुपकण्ठवर्तिनो देवदानवैरपि विगृह्णानस्य' इति । निशम्यैवं स पुमानुपोढहर्षो निर्गत्य कृताञ्जलिराक्रम्य संज्ञासंकुचितं कुञ्जरगात्रमसक्तमध्यरुक्षत् । आरोहन्तमेवैनं निर्वर्ण्य हर्षोत्फुल्लदृष्टिः 'अये प्रियसखोऽयमपहारवर्मैव' इति पश्चान्निषीदतोऽस्य बाहुदण्डयुगलमुभयभुजमूलप्रवेशितमग्रेऽवलम्ब्य स्वमङ्गमालिङ्गयामास । स्वयं च पृष्ठतो वलिताभ्यां भुजाभ्यां पर्यवेष्टयत् । तत्क्षणोपसंहृतालिङ्गनव्यतिकरश्चापहारवर्मा चापचक्रकणपकर्पणप्रासपट्टिशमुसलतोमरादिप्रहरणजातमुपयुञ्जानान्बलावलिप्तान्प्रतिबलवीरान्बहुप्रकारायोधिनः परिक्षिपतः क्षितौ विचिक्षेप । क्षणेन चाद्राक्षीत्तदपि सैन्यमन्येन समन्ततोऽभिमुखमभिधावता बलनिकायेन परिक्षिप्तम् ।

अनन्तरं च कश्चित्कर्णिकारगौरः कुरुविन्दसवर्णकुन्तलः कमलकोमलपाणिपादः कर्णचुम्बिदुग्धधवलस्निग्धनीललोचनः कटि-

विगृह्णानस्य विरोधं कुर्वतः । उपोढहर्षो वर्धमानहर्षः । संज्ञया संकेतेन संकुचितम् । कुञ्जरगात्रं पूर्वपदजानुप्रदेशम् । 'द्वौ पूर्वपश्चाज्जङ्घादिदेशौ गात्रावरे क्रमात्' इत्यमरः । असक्तं त्वरितमित्यर्थः । अध्यरुक्षदारुरोह । **अये इति** । 'अतर्कापतिते त्वये' इति केशवः । प्रियसखोऽयमिति 'राजाहःसखिभ्यष्टच्' इत्यदन्तता । वलिताभ्यां चालिताभ्याम् । 'वल चलने' । वक्रिताभ्यामित्यर्थः । उपसंहृत आलिङ्गनव्यतिकर आश्लेषसंपर्को येनेति तथा । कणपो लोहस्तम्भः । 'लोहस्तम्भस्तु कणपः' इति वैजयन्ती । कर्पणः सरावः । 'कुटिलाग्रस्तु कर्पणः' इति च । प्रासः कुन्तः । 'प्रासस्तु कुन्तः' इत्यमरः । पट्टिशः शस्त्रविशेषः । भाषया 'पट्टा' इति प्रसिद्धः । 'पट्टिशः स्याद्द्विशालाग्रः' इति वैजयन्ती । मुसलं कण्डनसाधनकाष्ठतुल्यमायसायुधम् । मुशलमिति वा । तोमरो लोहगुच्छः । भाषया 'गुर्ज' इति ख्यातः । 'तोमरो वेगदण्डवान्' इति वैजयन्ती । प्रहरणजातं शस्त्रसमूहम् । उपयुञ्जानान्प्रेरयतः । बहुप्रकारमायोधिनो युद्धं कुर्वतः । परिक्षिपतः । लोकानिति शेषः । विचिक्षेप । पातितवानित्यर्थः । बलनिकायेन सेनासमूहेन । 'निकायो निवहो व्यूहः समूहो विसरो व्रजः' इति कोशः । **अनन्तरमिति** । कर्णिकारो द्रुमोत्पलस्तद्वद्गौरः । कुरुविन्देन सवर्णाः समानाः कुन्तलाः केशा यस्येति । कुरुविन्दो नीलगुच्छः नीलमणिरिति यावत् । कटि-

१ कर्णप. २ जालं. ३ उपयुञ्जानः. ४ अन्तरे.

तटनिविष्टरत्ननखः पट्टनिवसनः कृशाकृशोदरोरःस्थलः कृतहस्ततया रिपुकुलमिषुवर्षेणाभिवर्षन् पादाङ्गुष्ठनिष्ठुरावघृष्टकर्णमूलेन प्रजविना गजेन संनिकृष्य पूर्वोपदेशप्रत्ययात् 'अयमेव स देवो राजवाहनः' इति प्राञ्जलिः प्रणम्यापहारवर्माणि निविष्टदृष्टिराचष्ट—'त्वदादिष्टेन मार्गेण संनिपातितमेतदङ्गराजसाहाय्यदानायोपस्थितं राजकम्। अरिबलं च विहतविध्वस्तं स्त्रीबालहार्यशस्त्रं वर्तते। किमन्यत्कृत्यम्' इति। हृष्टस्तु व्याजहारापहारवर्मा—'देव दृष्टिदानेनानुगृह्यतामयमाज्ञाकरः। सोऽयमहमेवामुना रूपेण धनमित्राख्यया चान्तरितो मन्तव्यः। स एवायं निर्गमय्य बन्धनादङ्गराजमपवार्जितं च कोशवाहनमेकीकृत्यास्मद्गृह्येणामुना सह राजन्यकेनैकान्ते सुखोपविष्टमिह देवमुपातिष्ठतु यदि न दोषः' इति। देवोऽपि 'यथा ते रोचते' इति तमाभाष्य गत्वा च तन्निर्दिष्टेन मार्गेण नगराद्बहिरतिमहतो रोहिणद्रुमस्य कस्यचित्क्षौमावदातसैकते गङ्गातरङ्गपवनपातशीतले तले द्विरदादवततार। प्रथमसमवतीर्णेनापहारवर्मणा च स्वहस्तसत्वर-

तटे निविष्टो रत्नयुक्तो नखः नखरः छुरिका इति वा यस्येति। पट्टं दुकूलं निवसनं यस्येति तथा। कृशाकृशे उदरोरःस्थले यस्येति स तथा। कृशोदरः स्थूलोरःस्थलश्चेति योज्यम्। कृतहस्ततया शिक्षितहस्ततया। 'शिक्षितं कृतमर्थवत्' इति भागुरिः। इषुवर्षेण बाणवृष्ट्या। अङ्गुष्ठाभ्यां निष्ठुरं यथा तथाऽवघृष्टं घर्षितं कर्णमूलं यस्येति तेन। निविष्टदृष्टिर्दत्तदृष्टिः। **त्वदादिष्टेनेति**। राजकं राजसमूहः। स्त्रीबालैर्हार्याणि शस्त्राणि यस्य। आज्ञाकरः सेवकः। **सोऽयमहमेवेति**। अन्तरितः भिन्न इत्यर्थः। स एव धनमित्रोऽङ्गराजं सिंहवर्माणं बन्धनान्निर्गमय्य निष्कामय्य। अपवार्जितम्। इतस्ततो गतमित्यर्थः। अस्मद्गृह्येणास्मत्पक्षस्थेन। 'गृह्यः पक्षस्थ उच्यते' इति वैजयन्ती। राजन्यकेन क्षत्रियसमूहेन। देवम्। त्वामिति यावत्। **देव इति**। देवो राजवाहनः। तमपहारवर्माणम्। तन्निर्दिष्टेनापहारवर्मकथितेन मार्गेण। रोहिणद्रुमस्य वटवृक्षस्य। 'वटवृक्षस्तु रोहिणः' इति वैजयन्ती। क्षौममिवावदातं शुद्धं यत्सैकतं तस्मिन्। **प्रथमेति**। स्वहस्तेनात्मकरेण सत्वरं सवेगं समीकृते समतां प्रापिते।

१ अभिपात्य. २ राजन्यकम्. ३ अखिलारि०, अखिलं चा०. ४ सोऽयमप्यह०; सोऽयमेवाय. ५ कस्यचिन्मूले.

समीकृते मातङ्ग इव भागीरथीपुलिनमण्डले सुखं निषसाद। तथा निषण्णं च तमुपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुतैर्मैथिलेन च प्रहारवर्मणा, काशीभर्त्रा च कामपालेन, चम्पेश्वरेण सिंहवर्मणा सहोपागत्य धनमित्रः प्रणिपपात। देवोऽपि हर्षाविद्धमभ्युत्थितः 'कथं समस्त एष मित्रगणः समागतः, को नामायमभ्युदयः' इति कृतयथोचितोपचारान्निर्भरतरं परिरेभे। काशीपतिमैथिलाङ्गराजांश्च सुहृन्निवेदितान्पितृवदपश्यत्। तैश्च हर्षकम्पितपलितं संरभसोपगूढः परमभिननन्द। ततः प्रवृत्तासु प्रीतिसंकथासु प्रियवयस्यगणानुयुक्तः स्वस्य च सोमदत्तपुष्पोद्भवयोश्चरितमनुवर्ण्य सुहृदामपि वृत्तान्तं क्रमेण श्रोतुं कृतप्रस्तावस्तांश्च तदुक्तावन्वयुङ्क्त। तेषु प्रथमं प्राह स्म किलापहारवर्मा—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते राजवाहनचरितं नाम प्रथम उच्छ्वासः।

## द्वितीयोच्छ्वासः।

'देव त्वयि तदाऽवतीर्णे द्विजोपकारायासुरविवरं त्वदन्वेषण-प्रसृते च मित्रगणेऽहमपि महीमटन्नङ्गेषु गङ्गातटे बहिश्चम्पायाः 'कश्चिदस्ति तपःप्रभावोत्पन्नदिव्यचक्षुर्मरीचिर्नाम महर्षिः' इति

**तथेति**। तं राजवाहनम्। उपहारवर्मादिविश्रुतान्तैः षड्भिर्दशकुमारान्तर्गतैः। मैथिलेन मिथिलाधिपेन। निर्भरतरं दृढतरम्। **हर्षेति**–हर्षेण कम्पितं पलितं जरया शुक्लाः केशा यथा स्यात्तथा। **तत इति**। सोमदत्तपुष्पोद्भवयोश्चरितमाचरणं पूर्वपीठिकायामुक्तमनुवर्ण्य। सुहृदां सर्वेषाम्। कृतप्रस्तावः कृतोपक्रमः। तदुक्तौ सुहृद्वृत्तान्तोक्तौ। अन्वयुङ्क्त। योजितवानित्यर्थः। तेषु सुहृत्सु मध्ये प्रथममपहारवर्मा प्राह स्मेत्यन्वयः।

**इति श्रीदशकुमारचरितटीकायां प्रथम उच्छ्वासः।**

किमाहापहारवर्मा—**देवेति**। प्रसृते परितश्चरिते। दिव्यचक्षुरतीन्द्रियद्रष्टा। 'संलापो भाषणं मिथः' इत्यमरः। उपलभ्य ज्ञात्वा। अमुतः मुनेरित्यर्थः।

१ मातङ्ग इव स्फटिकमय इव. २ एव. ३ उत्पीडिततरम्. ४ हर्षनिर्भरतरम्; ०निर्भररभसो०. ५ सहसोपगूढः. ६ परिस्थिते.

कुतश्चित्संलपतो जनसमाजादुपलभ्यामुतो बुभुत्सुस्त्वद्वार्तां तमुद्देशमगमम्। न्यशामयं च तस्मिन्नाश्रमे कस्यचिच्चूतपोतकस्य च्छायायां कमप्युद्विग्नवर्णं तापसम्। अमुना चातिथिवदुपचरितः क्षणं विश्रान्तः 'क्वासौ भगवान्मरीचिः, तस्मादहमुपलिप्सुः प्रसङ्गप्रोषितस्य सुहृदो गतिम्, आश्चर्यज्ञानविभवो हि स महर्षिर्मह्या विश्रुतः' इत्यवादिषम्। अथासावुष्णमायतं च निःश्वस्याशंसत् —'आसीत्तादृशो मुनिरस्मिन्नाश्रमे। तमेकदा काममञ्जरी नामाङ्गपुरीवतंसस्थानीया वारयुवतिरश्रुबिन्दुतारकितपयोधरा सनिर्वेदमभ्येत्य कीर्णशिखण्डास्तीर्णभूमिरभ्यवन्दिष्ट। तस्मिन्नेव च क्षणे मातृप्रमुखस्तदाप्तवर्गः सानुक्रोशमनुप्रधावितस्तत्रैवाविच्छिन्नपातमपतत्। स किल कृपालुस्तं जनमार्द्रया गिराऽऽश्वास्यार्तिकारणं तां गणिकामपृच्छत्। सा तु सव्रीडेव सविषादेव सगौरवेव चाब्रवीत्—'भगवन् ऐहिकस्य सुखस्याभाजनं जनोऽयमामुष्मिकाय श्वोवसीयायार्ताभ्युपपत्तिवित्तयोर्भगवत्पादयोर्मूलं शरणमभिप्रपन्नः' इति। तस्यास्तु जनन्युदञ्जलिः पलितशार-

बुभुत्सुर्बोद्धुमिच्छुः। त्वद्वार्तां त्वन्मार्गमित्यर्थः। तमुद्देशं महर्ष्यधिष्ठितप्रदेशम्। न्यशामयमपश्यम्। उद्विग्नवर्णमुद्विग्नस्य वर्ण इव वर्णः कान्तिर्यस्येति स तम्। उपचरितः सत्कृतः। तस्मान्मरीचेः। उपलिप्सुरुपलब्धुमिच्छुः। प्रसङ्गप्रोषितस्य केनापि कारणेन गतस्य। आश्चर्यश्चमत्कारकारी ज्ञानविभवो ज्ञानसामर्थ्यं यस्य तथा। अवादिषं उक्तवानित्यर्थः। **अथेति**। असौ तापसः। तं महर्षिम्। अङ्गपुरीवतंसस्थानीया तन्नगरीशेखरभूता। 'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्यकारलोपः। वारयुवतिर्वेश्या। अश्रुबिन्दुतारकितपयोधरा अश्रुबिन्दुभिस्तारकितौ पयोधरौ यस्या इति। तारकाः संजाता अस्येति व्युत्पत्तिः। सनिर्वेदं सर्वत्रोपेक्षासहितम्। कीर्णभूमिः कीर्णः प्रसृतो यः शिखण्डः केशपाशस्तेनास्तीर्णा कृतास्तरणा भूमिर्ययेति। **तस्मिन्निति**। तस्या वाराङ्गनायाः आप्तवर्गः। सानुक्रोशं सकृपम्। आर्तिकारणं पीडानिदानम्। **सेति**। ऐहिकस्येह भवं तथा तस्य। अभाजनमपात्रम्। अमुत्र जातमामुष्मिकम्। पारलौकिकायेत्यर्थः। श्वोवसीयाय कल्याणाय। 'श्वोवसीयं शिवं शुभम्' इति हलायुधः। आर्ताभ्युपपत्तिवित्तयोरार्तानां पीडितानामभ्युपपत्तिरनुग्रहस्तद्वित्तयोः ख्यातयोः। चरणविशेषणम्। जननी माता। उद्गतोऽञ्जलिर्यस्याः सा उदञ्जलिरूर्ध्वीकृताञ्जलिः।

१ आशशंसे. २ पुर्यवतंस. ३ तद्दासीवर्गः. ४ अवनिपानम्. ५ गिराऽऽश्वास्य. ६ भाजनम्.

शिखण्डबन्धस्पृष्टमुक्तभूमिरभाषत—'भगवन्, अस्या मे दोषमेषा वो दासी विज्ञापयति—। दोषश्च मम स्वाधिकारानुष्ठापनम्। एष हि गणिकामातुरधिकारो यद्दुहितुर्जन्मनः प्रभृत्येवाङ्गक्रिया, तेजोबलवर्णमेधासंवर्धनेन दोषाग्निधातुसाम्यकृता मितेनाहारेण शरीरपोषणम्, आ पञ्चमाद्वर्षात्पितुरप्यनतिदर्शनम्, जन्मदिने पुण्यदिने चोत्सवोत्तरो मङ्गलविधिः, अध्यापनमनङ्गविद्यानां साङ्गानाम्, नृत्यगीतवाद्यनाट्यचित्रास्वाद्यगन्धपुष्पकलासु लिपिज्ञानवचनकौशलादिषु च सम्यग्विनयनम्, शब्दहेतुसमयविद्यासु वार्तामात्रावबोधनम्, आजीवज्ञाने क्रीडाकौशले सजीवनिर्जीवासु च द्यूतकलास्वभ्यन्तरीकरणम्, अभ्यन्तरकलासु वैश्वासिकजनात्प्रयत्नेन प्रयोगग्रहणम्, यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिबर्हायाः प्रकाशनम्, प्रसङ्गवत्यां संगीतादिक्रियायां पूर्वसंगृहीतैर्श्लाघ्यवाग्भिः

पलितेन रजसा शौक्ल्येन शारधिक्यो यः शिखण्डबन्धस्तेनादौ स्पृष्टा पश्चान्मुक्ता भूमिर्यया। 'पूर्वकालैक—' इति समासः। भगवन्निति। मे दोषं मत्कृपणम्। वो युष्माकं दासी। मत्कन्येत्यर्थः। स्वाधिकारानुष्ठापनं स्वोचितकर्माचरणप्रेरणम्। अङ्गक्रियोद्वर्तनादिः। 'अङ्गक्रिया यदङ्गेषु हरिद्रातैलमर्दनम्' इति वात्स्यायनः। तेजः शरीरकान्तिः। बलं सामर्थ्यम्। मेधा धारणावती बुद्धिः। एतेषां सम्यग्वर्धनेन पोषणेन। दोषा वातपित्तश्लेष्माणः। अग्निर्जाठरः। धातवः सप्त। एतेषां साम्यमन्यता ऽवैषम्यकृता। आ पञ्चमात् पञ्चमवर्षादुत्तरमित्यर्थः। 'आङ् मर्यादाभिविध्योः' इति पञ्चमी। अनतिदर्शनमत्यन्तदर्शनाभावः। जन्मदिने उत्पत्तिदिवसे। पुण्यदिने संक्रमणादौ। अनङ्गविद्यानां कामप्रतिपादकविद्यानाम्। विनयनं शिक्षणम्। शब्दो व्याकरणम्। हेतुस्तर्कः। 'समयः ज्योतिषः सिद्धान्तः' इति भूषणा। अवबोधनं ज्ञानम्। आजीवो जीविका। क्रीडाकौशले नर्मभाषणनैपुण्ये। सजीवाः कुक्कुटादियोधनानि। निर्जीवाश्चतुरङ्गाद्याः। अभ्यन्तरीकरणं स्वायत्तीकरणम्। अभ्यन्तरकलासु रतकलासु। 'साऽभ्यन्तरकला यत्तु स्पर्शाङ्गस्पर्शनं रतौ' इति वात्स्यायनः। वैश्वासिकजनादाप्तजनात्। प्रयोगः कर्तव्यता। प्रसाधिताया अलंकृतायाः। 'प्रसाधितोऽलंकृतश्च भूषितश्च परिष्कृतः' इति वैजयन्ती। परिबर्हः परिच्छदः। 'परिबर्हस्तु राजार्हे वस्तुन्यपि परिच्छदे' इत्यपि। सेवकजन इति यावत्।

१ अस्यां मे दोष एषा. २ कौशलेषु. ३ वार्तामात्राववोधनम.

सिद्धिलम्भनम्, दिङ्मुखेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनम्, कार्तान्तिकादिभिः कल्याणलक्षणोद्धोषणम्, पीठमर्दविटविदूषकैर्भिक्षुक्यादिभिश्च नागरिकपुरुषसमवायेषु रूपशीलशिल्पसौन्दर्यमाधुर्यप्रस्तावना, युवजनमनोरथलक्ष्यभूतायाः प्रभूततमेन शुल्केनावस्थापनम्, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोर्थशक्तिशौचत्यागदाक्ष्यदाक्षिण्यशिल्पशीलमाधुर्योपपन्नाय स्वतन्त्राय प्रदानम्, अधिकगुणायास्वतन्त्राय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्पणम्, अस्वतन्त्रेण वा गान्धर्वसमागमेन तद्गुरुभ्यः शुल्कापहरणम्, अलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे च साधनम्, रक्तस्य दुहित्रैकचारिणीव्रतानुष्ठापनम्, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणम्, अददता लुब्धप्रायेण च विगृह्यासनम्, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसंधुक्षणम्, असारस्य वाक्संतक्षणैर्लोकोपक्रोशनैर्दुहितृनिरोधनैर्व्रीडोत्पादनैरन्या-

---

प्राह्ववाग्भिः शिक्षकैः । 'प्राह्ववागुपलालकः' इति वैजयन्ती । सिद्धिलम्भनं सिद्धिप्रापणम् । शिल्पवित्तकैः कलाप्रामद्दैर्मार्दङ्गिकमौरजिकादिभि. । कार्तान्तिका लक्षणज्ञाः । उद्धोषणं ख्यापनम् । पीठमर्दो नटविशेषः । 'पीठमर्दो विटश्चेति तथा चेटविदूषकौ' इत्युक्तेऽतिधृष्टो नायकप्रियः पीठमर्द इति । 'पीठमर्दोऽतिधृष्टे स्यान्नाट्योक्तया नायकप्रिये' इति विश्वः । कुपितस्त्रीप्रसादक इति भू० । विट एकविद्यः । विदूषकः । 'विकृताङ्गवचोवेषैर्हास्यकारी विदूषकः' इति । भिक्षुकी श्रमणा । 'श्रमणा भिक्षुकी मुण्डा' इति हैमः । नागरिका निपुणाः । समवायेषु समुदायेषु । प्रभूततमेन प्रचुरतरेण । शुल्को मौल्यम् । उन्मादित उन्मादं प्रापितस्तस्मै । शौचं शुद्धता । 'शौचमर्थेष्ववञ्चनम्' इति वैजयन्ती । दाक्ष्यं कुशलत्वम् । दाक्षिण्यं सरलता । गान्धर्वसमागमेन । गान्धर्वविवाहेनेत्यर्थः । कामस्वीकृते स्वायत्तीकृते । स्वामिन्यधिकारिणि । अधिकरणे चोत्तरादौ । 'अलाभे अर्थस्य धूर्तात्स्वशुल्कालाभे । कामस्वीकृते मैत्र्यादङ्गीकृते । स्वामिनि प्रभौ ग्रामाध्यक्षे । अधिकरणे नागरिकसंसदि । साधनमुच्चावचवागादिभिः स्वोपयुक्तविधानम् ।' इति भूषणा । रक्तस्य । अनुरक्तस्येत्यर्थः । एकचारिणीव्रतं पातिव्रत्यम् । हृतशिष्टानां गृहीतावशिष्टानाम् । गम्यधनानाम् । गम्या भुजङ्गाः । 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः । असनं क्षेपणम् । प्रतिहस्त्यासन्नगृहवेश्यापतिः । 'प्रतिहस्ती प्रातिवेश्यः' इति वैजयन्ती । त्यागशक्तेः संधुक्षणमुद्दीप्तीकरणम् । असारस्य निर्धनस्य । वाक्संतक्षणैर्वचनतिरस्कारैः । लोकोपक्रोशनैर्लोकेषु

---

१ प्रभौ. २ अधिकगुणे. ३ आह्वन.

भियोगैरवमानैश्चापवाहनम्, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरिभ्यैरनुबद्धार्थानर्थसंशयान्विचार्य भूयोभूयः संयोजनमिति । गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः । सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनातिवृत्तिः । एवं स्थितेऽनया प्रजापतिविहितं स्वधर्ममुल्लङ्घ्य कश्चिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि । गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षाणयाऽनया प्रकोपितः । स्वकुटुम्बकं चावसादितम् । 'एषा कुमतिर्न कल्याणी' इति निवारयन्त्यां मयि वनवासाय कोपात्प्रस्थिता । सा चेदियमहार्यनिश्चया सर्व एव जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यते' इत्यरोदीत् ।

अथ सा वारयुवतिस्तेन 'भद्रे ननु दुःखाकरोऽयं वनवासः । तस्य फलमपवर्गः स्वर्गो वा । प्रथमस्तु तयोः प्रकृष्टज्ञानसाध्यः प्रायो दुःसंपाद एव, द्वितीयस्तु सर्वस्यैव सुलभः कुलधर्मानुष्ठायिनः । तदशक्यारम्भादुपरम्य मातुर्मते वर्तस्व' इति सानुकम्पमभिहिता 'यदीह भगवत्पादमूलमशरणम्, शरणमस्तु मम कृपणाया हिरण्यरेता देव एव' इत्युदमनायत । स तु मुनिरनुविमृश्य गणिकामातरमवदत्— 'संप्रति गच्छ गृहान् । प्रतीक्षस्व कानिचिद्दिनानि यावदियं सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासव्यसनेनोद्वेजिता भूयोभूय-

निन्दनैः । अपवाहनं दूरीकरणम् । अनर्थप्रतिघातिभिरुपद्रवनिवारकैः । इभ्यैर्धनिकैः । सज्जता तत्परता । मातृकाया मातामह्याः । 'मातुर्माता तु मातृका' इति वैजयन्ती । अतिवृत्तिस्त्यागः । गम्यजनो विटजनः । 'गम्यो विटः पाल्लविको भुजङ्गः' इति भागुरिः । प्रत्याचक्षाणया प्रत्याख्यानं कुर्वत्या । अवसादितं नाशितम् । अहार्यनिश्चया दृढनिश्चया । संस्थास्यते मरिष्यतीत्यर्थः । 'संस्थानं मरणं मतम्' इति वैजयन्ती । **अथेति** । दुःखाकरो दुःखजनकः । 'दुःखात्प्रातिलोम्ये' इति डाच्प्रत्ययः । प्रथमोऽपवर्गः दुःसंपादो दुःसाध्यः । कुलधर्मानुष्ठायिनः स्वकुलोचितकर्मकारिणः । अशक्यारम्भात्तपस इत्यर्थः । अशरणमरक्षितृ । हिरण्यरेता दहन । उदमनायत उन्मना अभवत् । 'दुर्मना विमना अन्तर्मनाः स्यादुत्क उन्मनाः' इत्यमरः । गृहान् । 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । प्रकृतौ स्वभावे । अलघुभक्तिर्दृढभक्तिः ।

१ अभ्यैः. २ अवादीत्. ३ अस्मात्परं 'सा तु प्रत्यवादीत्' इत्य० एक० पुस्तके. ४ वासोद्वेजिता.

श्चास्माभिर्विबोध्यमाना प्रकृतावेव स्थास्यति ' इति । ' तथा ' इति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमलघुभक्तिर्धौतोद्गमनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतालवालपूरणैर्देवतार्चनकुसुमोच्चयावचयप्रयासैर्नैकविकल्पोपहारकर्मभिः कामशासनार्थे च गन्धमाल्यधूपदीपनृत्यगीतवाद्याभिः क्रियाभिरेकान्ते च त्रिवर्गसंबन्धिनीभिः कथाभिरध्यात्मवादैश्चानुरूपैरल्पीयसैव कालेनान्वरञ्जयत् ।

एकदा च रहसि रक्तं तमुपलक्ष्य ' मूढः खलु लोको यत्सह धर्मेणार्थकामावपि गणयति ' इति किंचिदस्मयत । ' कथय वासु केनांशेनार्थकामातिशायी धर्मस्तवाभिप्रेतः ' इति प्रेरिता मरीचिना लज्जामन्थरमारभताभिधातुम्—' इतः किल जनाद्भगवतस्त्रिवर्गबलाबलज्ञानम् । अथ वैतदपि प्रकारान्तरं दासजनानुग्रहस्य । भवतु । श्रूयताम् । ननु धर्मादृतेऽर्थकामयोरनुत्पत्तिरेव । तदनपेक्ष एव धर्मो निवृत्तिसुखप्रसूतिहेतुरात्मसमाधानमात्रसाध्यश्च । सोऽर्थकामवद्बाह्यसाधनेषु नात्यायतते । तत्त्वदर्शनोपबृंहितश्च यथाकथंचिदप्यनुष्ठीय-

धौतोद्गमनीयेति । धौतं यदुद्गमनीयं वस्त्रयुगलं तद्वस्ते सा तद्वासिनी । ' तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ' इत्यमरः । धौतोद्गमनीयमित्यत्र ' विशिष्टवाचकानाम् ' इति वचनाद्विशेष्यपरतया व्याख्येयम् । नात्यादृतेति । नात्यादृत आदरितः शरीरस्य संस्कारः परिकर्मादिर्यया सा । वनतरूणां पोता बालवृक्षास्तेषामालवालानि । देवतार्चनार्थं कुसुमानि पुष्पाणि तेषामुच्चयः समूहस्तस्यावचयो ग्रहणं तत्प्रयासैः श्रमैः । ' उच्चयस्तरोरादानमवचयो भूमेः ' इति भूषणा । नैका अनेका ये विकल्पा भेदाः । ' विकल्पः संशये भेदे ' इति वररुचिः । उपहारकर्मभिर्बलिकर्मभिः । कामशासनो महादेवस्तदर्थे तन्निमित्तम् । ' कामशासनार्थे कामोद्दीपनार्थे च ' इति भूषणा । त्रिवर्गो धर्मार्थकामाः । अध्यात्मवादैरात्मानमधिकृत्य ये वादास्तत्त्वबुभुत्सुकथाः तैः । एकदेति । रक्तमनुरक्तम् । किंचिदल्पम् । कथयेति । वासु बाले । ' अथ बाला स्याद्वासूः ' इत्यमरः । ' अम्बार्थनद्योर्ह्रस्वः ' इति संबुद्धौ ह्रस्वता । अर्थकामावतिशेते अतिक्रम्य वर्तत इति तथा । अभिप्रेतः संमतः । इतो जनान्मल्लक्षणात् । 'धर्मादृते इति । तथा च व्यासः—धर्मादर्थश्च कामश्चेति इ०' इति भू० । तदनपेक्षोऽर्थकामनिरपेक्ष एव । स्वतन्त्र एवेत्यर्थः । निवृत्तिसुखं मोक्षसुखं तदुद्भवहेतुः । आत्मसमाधानं बुद्धेरेकाग्रतामात्रम् । ' आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्म वर्ष्म च ' इत्यमरादयः । स धर्मः । नात्यायतते नात्यन्तमधीनो भवती-

१ कुसुमसमुच्चय २ अनेक. ३ अनुकूलैः. ४ स धर्मः. ५ आत्मनः मया०. ६ ०तस्तु.

मानाभ्यां नार्थकामाभ्यां बाध्यते। बाधितोऽपि चाल्पायासप्रतिसमाहितस्तमपि दोषं निर्हृत्य श्रेयसेऽनल्पाय कल्पते। तथा हि। पितामहस्य तिलोत्तमाभिलाषः, भवानीपतेर्मुनिपत्नीसहस्रसंदूषणम्, पद्मनाभस्य षोडशसहस्रान्तःपुरविहारः, प्रजापतेः स्वदुहितर्यपि प्रणयप्रवृत्तिः, शचीपतेरहल्याजारता, शशाङ्कस्य गुरुतल्पगमनम्, अंशुमालिनो वडवालङ्घनम्, अनिलस्य केसरिकलत्रसमागमः, बृहस्पतेरुतथ्यभार्याभिसरणम्, पराशरस्य दाशकन्यादूषणम्, पाराशर्यस्य भ्रातृदारसंगतिः, अत्रेर्मृगीसमागम इति। अमराणां च तेषु तेषु कार्येष्वासुरविप्रलम्भनानि ज्ञानबलान्न धर्मपीडामावहन्ति। धर्मपूते च मनसि नभसीव न जातु रजोऽनुषज्यते। तन्मन्ये नार्थकामौ धर्मस्य शततमीमपि कलां स्पृशतः' इति।

श्रुत्वैतदृषिरुदीर्णरागवृत्तिरभ्यधात्—'अयि विलासिनि साधु पश्यसि। न धर्मस्तत्त्वदर्शिनां विषयोपभोगेनोपरुध्यत इति। किं तु जन्मनः प्रभृत्यर्थकामवार्तानभिज्ञा वयम्। ज्ञेयौ चेमौ किंरूपौ किंपरिवारौ किंफलौ च' इति। सा त्वावादीत्—'अर्थस्तावदर्जनवर्धनरक्षणात्मकः, कृषि-

---

त्यर्थः। 'यती प्रयत्ने'। उपसर्गादर्थान्तरम्। तत्त्वदर्शनेनोपबृंहितो वर्धितो धर्मोऽर्थकामाभ्यां न बाध्यते। बाधितोऽपि धर्मोऽल्पायासेनाल्पयत्नेन प्रतिसमाहितः समाधानं प्रापितः। अनल्पाय श्रेयसे मोक्षाय। **तथा हीति**। तिलोत्तमाऽप्सरोविशेषः। संदूषणं गमनम्। पद्मनाभस्य कृष्णस्य प्रणयेन प्रीत्या प्रवृत्तिः प्रवर्तनम्। अहल्या गौतमपत्नी। गुरुतल्पं बृहस्पतिभार्या। 'तल्पं शय्याट्टदारेषु' इत्यमरः। अंशुमाली सूर्यः। वडवाऽश्विनी। अनिलस्य वायोः। केसरी वानरभेदः। उतथ्यो बृहस्पतेर्ज्येष्ठभ्राता। अभिसरणं गमनम्। पराशरस्य व्यासपितुः। दाशः कैवर्तः तत्कन्या सत्यवती तद्दूषणं तद्गमनम्। पाराशर्यस्य भ्राता विचित्रवीर्यः। आसुरविप्रलम्भनान्यकृत्याचरणानि। 'अकृत्याचरणं यत्तदासुरं विप्रलम्भनम्' इत्यजयः। ज्ञानबलात्तत्प्राबल्यात्। धर्मपूते धर्मपवित्रे। जातु कदाचित्। यथा नभसि रजो नानुषक्तं भवति तथेत्यर्थः। **श्रुत्वेति**। उदीर्णा वृद्धिं गता रागवृत्तिरिच्छावृत्तिः यस्येति। अयि विलासिनीति सानुरागोक्तिः। तत्त्वदर्शिनां तत्त्वसाक्षात्कारिणाम्। धर्मो विषयोपभोगेन स्त्र्याद्युपभोगेन नोपरुध्यते नोपक्षीयते। ज्ञेयौ चेमावर्थकामौ ज्ञातव्याविति। रूपं स्वरूपम्। परिवारः परिकरः। अर्जनं संपादनम्। वर्धनं वृद्धिः

पाशुपाल्यवाणिज्यसंधिविग्रहादिपरिवारः तीर्थप्रतिपादनफलश्च। कामस्तु विषयातिसक्तचेतसोः स्त्रीपुंसयोर्निरतिशयसुखस्पर्शविशेषः। परिवारस्त्वस्य यावदिह रम्यमुज्ज्वलं च। फलं पुनः परमाह्लादनम्, परस्परविमर्दजन्म, स्मर्यमाणमधुरम्, उदीरिताभिमानमनुत्तमम्, सुखमपरोक्षं स्वसंवेद्यमेव। तस्यैव कृते विशिष्टस्थानवर्तिनः कष्टानि तपांसि महान्ति दानानि दारुणानि युद्धानि भीमानि समुद्रलङ्घनादीनि च नराः समाचरन्ति' इति।

निशम्यैतन्नियतिबलान्नु तत्पाटवान्नु स्वबुद्धिमान्द्यान्नु स्वनियममनादृत्य तस्यामसौ प्रासजत्। सा सुदूरं मूढात्मानं च तं प्रवहणेन नीत्वा पुरमुदारशोभया राजवीथ्या स्वभवनमनैषीत्। अभूच्च घोषणा 'श्वः कामोत्सवः' इति। उत्तरेद्युः स्नातानुलिप्तमाचरितमञ्जुमालमारब्धकामिजनवृत्तं निवृत्तस्ववृत्ताभिलाषं क्षणमात्रगतेऽपि तया विना दूयमानं तमृषिमृद्धिमता राजमार्गेणोत्सवसमाजं नीत्वा क्वचिदुपवनोद्देशे युवतिजनशतपरिवृतस्य राज्ञः

---

कलादिभिः। रक्षणं पालनम्। कृषिः कर्षणकर्म। पाशुपाल्यं पशुपालनम्। तीर्थेषु सत्पात्रेषु प्रतिपादनं दानम्। स्त्रीपुंसयोरिति 'अचतुर—' इत्यादिना निपातनाददन्तता। निरतिशयः। श्रेष्ठ इत्यर्थः। यावदिति साकल्ये। परस्परविमर्दजन्मान्योन्यालिङ्गनचुम्बनादिजन्म। 'उदीरित इत्यत्राभिमानः सार्थक्यबुद्धिर्येत इत्यर्थः' इति भूषणा। अपरोक्षं प्रत्यक्षम्। तस्यैव सुखस्यैव निमित्तम्। कृते इत्यव्ययं तादर्थ्ये। 'अर्थे कृतेऽव्ययं तावत्तादर्थ्ये वर्तते द्वयम्' इति कोशः। विशिष्टस्थानवर्तिनः सत्तीर्थवासिनः। निशम्य श्रुत्वा। नियतिर्दैवम्। तस्याः काममञ्जर्याः पाटवं पटुत्वम्। मान्द्यं मन्दत्वम्। नुः सर्वत्र वितर्के। स्वनियमं मुनिसमयम्। असौ मरीचिस्तस्यां काममञ्जर्यां प्रासजत् प्रसक्तोऽभूदित्यर्थः। सेति। सा काममञ्जरी। मूढात्मानं मूर्खबुद्धिम्। तं मुनिम्। प्रवहणेन कर्णीरथसंज्ञकेन वाहनविशेषेण। उदारशोभयोत्कृष्टशोभया। राजवीथ्या राजमार्गेण। स्वभवनं स्वगृहमनैषीदनयत्। अभूच्चेति। घोषणा डिण्डिमः। 'दांडोरा' इति प्रसिद्धः। श्व आगामिनि दिवसे। उत्तरेद्युरुत्तरदिवसे। पूर्वं स्नातः पश्चादनुलिप्तस्तथा तम्। आचरिता धृता मञ्जुर्मनोहरा माला येनेति तम्। वृत्तं वर्तनम्। निवृत्तो दूरापास्तः स्ववृत्ते स्वाचरणेऽभिलाषो यस्य तम्।

---

१ अभिषक्त, अभिव्यक्त. २ उज्ज्वलं च वस्तु. ३ अनुत्तमसुखम्. ४ निमित्तबलान्नु. ५ मुग्ध. ६ दूयमानचित्तम्.

संनिधौ स्मितमुखेन तेन 'भद्रे भगवता सह निषीद' इत्यादिष्टा सविभ्रमं कृतप्रणामा[1]सस्मितं न्यषीदत् । तत्र काचिदुत्थाय बद्धाञ्जलिरुत्तमाङ्गना 'देव जिताऽनयाऽहम् । अस्यै दास्यमद्यप्रभृत्यभ्युपेतं मया' इति प्रभुं प्राणंसीत् । विस्मयहर्षमूलश्च कोलाहलो लोकस्योदजिहीत । हृष्टेन च राज्ञा महार्हैं रत्नालंकारैर्महता च परिबर्हेणानुगृह्य विसृष्टा वारमुख्याभिः पौरमुख्यैश्च गणशः प्रशस्यमाना स्वभवनमगत्वैव तमृषिमभाषत—'भगवन् अयमञ्जलिः । चिरमनुगृहीतोऽयं दासजनः । स्वार्थ इदानीमनुष्ठेयः' इति । स तु रागादशनिहत इवोद्भ्राम्याब्रवीत्—'प्रिये किमेतत् । कुत इदमौदासीन्यम् । क्व गतस्तव मय्यसाधारणोऽनुरागः' इति । अथ सा सस्मितमिदमवादीत्—'भगवन् ययाऽद्य राजकुले मत्तः पराजयोऽभ्युपेतस्तस्याश्च मम च कस्मिंश्चित्संघर्षे '[2]मरीचिमावर्जितवतीव श्लाघसे' इति [3]तयाऽस्म्यहमभिक्षिप्ता । दास्यपणबन्धेन चास्मिन्नर्थे प्रावर्तिषि । सिद्धार्था चास्मि त्वत्प्रसादात्' इति । स तया तथाऽवधूतो दुर्मतिः कृतानुशयः शून्यवन्न्यवर्तिष्ट । यस्तथैवं कृतस्तपस्वी तमेव मा महाभाग मन्यस्व । [4]स्वशक्तिनिषिक्तं रागमुद्धृत्य तयैव बन्धक्या महद्वैराग्य-

दूयमानं खिद्यमानम् । ऋद्धिमता समृद्धेन । उत्सवसमाजं क्रीडासभाम् । भगवता मुनिना सह । निषीद उपविश । तत्रेति । तत्र सभायाम् । अनया काममञ्जर्या । अभ्युपेतमङ्गीकृतम् । कोलाहलः कलकलः । उदजिहीत । 'ओहाङ् गतौ' इति धातुः । उद्गतोऽभूदित्यर्थः । अर्हो मूल्यम् । परिबर्हः परिकरः । सेवकजन इति यावत् । अयं दासजनो मल्लक्षणः । स्वार्थस्तपश्चरणादिः । स त्विति । उदासीनस्य भाव औदासीन्यम् । अथेति । संघर्षः स्पर्धा । आवर्जितवतीव । वशीकृतवतीवेत्यर्थः । पणबन्धः प्रतिज्ञा । अस्मिन्नर्थे भवद्वशीकरणरूपेऽर्थे । प्रावर्तिषि प्रवृत्ता अभूवम् । सिद्धार्था कृतार्था । अवधूतो दूरीकृतः । कृतानुशयः कृतपश्चात्तापः । शून्यवच्छून्यहृदय इव । य इति । तपस्व्यनुकम्प्यः । 'तपस्वी चानुकम्पार्हः' इत्यमरः । महाभागेत्यपहारवर्मसंबोधनम् । तमेव मरीचिमेव मां मन्यस्व । जानीहीत्यर्थः । स्वशक्तिनिषिक्तं स्वशक्त्या स्वसामर्थ्येन । 'स्वशक्तिः प्रलोभनशक्तिः' इति भूषणा । निषिक्तं निक्षिप्तम् । रागमनुरागम् । उद्धृत्य दूरीकृत्य । बन्धक्या पुंश्चल्या । 'पुंश्चली धर्षणी

१ समासदत् । तत्र तेन. २ महर्षिं मरीचिम्. ३ तयाऽहमभिक्षिप्ता. ४ स्वनिषिक्तम्.

मर्पितम्। अचिरादेव शक्य आत्मा त्वदर्थसाधनक्षमः कर्तुम्। अस्यामेव तावद्गुसाङ्गपुर्यां चम्पायाम्' इति।

अथ तन्मनश्च्युततमःस्पर्शभियेवास्तं रविरगात्। ऋषिमुक्तश्च रागः संध्यात्वेनास्फुरत्। तत्कथादत्तवैराग्याणीव कमलवनानि समकुचन्। अनुमतमुनिशासनस्त्वहममुनैव सहोपास्य संध्यामनुरूपाभिः कथाभिस्तमनुशय्य नीतरात्रिः प्रत्युन्मिषत्युदयप्रस्थदावकल्पे कल्पद्रुमकिसलयावधीरिण्यरुणार्चिषि तं नमस्कृत्य नगरायोदचलम्। अदर्शं च मार्गाभ्यासवर्तिनः कस्यापि क्षपणकविहारस्य बहिर्विविक्ते रक्ताशोकखण्डे निषण्णमस्पृष्टसमाधिमाधिक्षीणमग्रगण्यमनभिरूपाणां कृपणवर्णं कमपि क्षपणकम्। उरसि चास्य शिथिलितमलनिचयान्मुखान्निपततोऽश्रुबिन्दूनलक्षयम्। अप्राक्षं चान्तिकोपविष्टः—'क्व तपः क्व च रुदितम्। न चेद्रहस्यमिच्छामि

---

बन्धक्यसती कुलटेत्वरी' इत्यमरः। त्वदर्थसाधनक्षमस्त्वत्प्रयोजनसंपादनसमर्थः। **अथेति**। तस्य मुनेर्यन्मनस्तस्मात् च्युतं गलितं यत्तमोऽज्ञानं तत्स्पर्शभियेव। सूर्यतमसोर्वैरादिति भियेवेत्यर्थः। ऋषिमुक्तः स रागः काममञ्जरीविषयकः। संध्यात्वेनास्फुरदिति प्रकटीबभूवेत्यर्थः। तत्कथाः मुनिवार्तास्ताभिर्दत्तवैराग्याणीव कमलवनानि समकुचन्संकुचितानि बभूवुः। इवशब्दोऽत्रोत्प्रेक्षायाम्। अनुमतमङ्गीकृतं मुनिशासनं येनेति सः। अमुना सह मुनिना सह। सहयोगे तृतीया। अनुरूपाभिरनुकूलाभिः। तमनुशय्य। तेन सह शयित्वेत्यर्थः। 'तृतीयार्थे—' इत्यनोः कर्मप्रवचनीयत्वम्। 'कर्मप्रवचनीययुक्ते द्वितीया'। प्रत्युन्मिषत्युदयति सतीति सप्तम्यन्तम्। उदयः पूर्वपर्वतः। तस्य प्रस्थः सानुः। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्यमरः। तत्र दावकल्पे वह्निसदृशे। कल्पद्रुमस्य किसलयानि पल्लवानि। अवधीरिणि तिरस्कारकारिणि। अरुणमर्चिर्यस्य तस्मिन् अरुणार्चिषि सूर्ये। तं मुनिम्। नगराय नगरं प्रतीत्यर्थः। उदचलम्। चलित इत्यर्थः। अदर्शमिति दृष्टवान्। मार्गस्याभ्यासं समीपम्। 'समीपे निकटासन्नसंनिकृष्टसनीडवत्। सदेशाभ्याससविधसमर्यादसवेशवत्' इत्यमरः। क्षपणकविहारस्य सौगतावासस्य बहिः विविक्ते विजने। रक्ताशोकखण्डे रक्ताशोककदम्बे। 'कदम्बे खण्डमस्त्रियाम्' इत्यमरः। अस्पृष्टसमाधिं नियमरहितम्। 'समाधिर्नियमे ध्याने' इति विश्वः। आधिक्षीणं मानसपीडादुर्बलम्। अनभिरूपाणां कुरूपाणाम्। कृपणवर्णं दीनवर्णम्। क्षपणकं बौद्धम्। शिथिलितो मलनिचयो यत्रेति तथा तस्मात्। अन्तिकोपविष्टः समीपस्थितः। न चेद्रहस्यं न

---

१ संगावृत. २ अभ्याश. ३ निपतितान.

श्रोतुं शोकहेतुम्' इति। सोऽब्रूत—'सौम्य, श्रूयताम्। अहमस्यामेव चम्पायां निधिपालितनाम्नः श्रेष्ठिनो ज्येष्ठसूनुर्वसुपालितो नाम। वैरूप्यात्तु मम विरूपक इति प्रसिद्धिरासीत्। अन्यश्चात्र सुन्दरक इति यथार्थनामा कलागुणैः समृद्धो वसुना नातिपुष्टोऽभवत्। तस्य च मम च वपुर्वसुनी निमित्तीकृत्य वैरं वैरोपजीविभिः पौरधूर्तैरुदपाद्यत। त एव कदाचिदावयोरुत्सवसमाजे स्वयमुत्पादितमन्योन्यावमानमूलमधिक्षेपवचनव्यतिकरमुपशमय्य 'न वपुर्वसु वा पुंस्त्वमूलम्, अपि तु प्रकृष्टगणिकाप्रार्थ्ययौवनो हि यः स पुमान्। अतो युवतिललामभूता काममञ्जरी यं वा कामयते स हरतु सुभगपताकाम्' इति व्यवास्थापयन्। अभ्युपेत्यावां प्राहिणुव तस्यै दूतान्। अहमेव किलामुष्याः स्मरोन्मादहेतुरासम्। आसीनयोश्चावयोर्मामेवोपगम्य सा नीलोत्पलमयमिवापाङ्गदामाङ्के मम मुञ्चन्ती तं जनमपत्रपयाऽधोमुखं व्यधत्त। सुभगंमन्येन च मया स्वधनस्य स्वगृहस्य स्वगणस्य स्वदेहस्य स्वजीवितस्य च सैवेश्वरीकृता। कृतश्चाहमनया मलमल्लकशेषः।

चेद्गोप्यम्। **सोऽब्रूतेति**। श्रेष्ठिनो वणिग्वरस्य। अन्यः कश्चन। वसुना नातिपुष्टः। दरिद्र इति यावत्। तस्य सुन्दरकस्य मम च वपुर्वसुनी शरीरद्रव्ये। वैरोपजीविभिर्वैरेणोपजीवन्तीति तथोक्तैः। **त इति**। स्वयं तैः पौरधूर्तैः। अन्योन्यावमानमूलं परस्परावमाननिदानम्। अधिक्षेपस्य वचनानां व्यतिकरस्तं अधिक्षेपवचनव्यतिकरं तिरस्कारवाक्यप्रसरम्। उपशमय्य शान्तिं नीत्वा। प्रकृष्टगणिकयोत्तमवेश्यया प्रार्थ्यमानं यौवनं यस्येति स तथा। युवतिललामभूता युवतिभूषणभूता। सुभग इति पताकाम्। चिह्नमिति यावत्। व्यवास्थापयन्निति मर्यादां चक्रुरित्यर्थः। अभ्युपेत्याङ्गीकृत्य। तस्यै तामानेतुम्। 'क्रियार्थोपपदस्य—' इति कर्मणि चतुर्थी। **अहमिति**। 'अर्थवद्ग्रहणे यस्मान्नानर्थकपरिग्रहः। सुरूपधनिनोर्वेश्या गृह्णाति धनिनं ततः॥' इति नक्षत्रमाला। 'अपाङ्गदाम शृङ्गारानुभावः' इति भूषणा। अपाङ्गं नेत्रप्रान्तम्। तं जनं मत्प्रतिद्वन्द्विनं सुन्दरकम्। अपत्रपया लज्जया। 'लज्जा साऽपत्रपाऽन्यतः' इत्यमरः। **सुभगमिति**। आत्मानं सुभगं मनुते स सुभगंमन्यः। ईश्वरीकृता स्वामिनीकृता। च्व्यन्तमेतत्। मलमल्लकं कौपीनम्। 'आच्छादनं संपिधानं कौपीनं मलमल्लकम्' इति वैजयन्ती।

१ कल्याणगुणैः. २ वचनशत. ३ अस्यै. ४ अपाङ्गमङ्के. ५ सुभगेन.

हृतसर्वस्वैस्तया चापवाहितः प्रपद्य लोकोपहासलक्ष्यतामक्षमश्च सोढुं धिक्कृतानि पौरवृद्धानामिहं जैनायतने मुनिनैकेनोपदिष्टमोक्षवर्त्मा सुकर एष वेषो वेशनिर्गतानामित्युदीर्णवैराग्यस्तदपि कौपीनमजहाम् । अथ पुनः प्रकीर्णमलपङ्कः प्रबलकेशलुञ्चनव्यथः प्रकृष्टतमक्षुत्पिपासादिदुःखः स्थानासनशयनभोजनेष्वपि द्विप इव नवग्रहो बलवतीभिर्यन्त्रणाभिरुद्वेजितः प्रत्यवामृशम् । 'अहमस्मि द्विजातिः । अस्वधर्मो ममैष पाखण्डपथावतारः । श्रुतिस्मृतिविहितेनैव वर्त्मना मम पूर्वजाः प्रावर्तन्त । मम तु मन्दभाग्यस्य निन्द्यवेषममन्ददुःखायतनं हरिहरहिरण्यगर्भादिदेवतापवादश्रवणनैरन्तर्यात्प्रेत्यापि निरयफलमफलं विप्रलम्भप्रायमीदृशमिदमधर्मवर्त्म धर्मवत्समाचरणीयमासीत् ।' इति प्रत्याकलितस्वदुर्नयः पिण्डीखण्डं विविक्तमेतदासाद्य पर्याप्तमश्रु मुञ्चामि ' इति । श्रुत्वा चैतदनुकम्पमानोऽब्रवम्—' भद्र, क्षमस्व । कंचित्कालमत्रैव निवस । निजेन द्युम्नेनासावेव वेश्या यथा त्वां योजयिष्यति तथा यतिष्ये । सन्त्युपायास्तादृशाः ' इत्याश्वास्य

अपवाहितो बहिष्कृतः । प्रपद्य प्राप्य । लोकानामुपहासास्तेषां लक्ष्यतां स्थानताम् । धिक्कृतानि तिरस्कारवचनानि । पौरवृद्धानां नागरिकश्रेष्ठानाम् । जैनायतने क्षपणकदेवतागारे । वेशो वेश्यागृहम् । उदीर्णवैराग्योऽधिकवैराग्यः । कौपीनमजहामत्यजम् । **अथेति** । प्रकीर्णः प्रसृतः मलपङ्कः यस्य । प्रबला केशानां लुञ्चनमुत्पाटनं तस्य व्यथा यस्य सः । प्रकृष्टतमेत्यत्र 'अतिशायने तमबिष्ठनौ' इति तमप् । क्षुत्क्षुधा पिपासा तृषा । नवग्रहो नूतनं ग्रहणमुपादानं यस्येति । प्रत्यवामृशं व्यचारयम् । द्विजातिर्वैश्यः । पाखण्डानां पन्थाः पाखण्डपथः । 'ऋक्पूर्–' इत्यन्तता । पाखण्डपथावतारः बौद्धमार्गावतरणम् । अमन्ददुःखायतनं महद्दुःखस्थानम् । अपवादो निन्दा । श्रवणस्य नैरन्तर्यान्निरन्तरस्य भावस्तेन । अविच्छेदादित्यर्थः । प्रेत्य जन्मान्तरे । 'प्रेत्यामुत्र भवान्तरे ' इत्यमरः । निरयो नरकः । विप्रलम्भप्रायं वञ्चनाप्रायम् । अधर्मवर्त्माधर्ममार्गः । प्रत्याकलितो विचारितः । पिण्ड्यशोकः । खण्डं समूहः । ' अशोकः पिण्डिका पिण्डी' इति वैजयन्ती । विविक्तमेकान्तम् । पर्याप्तं यथेष्टम् । भद्रेति संबोधनम् । द्युम्नेन धनेन । 'हिरण्यं द्रविणं द्युम्नम्' इत्यमरः । अनु पश्चात् । आविशन्नेव प्रविशन्नेव ।

१ ०सर्वस्वतया. २ इहैवायतने. ३ पाखण्डि.

तमनूत्थितोऽहम् । नगरमाविशन्नेव चोपलभ्य लोकवादाल्लुब्धसमृद्ध-पूर्णं पुरमित्यर्थानां नश्वरत्वं च प्रदर्श्य प्रकृतिस्थानमून्विधास्यन्कर्णी-सुतप्रहिते पथि मतिमकरवम् । अनुप्रविश्य च द्यूतसभामक्षधूर्तैः समगंसि । तेषां च पञ्चविंशतिप्रकारासु सर्वासु द्यूताश्रयासु कलासु कौशलमक्षभूमिहस्तादिषु चात्यन्तदुरुपलक्ष्याणि कूटकर्माणि तन्मूलानि सावलेपान्यधिक्षेपवचनानि जीवितनिरपेक्षाणि संरम्भविचेष्टितानि सभिकप्रत्ययव्यवहारान् न्यायबलप्रतापप्रायोनङ्गीकृतार्थसाधनक्षमान्बलिषु सान्त्वनानि दुर्बलेषु भर्त्सितानि पक्षरचनानैपुणमुच्चावचानि प्रलोभनानि ग्लहप्रभेदवर्णनानि द्रव्यसंविभागौदार्यमन्तरान्तराऽश्लील-प्रायान्कलकलानित्येतानि चान्यानि चानुभवन्न तृप्तिमध्यगच्छम् । अहसं च किंचित्प्रमाददत्तशारे कचित्कितवे । प्रतिकितवस्तु निर्दहन्निव क्रोधताम्रया दृशा माममिवीक्ष्य ‘ शिक्षयसि रे द्यूतवर्त्म हासव्याजेन । आस्तामयमशिक्षितो वराकः । त्वयैव तावद्विचक्षणेन देविष्यामि ’ इति द्यूताध्यक्षानुमत्या व्यत्यषजत् । मया जितश्चासौ

लोकवादाज्जनवाक्यात् । लुब्धाः कृपणाः । समृद्धाः श्रीमन्तः । ‘अधिकर्द्धिः समृद्धः स्यात्’ इत्यमरः । कर्णीसुतप्रहिते कर्णीसुतः स्तेयशास्त्रकर्ता तेन प्रहिते प्रवर्तिते । अक्षधूर्तैः पाशनिपुणैः । समगंसि संगतोऽभवम् । तेषां चेति । तेषामक्षधूर्तानाम् । अक्षभूमिः शारीस्थापनगृहम् । कूटकर्माणि कपटकर्माणि तन्मूलानि कूटकर्ममूलानि । ‘ सभिका द्यूतकारकाः ’ इत्यमरः । ‘० व्यवहारन्याय-बलेति । व्यवहारो लोकानां व्यवहारः न्यायो युक्तिः तयोर्बलमुपन्यासः प्रतापः प्रागल्भ्यं तैः प्रयोजितार्थसाधने क्षमस्तस्मादिति प्रत्ययस्य विशेषणम् । क्वचित्प्रत्ययव्यवहारादिति पाठः । ‘ प्रत्ययजनको व्यवहारः इत्यर्थः । ’ इति भूषणा । अङ्गीकृतार्थः स्वीकृतार्थस्तत्साधने क्षमान्समर्थान् । पक्षरचनानैपुणं स्वपक्षीकरणे नैपुण्यम् । सर्वलोकानां स्वायत्तीकरणे कुशलत्वमित्यर्थः । उच्चावचान्यनेकप्रकाराणि । प्रलोभनानि मोहनानि । ग्लहः पणः । ‘ पणोऽक्षेषु ग्लहो मतः ’ इत्यमरः । ‘ ग्लहप्रभेदवर्णनानि पणस्यान्यथाभाववर्णनानि ’ इति भूषणा । अन्तरान्तरा मध्येमध्ये इत्यर्थः । अश्लीलप्रायानसभ्यबहुलान् । ‘ अश्लीलं ग्राम्यभाषणम् ’ इति वैजयन्ती । कलकलान्कोलाहलान् । प्रमाददत्तशारे प्रमादेनानवधानतया दत्तः शारः क्षेपकरणं येन तस्मिन् । प्रतिकितवः प्रतिकूलकितवः । द्यूतवर्त्म द्यूतमार्गम् । हासव्याजेन हासमिषेण । व्यत्यषजद्द्यतिषक्तोऽभूत् । दीनाराणां

१ लुब्धेभ्यपूर्णं; लुब्धसभिकमिभ्यपू०. २ अनुप्रपद्य. ३ अक्षभ्रमि. ४ व्यवहारन्याय. ५ प्रयोजितार्थ; जितार्थ. ६ परपक्षरचनानैपुण्यम्. ७ उपप्रलोभनानि.

षोडशसहस्राणि दीनाराणाम्। तदर्धं सभिकाय सभ्येभ्यश्च दत्त्वाऽर्धं स्वीकृत्योदतिष्ठम्। उदतिष्ठंश्च तत्रगतानां हर्षगर्भाः प्रशंसालापाः। प्रार्थ्यमानसभिकानुरोधाच्च तदगारेऽत्युदारमभ्यवहारविधिमकरवम्। यन्मूलश्च मे दुरोदरावतारः स मे विमर्दको नाम विश्वास्यतरं द्वितीयं हृदयमासीत्।

तन्मुखेन च सारतः कर्मतः शीलतश्च सकलमेव नगरमवधार्य धूर्जटिकण्ठकल्माषकालतमे तमसि नीलनिवसनार्धोरुकपरिहितो बद्धतीक्ष्णकौक्षेयकः फणिमुखकाकलीसंदंशकपुरुषशीर्षकयोगचूर्णयोगवर्तिकामानसूत्रकर्कटकरज्जुदीपभाजनभ्रमरकरण्डकप्रभृत्यनेकोपकरणयुक्तो गत्वा कस्यचिल्लुब्धेश्वरस्य गृहे संधिं छित्त्वा पटभाससूक्ष्मच्छिद्रालक्षितान्तर्गृहप्रवृत्तिरव्यथो निजगृहमिवानुप्रविश्य नीवीं सारमहतीमादाय निरगाम्। नीलनीरदनिकरपीवरतिमिरनिबिडितायां राजवीथ्यां झटिति शतह्रदासंपातमिव क्षणमालोकमलक्षयम्। अथासौ नगरदेवतेव नगरमोषरोषिता निःसंबाधवेलायां निःसृता संनिकृष्टा काचिदुन्मिषद्भूषणा युवतिराविरासीत्। 'कासि वासु, क यासि' इति सदयमुक्ता

---

निष्काणाम्। सुवर्णानामिति यावत्। तत्रगतानां सभिकसभ्यानाम्। अभ्यवहारविधिं भोजनविधिम्। दुरोदरं द्यूतम्। धूर्जटीति। धूर्जटिर्महादेवः तत्कण्ठे यत्कल्माषं कालिमा तद्वत्कालतमेऽतिश्यामले। नीलनिवसनं नीलवस्त्रं तस्य यदर्धोरुकमवगुण्ठनवस्त्रं तेन परिहित आच्छादितः। कौक्षेयकः करवालः। 'कुलकुक्षिग्रीवाभ्यः–' इति ढकञ्। फणिमुखं सुरङ्गासाधनम्। काकली कर्तरी। "निद्राति जागर्ति वेति बोधनार्थं कलमधुरध्वनिवाद्यविशेषः" इति केचित्। 'काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे' इत्यमरः। संदंशकः भाषायां 'सांडशी' इति ख्यातः। पुरुषशीर्षकं पुरुषशीर्षप्रतिकृति काष्ठमयं शिरः। योगचूर्णं निधिप्रदर्शकमौषधम्। योगवर्तिकोपायाञ्जनम्। 'यस्याः प्रज्वालनात्सर्वत्र सर्वे एव लोचनगोचरा भवन्ति। यत्प्रभया मोहमुपयान्ति जनाः' इति भूषणा। मानसूत्रं प्रमाणरज्जुः। कर्कटको यन्त्रसाधनम्। भाषया 'कर्काटक' इत्युच्यते। रज्जुरारोहणसाधनम्। भ्रमरकरण्डकं दीपनिर्वापणशक्तभभाण्डम्। संधिमित्त्रकासंधिम्। पटभासो जालान्तरम्। तस्य इव सूक्ष्मं छिद्रं तेन आलक्षिता इ०। पटभाक्षेति पाठे पटभाक्षः प्रेक्षणसाधनं इति भूषणा। नीवीं मूलधनम्। नीलेति। नीला ये नीरदा मेघास्तेषां निकरः समूहस्तेन पीवरं पुष्टं यत्तिमिरमन्धकारस्तन्निबिडितायाम्। शतह्रदा विद्युत्। संपातः स्फुरणम्। आलोकं प्रकाशम्। अथेति। असौ विद्युत्प्रकाशः। नगरस्य मोषश्चौर्यं तेन रोषिता रुष्टा नगरदेवतेव। निःसंबाधं निःसंकटम्। उन्मिषद्भूषणा प्रसरद्भूषणा। त्रासगद्गदं

---

१ बाणमान०. २ पटभाक्ष. ३ तमो०; ०निबिडपीडितायाम्.

त्रासगद्गदमगादीत्—' आर्ये, पुर्यस्यामर्यवर्यः कुबेरदत्तनामा वसति। अस्म्यहं तस्य कन्या। मां जातमात्रां धनमित्रनाम्नेऽत्रत्यायैव कस्मैचिदिभ्यकुमारायान्वजानाद्भार्यां मे पिता। स पुनरस्मिन्नत्युदारतया पित्रोरन्ते वित्तैर्निजैः क्रीत्वेवार्थिवर्गाद्दारिद्र्यं दरिद्राति सत्यथोदारक इति च प्रीतलोकाधिरोपितापरश्लाघ्यनामनि वरयत्येव तस्मिन्मां तरुणीभूतामधन इत्यदत्त्वाऽर्थपतिनाम्ने कस्मैचिदितरस्मै यथार्थनाम्ने सार्थवाहाय दित्सति मे पिता। तदमङ्गलमद्य किल प्रभाते भावीति ज्ञात्वा प्रागेव प्रियतमदत्तसंकेता वञ्चितस्वजना निर्गत्य बाल्याभ्यस्तेन वर्त्मना मन्मथाभिसरा तदगारमभिसरामि। तन्मां मुञ्च। गृहाणैतद्भाण्डं' इत्युन्मुच्य मह्यमर्पितवती। दयमानश्चाहमब्रवम्—' एहि साध्वि, त्वां नयेयं त्वत्प्रियावसथम्' इति त्रिचतुराणि पदान्युदचलम्। आपतच्च दीपिकालोकपरिलुप्यमानतिमिरभारं यष्टिकृपाणपाणि नागरिकबलमनल्पम्। दृष्ट्वैव प्रवेपमानां कन्यकामवदम्—' भद्रे मा भैषीः। अस्त्ययमसिद्वितीयो मे बाहुः। अपि तु मृदुरयमुपायस्त्वदपेक्षया चिन्तितः। शयेऽहं भावितविषवेगविक्रियः। त्वयाऽप्यमी वाच्याः—' निशि वयमिमां पुरीं प्रविष्टाः। दष्टश्च ममैष नायको दर्वीकरे-

---

भयविह्वलम्। अगादीत्। ' गद व्यक्तायां वाचि '। अर्यवर्यो वैश्यवर्यः। ' अर्यः स्वामिवैश्ययोः ' इति सूत्रेण निपातः। अत्रत्यायैतद्देशभवाय। ' अव्ययात्त्यप् '। 'अमेहक्वतसित्रेभ्य एव' इति वार्तिकम्। धनमित्रनाम्ने इभ्यकुमाराय धनिककुमाराय। अन्वजानात्प्रतिज्ञातवान्। स इति। स पिता। अस्मिन्धनमित्रे। प्रीतेन लोकेनाधिरोपितं दत्तमुदारक इत्यपरं श्लाघ्यं नाम यस्य तस्मिन्। सार्थवाहाय वणिजे। दित्सति दातुमिच्छति। तदमङ्गलमर्थपतिदानरूपम्। प्रियतमो धनमित्रनामा तेन दत्तः संकेतो यस्यै सेति। मन्मथो मदनोऽभिसरः सहायो यस्याः सा। अगारं गृहम्। अभिसरामि गच्छामि। एतद्भाण्डमेतद्भूषणम्। उन्मुच्योत्तार्य। आवसथं गृहम्। आपतच्चेति। दीपिका 'दिवटी' इति लोकप्रसिद्धा। ' दीपशब्दात्संज्ञायां कन्' इति भूषणा। ' दीपिका हस्तदीपः स्यात्' इति वैजयन्ती। ' नागरिकस्य नगररक्षाकर्तुः भाषया ' कोतवाल' इत्याख्यस्य' इति भूषणा। त्वदपेक्षया। त्वदनुरोधेनेत्यर्थः। वयमिति द्वयोरपि बहुवचनम्। 'अस्मदो द्वयोश्च' इति। दर्वीकरेण सर्पेण। (१३२ पृष्ठे द्रष्टव्यम्।)

---

१ वल्लभ. २ क्रीत्वैव. ३ ०सारा, मन्मथैकाभि०. ४ शयीय.

णामुष्मिन्सभागृहकोणे । यदि वः कश्चिन्मन्त्रवित्कृपालुः स एनमुज्जीवयन्मम प्राणानाहरेदनाथायाः' इति । साऽपि बाला गत्यन्तराभावाद्भयगद्गदस्वरा बाष्पदुर्दिनाक्षी बद्धवेपथुः कथंकथमपि गत्व मदुक्तमन्वतिष्ठत् । अशयिषि चाहं भावितविषविक्रियः । तेषु कश्चिन्नरेन्द्राभिमानी[1] मां निर्वर्ण्य मुद्रातन्त्रमन्त्रध्यानादिभिश्चोपक्रम्याकृतार्थः 'गत एवायं कालदष्टः । तथा हि स्तब्धश्यावमङ्गम्[2], रुद्धा दृष्टिः, शान्त एवोष्मा । शुचाऽलं वासु, श्वोऽग्निसात्करिष्यामः । कोऽतिवर्तते दैवम्' इति सहेतरैः प्रायात् ।

उत्थितश्चाहमुदारकाय तां नत्वाऽब्रवम्—'अहमस्मि कोऽपि तस्करः । त्वद्गतेनैव चेतसा सहायभूतेन त्वामिमामभिसरन्तीमन्तरोपलभ्य कृपया त्वत्समीपमनैषम् । भूषणमिदमस्याः' इत्यंशुपटलपाटितध्वान्तजालं तदप्यार्पितवान् । उदारकस्तु तदादाय सलज्जं च सहर्षं च ससंभ्रमं च मामभाषत—'आर्य, त्वयैवेयमस्यां निशि प्रिया मे दत्ता । वाक्पुनर्ममापहृता । तथा हि न जाने वक्तुम् । त्वत्कर्मैतदद्भुतमिति । इदं न[3]नु ते स्वशीलमद्भुतवत्प्रतिभाति । नैवमन्येनापि कृतपूर्वमिति प्रतिनियतैव वस्तुशक्तिः । न हि त्वय्यन्यदीया लोभादयः ।

सभागृहं बहुतरजनावस्थानगृहं तस्य कोणे । मन्त्रविन्मान्त्रिकः । गत्यन्तराभावादुपायान्तराभावात् । बाष्पदुर्दिनाक्षी बाष्पव्याप्तनेत्रा । बद्धवेपथुः प्राप्तकम्पा । अशयिषि शयितवान् । भाविता प्रकाशिता विषविक्रिया विषविकारो येनेति । नरेन्द्रो विषवैद्यः । 'नरेन्द्रो वार्तिके राज्ञि विषवैद्येऽपि कथ्यते' इति विश्वः । निर्वर्ण्य निरीक्ष्य । उपक्रम्य चिकित्सित्वा । 'उपक्रमश्चिकित्सा स्यात्' इति वैजयन्ती । **तथा हीति** । स्तब्धं निश्चेष्टं श्यावं श्यामलम् । "श्यावर्णः कपिशवर्णः । 'श्यावास्यता विषकृता' इति माधवाचार्यः" इति भूषणा । अग्निसादग्न्यधीनम् । उदारकाय धनमित्रनाम्ने । तस्करश्चौरः । अन्तरा मार्गमध्ये । अंशुपटलेन किरणजालेन पाटितं नाशितं ध्वान्तजालमन्धकारसमूहो येनेति तथा । प्रिया दत्ता वागपहृतेत्यत्र परिवृत्तिरलंकारः । 'परिवृत्तिर्विनिमयो न्यूनाभ्यधिकयोर्मिथः' इति लक्षणात् । तथा हीत्यादिना काव्यलिङ्गमपि । **न जाने इति** । "यदिदमद्भुतं त्वत्कर्म वक्तुं न जाने न शक्नोमि । स्वप्रतिभाया अभावात् । एवं च वाणी हृतैवेति स्पष्टम्" इति भूषणा । **न ते स्वशीलमिति** । 'इदं द्रव्यस्य प्रियायाश्च समर्पणं ते चौरत्वेन व्यवहृतस्य स्वशीलं स्वभावो न भवतीत्यतोऽद्भुतवत्प्रतिभाति' इति भूषणा ।

1 नरेन्द्रमानी. 2 श्यावर्णमङ्गम्. 3 नु.

त्वयाऽद्य साधुतोन्मीलितेति तत्प्रायस्त्वत्पूर्वावदानेभ्यो न रोचते। दृष्टमिदानीमौदार्यस्य स्वरूपमिति त्वदाशयमननुमान्य न युक्तो निश्चयः। त्वयाऽमुना सुकृतेन क्रीतोऽयं दासजन इत्यसारमतिगरीयसा क्रीणा- 'सीति स ते प्रज्ञाधिक्षेपः। प्रियादानस्य प्रतिदानमिदं शरीरमिति तद- लाभे निधनोन्मुखमिदमपि त्वयैव दत्तम्। अथ वैतावदत्र प्राप्तरूपम्। अद्यप्रभृति भर्तव्योऽयं दासजनः' इति मम पादयोरपतत्। उत्थाप्य चैनमुरसोपश्लिष्याभाषिषि—'भद्र, काऽद्य ते प्रतिपत्तिः' इति। सोऽभ्यधत्त—'न शक्नोमि चैनामत्र पित्रोरनभ्यनुज्ञयोपयम्य जीवितुम्। अतोऽस्यामेव यामिन्यां देशमिमं जिहासामि। को वाऽहम्, यथा त्वमा- ज्ञापयसि' इति। अथ मयोक्तम्—'अस्त्येतत्। स्वदेशो देशान्तरमिति नेयं गणना विदग्धस्य पुरुषस्य। किं तु बालेयमनल्पसौकुमार्या, कष्टाः प्रत्यवायभूयिष्ठाश्च कान्तारपथाः। शैथिल्यमिव किंचित्प्रज्ञासत्त्वयोरन- र्थेनेदृशेन देशत्यागेन संभाव्यते। तत्सहानया सुखमिहैव वस्तव्यम्। एहि। नयावैनां स्वमेवावासम्' इति। अविचारानुमतेन तेन सद्य एवैनां तद्गृहमुपनीय तयैवापसर्पभूतया तत्र मृद्भाण्डावशेषमचोरयाव। ततो निष्पत्य क्वचिन्मुषितकं निधाय समुच्चलन्तौ नागरिकसंपाते मार्गपार्श्व-

प्रतिनियता विषयविशेषनिष्ठा। तत्तद्व्यक्तिविश्रान्तेत्यर्थः। **तत्प्राय इति**। इदं द्रव्यस्य प्रियायाश्च समर्पणं पूर्वावदानेभ्यः पूर्वजातकर्मभ्यो न रोचते। 'रुच्यर्थानां—' इति चतुर्थी। 'कर्मणां न शोभते इत्यत्र तात्पर्यम्' इति भूषणा। अवदानं महत्कर्म। त्वदाशयं त्वदभिप्रायम्। अननुमान्यानुमतिमकारयित्वा। अतिगरीयसा बहुतरेण। क्रीणासि गृह्णासि। प्रज्ञाधिक्षेपो बुद्धिनिन्दा। निधनं मरणम्। इदं मच्छरीरम्। प्राप्तरूपं प्रशस्तं प्राप्तम्। प्रशंसायां रूपप्। उपश्लिष्यालिङ्ग्य। प्रतिपत्तिः कर्तव्यम्। जिहासामि त्यक्तुमिच्छामि। **अथेति**। विदग्धस्य चतुरस्य। "बालेयमित्यादि विषमालंकारः। 'विषमं वर्ण्यते यत्र घटनाऽननुरूपयोः' इति लक्षणात्" इति भूषणा। अनल्पसौकुमार्या अत्यन्तसुकुमारेत्यर्थः। प्रत्यवायो बाधकम्। कान्तारपथा वनमार्गाः। 'ऋक्पूरब्धूः—' इत्यदन्तता। शैथिल्यं शिथि- लता। 'इव एवार्थे' इति भूषणा। सत्त्वं बलम्। आवासं गृहम्। अपसर्पभूतया चरभूतया। 'अपसर्पश्चरः स्पशः' इत्यमरः। तत्र नगरे। **तत इति**। क्वचि- त्प्रदेशे। मुषितकं चोरितं वस्तुजातम्। नागरिकसंपाते नगरस्य लोकसंमर्दे। 'नगर-

१ अविचार्यानुमते. २ मुषितम्. ३ नागरिकपुरुष०.

शायिनं क्वचिन्मत्तवारणमुपरिपुरुषमाकृष्याध्यारोहाव । ग्रैवेयप्रोतपादयुगलेन च मयोत्थाप्यमान एव पतिताधोरणपृथुलोरःस्थलपरिणतः पुरीतल्लतापरीतदन्तकाण्डः स रक्षिकबलमक्षिणोत् । अध्वंसयाव चामुनैवार्थपतिभवनम् । अपवाह्य च क्वचन जीर्णोद्याने शाखाग्राहिकयाऽवातराव । स्वगृहगतौ च स्नातौ शयनमध्यशिश्रियाव ।

तावदेवोदगादुदधेरुदयाचलेन्द्रपद्मरागशृङ्गकल्पं कल्पद्रुमहेमपल्लवापीडपाटलं पतङ्गमण्डलम् । उत्थाय च धौतवक्त्रौ प्रगेतनानि मङ्गलान्यनुष्ठायास्मत्कर्मतुमुलं पुरमनुविचरन्तावशृणुव वरवधूगृहेषु कोलाहलम् । अथार्थैरर्थपतिः कुबेरदत्तमाश्वास्य कुलपालिकाविवाहं मासावधिकमकल्पयत् । उपह्वरे पुनरित्याशिक्षयं धनमित्रम्—'उपतिष्ठ सखे एकान्त एव चर्मरत्नभस्त्रिकामिमां पुरस्कृत्याङ्गराजम् । आचक्ष्व च—'जानात्येव देवो नैककोटिसारस्य वसुमित्रस्य मां धनमित्रं नामैकपुत्रम् । सोऽहं मूलहरत्वमेत्यार्थिवर्गादस्म्यवज्ञातः । मदर्थमेव संवर्धितायां कुलपालिकायां मद्दारिद्र्यदोषात्पुनः कुबेरदत्तेन दुहितर्यर्थपतये दित्सितायामुद्वेगा-

रक्षकपुरुषसंपाते' इति भू० । उपरिपुरुषमाधोरणम् । "उपरिपुरुषं पुरुषोन्मानादधिकम् । आकृष्य गजपृष्ठस्थां रज्जुम् । मत्तगजे सर्वकालं रज्ज्वा नियन्त्रितत्वात्" इति तु भूषणा । ग्रैवेयं कण्ठरज्जुः । 'कुलकुक्षि—' इति ढक्क्ल् । भाषया 'किलावा' इति प्रसिद्धम् । प्रोतं प्रवेशितम् । पतितो य आधोरणो हस्तिपकस्तस्य पृथुलं विशालं यदुरःस्थलं तत्र परिणतो दन्तेन तिर्यक्प्रहारी । 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः । पुरीतल्लताऽन्त्रवल्ली । 'अन्त्रं पुरीतत्' इत्यमरः । ताभिः परीतं व्याप्तं दन्तकाण्डं यस्येति तथा । अक्षिणोत्क्षपितवान् । शाखाग्राहिकया शाखां गृहीत्वेत्यर्थः । अध्यशिश्रियावाधिष्ठितवन्तौ । **तावदिति** । पद्मरागो रक्तमणिस्तस्य शृङ्गं शिखरं तत्कल्पं तदीषन्न्यूनम् । कल्पद्रुमस्य हेमपल्लवाः सुवर्णपल्लवास्तेषामापीडः समूहः तद्वत् पाटलमनेकवर्णम् । 'श्वेतरक्तस्तु पाटलः' इत्यमरः । पतङ्गमण्डलं सूर्यबिम्बम् । प्रगेतनानि प्रातःकालोचितानि । तुमुलं व्याकुलरवम् । **अथेति** । अर्थपतिर्वरः । कुबेरदत्तं कन्यापितरम् । मासावधिकम् । मासोत्तरमित्यर्थः । उपह्वरे । 'रहोऽन्तिकमुपह्वरे' इत्यमरः । चर्मरत्नमुत्तमचर्म तस्य भस्त्रिका प्रसेविका 'भाता' इति भाषया प्रसिद्धा । नैककोटिसारस्य । अनेककोटिद्रव्यस्येत्यर्थः । वसुमित्रस्यैकपुत्रम् । 'मूलहरत्वं मूलद्रव्यनाशकत्वं काष्ठवाहिकत्वं वा' इति भूषणा । कुलपालिकायां कन्यायाम् । 'कन्या तु कुलपालिका' इत्यमरः । दित्सितायां दातुमिष्टायाम् । उद्वेगाच्छोकात् । 'उद्वेगौ शोकसंभ्रमौ' इति

१ उपरिपुच्छम्. २ पतिताधोरण. ३ तावनोद०. ४ चर्मभस्त्रिकाम्.

दुज्झितुमसूनुपनगरभवं जरद्वनमवगाह्य कण्ठन्यस्तशाखिकः केनापि जटाधरेण निवार्यैवमुक्तः—'किं ते साहसस्य मूलम्' इति। मयोक्तम्—'अवज्ञासोदर्यं दारिद्र्यम्' इति। स पुनरेवं कृपालुरन्वग्रहीत्—'तात, मूढोऽसि। नान्यत्पापिष्ठतममात्मत्यागात्। आत्मानमात्मनाऽनवसाद्यैवोद्धरन्ति सन्तः। सन्त्युपाया धनार्जनस्य बहवः, नैकोऽपि च्छिन्नकण्ठप्रतिसंधानपूर्वस्य प्राणलाभस्य। किमनेन। सोऽस्म्यहं मन्त्रसिद्धः। साधितेयं लक्षग्राहिणी चर्मरत्नभस्त्रिका। चिरमहमस्याः प्रसादात्कामरूपेषु कामप्रदः प्रजानामवात्सम्। मत्सरिण्यां जरसि भूमिस्वर्गमत्रोद्देशे प्रवेक्ष्यन्नागतः। तामिमां प्रतिगृहाण। मदन्यत्र चेयं वणिग्भ्यो वारमुख्याभ्यो वा दुग्धे इति हि तद्गता प्रतीतिः। किं तु यत्सकाशादन्यायापहृतं तत्तस्मै प्रत्यर्पणीयम्। न्यायार्जितं तु देवब्राह्मणेभ्यस्त्याज्यम्। अथेयं देवतेव शुचौ देशे निवेश्याच्यर्मानां प्रातःप्रातः सुवर्णपूर्णैव दृश्यते। स एष कल्पः' इति बद्धाञ्जलये मह्यमेनां दत्त्वा किमपि ग्रावच्छिद्रं प्राविशत्। इयं च रत्नभूता चर्मभस्त्रिका देवायानिवेद्य नोपजीव्येत्यानीता। परं तु देवः प्रमाणम्' इति। राजा च नियतमेव वक्ष्यति—

---

वैजयन्ती। जरद्वनं प्रचाररहितं वनम्। साहसस्योद्योगस्य। अवज्ञा हेलना तस्याः सोदर्यं बन्धुरिव स्थितमित्यर्थः। **स इति**। स जटाधरः। तात अर्भकेत्यर्थः। 'तातस्तु जनकेऽर्भके' इति कोशः। अनवसाद्याविनाश्य। एकोऽप्युपायः। छिन्नो यः कण्ठस्तस्य यत्प्रतिसंधानं पुनःसंबन्धस्तत्पूर्वस्य प्राणलाभस्य प्राणप्राप्तेः। नेति नास्तीत्यर्थः। किमनेन प्राणत्यागेन। लक्षग्राहिणी लक्षं ग्राहयतीति तथा। कामरूपेषु एतदाख्यदेशेषु। अवात्सं वसतिमकरवम्। मत्सरिण्यां मत्सरकारिण्याम्। जरसि वार्द्धके। भूमिस्वर्गं भूम्यां स्वर्ग इव भूमिस्वर्गस्तम्। अत्रोद्देशेऽस्मिन्प्रदेशे। इमां चर्मरत्नभस्त्रिकाम्। मदन्यत्र मां विहायान्यत्रेत्यर्थः। दुग्धे 'दुह प्रपूरणे'। पूरयतीत्यर्थः। इत्येवम्। तद्गता चर्मभस्त्रिकागता। प्रतीतिः ख्यातिः। **अथेयमिति**। अर्च्यमाना पूज्यमाना। प्रातःप्रातरिति वीप्सायां द्विर्वचनम्। प्रतिप्रातःकाले इत्यर्थः। कल्पः प्रकारः। ग्रावच्छिद्रं पर्वतच्छिद्रम्। 'अद्रिगोत्रगिरिग्रावाचलशैलशिलोच्चयाः' इत्यमरः। अनिवेद्याकथयित्वा। नोपजीव्योपजीवितुमशक्या। प्रमाणं निर्णयकर्ता। अभ्युपेष्य-

१ वारयोषिन्मुख्याभ्यः. २ वित्तं तत्.

' भद्र, प्रीतोऽस्मि । गच्छ । यथेष्टमिमामुपभुङ्क्ष्व ' इति । भूयश्च ब्रूहि— ' यथा न कश्चिदेनां मुष्णाति तथाऽनुगृह्यताम् ' इति । तदप्यवश्यमसावभ्युपेष्यति । ततः स्वगृहमेत्य यथोक्तमर्थत्यागं कृत्वा दिने दिने वरिवस्यमानां स्तेयलब्धैरर्थैर्नक्तमापूर्य प्राह्णे लोकाय दर्शयिष्यसि । ततः कुबेरदत्तस्तृणाय मत्वाऽर्थपतिमर्थलुब्धः कन्यकया स्वयमेव त्वामुपस्थास्यति । अथ कुपितोऽर्थपतिर्न्यवहर्तुमर्थगर्वादभियोक्ष्यते । तं च भूयश्चित्रैरुपायैः कौपीनावशेषं करिष्यावः । स्वकं चौर्यमनेनैवाभ्युपायेन सुप्रच्छन्नं भविष्यति ' इति । हृष्टश्च धनमित्रो यथोक्तमन्वतिष्ठत् । तदहरेव मन्नियोगाद्विमर्दकोऽर्थपतिसेवाभियुक्तस्तस्योदारिके वैरमभ्यवर्धयत् । अर्थलुब्धश्च कुबेरदत्तो निवृत्यार्थपतेर्धनमित्रायैव तनयां सानुनयं प्रादित्सत । प्रत्यबध्नाच्चार्थपतिः ।

एष्वेव दिवसेषु काममञ्जर्याः स्वसा यवीयसी रागमञ्जरी नाम पञ्चवीरगोष्ठे संगीतकमनुष्ठास्यतीति सान्द्रादरः समागमन्नागरजनः । स चाहं सह सख्या धनमित्रेण तत्र संन्यविक्षि । प्रवृत्तनृत्यायां[2] च तस्यां द्वितीयं रङ्गपीठं ममाभून्मनः । तद्दृष्टिविभ्रमोत्पलवनसं[3]चापाश्रयश्च पञ्च-

त्यङ्गीकरिष्यति । **तत इति** । अर्थत्यागं द्रव्यदानम् । वरिवस्यमानां सेव्यमानाम् । ' वरिवस्या तु शुश्रूषा ' इत्यमरः । स्तेयलब्धैश्चौर्यप्राप्तैः । कुबेरदत्तः कन्यापिता । तृणाय मत्वा तृणप्रायं मत्वा ज्ञात्वा । ' मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ' इति चतुर्थी । उपस्थास्यत्याराधयिष्यति । **अथेति** । अर्थगर्वाद्द्रव्योन्मादात् । अभियोक्ष्यते द्वेषं करिष्यति । ' अभियोगः स्मृतो द्वेषः ' इति । तमर्थपतिम् । चित्रैरनेकैः । **तदिति** । तदहरेव तस्मिन्नेव दिवसे । विमर्दक एतन्नाम्ना ख्यातः । अर्थपतिसेवायामभियुक्तः संनद्धः । तस्यार्थपतेः । उदारके धनमित्रे । वैरं द्वेषम् । अभ्यवर्धयदभिवर्धितवान् । प्रादित्सत दत्तवान् । प्रत्यबध्नात् प्रतिबन्धं चकारेत्यर्थः । **एष्विति** । पञ्चवीरगोष्ठे जानपदे सदसि । ' तत्पञ्चवीरगोष्ठं तु यत्तु जानपदं सदः ' इति कोशसारः । संगीतकं गीतादि । ' गीतं वाद्यं च नृत्यं च त्रिभिः संगीतमुच्यते ' इति संगीतसर्वस्वे । अहमपहारवर्मा । तत्र सभायाम् । रङ्गपीठं नृत्यस्थानम् । तस्या दृष्टिस्तद्दृष्टिस्तस्या विभ्रमा एव उत्पलवनं तद्दृष्टिविभ्रमोत्पलवनं तदेव सच्चापं समीचीनं धनुः तस्याश्रयो यस्य सः । अत्र सत्रापाश्रयेति

---

१ संगीतम्. २ नृत्तायाम्. ३ सत्रापा०.

शरो भावरसाना सामग्र्यात्समुदितबल इव मामतिमात्रमव्यथयत् । अथासौ नगरदेवतेव नगरमोषरोषिता लीलाकटाक्षमालाशृङ्खलाभिर्नीलोत्पलपलाशश्यामलाभिर्मामबध्नात् । नृत्योत्थिता च सा सिद्धिलाभशोभिनी—किं विलासात्, किमभिलाषात्, किमकस्मादेव वा, न जाने—असकृन्मां सखीभिरप्यनुपलक्षितेनापाङ्गप्रेक्षितेन सविभ्रमारेचितभ्रूलतमभिवीक्ष्य, सापदेशं च किंचिदाविष्कृतदशनचन्द्रिकं स्मित्वा, लोकलोचनमानसानुयाता प्रातिष्ठत ।

सोऽहं स्वगृहमेत्य दुर्निवारयोत्कण्ठया दूरीकृताहारस्पृहः शिरःशूलस्पर्शनमपदिश्य विविक्ते तल्पे मुक्तैरवयवैरशयिषि । अतिनिष्णातश्च मदनतन्त्रे मामभ्युपेत्य धनमित्रो रहस्यकथयत्—'सखे, सैव धन्या गणिकादारिका, यामेवं भवन्मनोऽभिनिविशते । तस्याश्च मया सुलक्षिता भाववृत्तिः । तामप्यचिरादयुग्मशरः शरशयने शाययिष्यति । स्थानाभिनिवेशिनोश्च वामयत्नसाध्यः समागमः । किं तु

पाठः प्रामादिको दुर्व्याख्यतया हेयश्च । भावरसानाम् । भावा विभावादयः । रसाः शृङ्गारादयः । 'बाह्यार्थालम्बनो यस्तु विकारो मानसो भवेत् । स भावः कथ्यते सद्भिस्तस्योत्कर्षो रसः स्मृतः ॥' इति हलायुधः । सामग्र्यात् संपूर्णतया । समुदितबल इव मिलितबल इव । अतिमात्रं निर्भरम् । 'अतिमात्रोद्गाढनिर्भरम्' इत्यमरः । अथेति । असौ रागमञ्जरी । नगरमोषो नगरचौर्यं तेन रोषितेव रुष्टेव । लीलाकटाक्षमाला एव शृङ्खलास्ताभिः । नीलोत्पलपलाशानि नीलोत्पलपत्राणि । 'पत्रं पलाशं छदनं दलं पर्णं छदः पुमान्' इत्यमरः । तद्वच्छ्यामलाः कृष्णवर्णाः । 'कालश्यामलमेचकाः' इत्यमरः । सिद्धिलाभशोभिनी समृद्धिफलप्राप्तिशोभिनी । अनुपलक्षितेनाज्ञातेन । आरेचितभ्रूलतं वक्रीकृतभ्रूलतमिति क्रियाविशेषणम् । सापदेशं सव्याजम् । लोकानां लोचनानि नेत्राणि मानसानि चित्तानि तैरनुयातानुगता । सोऽहमिति । दूरीकृता त्यक्ता आहारस्पृहा भक्षणेच्छा येनेति तथा । शिरःशूलस्पर्शनं शिरोवेदनाप्राप्तिम् । विविक्ते विजने । अतिनिष्णातोऽतिनिपुणः । 'निष्णातो निपुणोऽभिज्ञः' इति वैजयन्ती । 'निनदीभ्यां स्नातेः कौशले' इति षत्वम् । मदनतन्त्रे मदनशास्त्रे । भाववृत्तिश्चित्तवृत्तिः । अयुग्मशरो विषमबाणः मदन इत्यर्थः । शाययिष्यति स्वापयिष्यति । णिजन्तम् । स्थानाभिनिवेशिनोर्युक्ताभिनिवेशिनोः । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । गणिकानां वेश्यानां यः स्वधर्मः शुल्कादिग्रहणरूपस्तेन

१ पलाशदाम. २ सविभ्रममारे०.

सा किल वारकन्यका गणिकास्वधर्मप्रतीपगामिना भद्रोदारेणाशयेन समगिरत—'गुणशुल्काऽहम्, न धनशुल्का । न च पाणिग्रहणादृते-ऽन्यभोग्यं यौवनम्' इति । तच्च मुहुः प्रतिषिध्याकृतार्था तद्भगिनी काममञ्जरी माता च माधवसना राजानमश्रुकण्ठ्यौ व्याजिज्ञपताम्—'देव युष्मद्दासी रागमञ्जरी रूपानुरूपशीलशिल्पकौशला पूरयिष्यति मनोरथानित्यासीदस्माकमतिमहत्याशा । साऽद्य मूलच्छिन्ना । यदियमति-क्रम्य स्वकुलधर्ममर्थनिरपेक्षा गुणेभ्य एव स्वं यौवनं विचिक्रीषते । कुलस्त्रीवृत्तमेवाच्युतमनुतिष्ठासति । सा चेदियं देवपादाज्ञयाऽपि ताव-त्प्रकृतिमापद्येत तदा पेशलं भवेत्' इति । राज्ञा च तदनुरोधात्तथाऽनु-शिष्टा सत्यप्यनाश्रवैव सा यदाऽऽसीत्तदाऽस्याः स्वसा माता च रुदित-निर्बन्धेन राज्ञे समगिरेताम्—'यदि कश्चिद्भुजङ्गोऽस्मदिच्छया विनैनां बालां विप्रलभ्य नाशयिष्यति स तस्करवद्वध्यः' इति । तदेवं स्थिते धनादृते न तत्स्वजनोऽनुपन्यते । न तु धनदायासावभ्युपगच्छतीति विचिन्त्योऽत्राभ्युपायः' इति । अथ मयोक्तम्—'किमत्र चिन्त्यम् । गुणैस्तामावर्ज्य गूढं धनैस्तत्स्वजनं तोषयावः' इति ।

ततश्च कांचित्काममञ्जर्याः प्रधानदूतीं धर्मरक्षितां नाम शाक्य-भिक्षुकीं चीवरपिण्डदानादिनोपसंगृह्य तन्मुखेन तया बन्धक्या पण-बन्धमकरवम्—'अजिनरत्नमुदारकान्मुषित्वा मया तुभ्यं देयं, यदि

प्रतीपगामिना विरुद्धवर्तिना । भद्रोदारेण कल्याणोदारेण । आशयेनाभिप्रायेण । समगिरत अवददित्यर्थः । गुणशुल्का गुणमूल्या । ऋते इत्यव्ययं विनेत्यर्थे । अकृतार्थाऽसिद्धार्था । व्याजिज्ञपतां विज्ञापयामासतुः । स्वकुलधर्मं धनग्रहणादिम् । विचिक्रीषते विक्रेतुमिच्छति । वृत्तमाचरणम् । अच्युतं बद्धमूलम् । अनुतिष्ठासत्यनुष्ठातुमिच्छति । प्रकृतिः स्वभावः । पेशलं सुकुमारम् । 'कुशलम्' इति भूषणा । अनाश्रवा । 'वचनेस्थित आश्रवः' इत्यमरः । तथा न भवतीत्यर्थः । यदीति । भुजङ्गो विटः । "विलासी । 'भुजङ्गोऽहिविलासिनोः' इति विश्वः ।" इति भूषणा । विप्रलभ्य प्रतार्य । तत्स्वजनस्तन्मात्रादेः । धनदाय वित्तदायिने । तां कन्यकां गुणैरावर्ज्य वशीकृत्य । तत्स्वजनं तन्मात्रादिकम् । ततश्चेति । प्रधानदूतीं मुख्यदूतीम् । शाक्यभिक्षुकीं बौद्ध-सिद्धान्ततपस्विनीम् । 'शाक्यस्तु बौद्धेष्वन्यतमः' इति । चीवरपिण्डदाना-दिना वस्त्रखण्डान्नदानादिना । उपसंगृह्य वशीकृत्य । तया बन्धक्या कुलटया ।

१ पत्रे सति सा. २ समगिरताम् ३ अर्थैः. ४ तोषयिष्यामि.

प्रतिदानं रागमञ्जरी ' इति । सोऽहं संप्रतिपन्नायां च तस्यां तथा तमर्थं संपाद्य मद्गुणोन्मादितायां रागमञ्जर्याः करकिसलयमग्रहीषम् । यस्यां च निशि चर्मरत्नस्तेयवादस्तस्याः प्रारम्भे कार्यान्तरापदेशेनाहूतेषु शृण्वत्स्वेव नागरमुख्येषु मत्प्रणिधिर्विमर्दकोऽर्थपतिगृह्यो नाम भूत्वा धनमित्रमुल्लङ्घ्य वह्वतर्जयत् । उक्तं च धनमित्रेण—' भद्र करस्तवार्थो यत्परस्य हेतोर्मामाक्रोशसि । न स्मरामि स्वल्पमपि तवापकारं मत्कृतम् ' इति । स भूयोऽपि तर्जयन्निवाब्रवीत्—' स एष धनगर्वो नाम यत्परस्य भार्यां शुल्कक्रीतां पुनस्तत्पितरौ द्रव्येण विलोभ्य स्वीचिकीर्षसि । ब्रवीषि च—' कस्तवापकारो मत्कृतः ' इति । ननु प्रतीतमेवैतत् ' सार्थवाहस्यार्थपतेर्विमर्दको बहिश्चराः प्राणाः ' इति । सोऽहं तत्कृते प्राणानपि परित्यजामि । ब्रह्महत्यामपि न परिहरामि । ममैकरात्रजागरप्रतीकारस्तवैष चर्मरत्नाहंकारदाहज्वरः ' इति । तथा ब्रुवाणश्च पौरमुख्यैः सामर्षं निषिध्यापवाहितोऽभूत् । इयं च वार्ता कृत्रिमार्तिना धनमित्रेण चर्मरत्ननाशमादावेवोपक्षिप्य पार्थिवाय निवेदिता । स चार्थपतिमाहूयोपह्वरे पृष्टवान्—' अङ्ग किमस्ति कश्चिद्विमर्दको नामात्रभवतः ' इति । तेन च मूढात्मना ' अस्ति देव परं मित्रम् । कश्च तेनार्थः ' इति कथिते राज्ञोक्तम्—' अपि शक्योऽपि तमाह्वातुम् ' इति । ' बाढमस्मि शक्तः ' इति निर्गत्य स्वगृहे वेशवाटे द्यूतसभायामापणे च निपुणमन्विष्यन्नोपलब्धवान् । कथं वो-

---

प्रतिदानं प्रत्याम्नायप्रदानम् । संप्रतिपन्नायां सम्यगङ्गीकृतायाम् । तमर्थं चर्मभस्त्रिकादानरूपम् । मद्गुणैरुन्मादितायाः । कराग्रेसलयं पाणिपल्लवम् । **यस्यां चेति** । कार्यान्तरापदेशेन कार्यान्तरव्याजेन । मत्प्रणिधिर्गूढपुरुषो विमर्दको नाम । अर्थपतिगृह्यो तत्पक्षस्थो भूत्वा । धनमित्रमुदारकनामानम् । उल्लङ्घ्यातिक्रम्य । परस्य हेतोः । परार्थमित्यर्थः । ' षष्ठी हेतुप्रयोगे ' इति षष्ठी । आक्रोशसि निन्दसि । प्रतीतं प्रसिद्धम् । न परिहरामि । अङ्गीकरोमीति भावः । **एकरात्रेति** । एकरात्रं जागरः जागरणमेव प्रतीकारो यस्य । एकेनैव जागरेण चर्मरत्नापहाराद्दाहज्वरं दूरीकरोमीति भावः । अपवाहितो निराकृतः । " उपक्षिप्य प्रस्तावं कृत्वा । ' प्रस्तावः स्यादुपक्षेपे ' इति वैजयन्ती " इ० भू० । कृत्रिमा आर्तिः पीडा यस्येति तेन । चर्मरत्ननाशं चर्मरत्नचोरणरूपम् । उपक्षिप्य प्रस्ताव्य । स चेति राजा । उपह्वरे एकान्ते । अङ्गेत्यामन्त्रणेऽव्ययम् । बाढमित्यङ्गीकारे । वेशवाटे वेश्यागृहमार्गे ।

---

१ तमेति प्रतिप०. २ स्वां. ३ आकृष्य ४ चोपलभेत.

पलभ्येत स वराकः । स खलु विमर्दको मद्ग्राहितत्वदभिज्ञानचिह्नो मन्नियोगात्त्वदन्वेषणायोज्जयिनीं तदहरेव प्रातिष्ठत । अर्थपतिस्तु तमदृष्ट्वा तत्कृतमपराधमात्मसंबद्धं मत्वा मोहाद्भयाद्वा प्रत्याख्याय पुनर्धनमित्रेण विभाविते कुपितेन राज्ञा निगृह्य निगडबन्धनमनीयत ।

तेष्वेव दिवसेषु विधिनां कल्पोक्तेन चर्मरत्नं दोग्धुकामा काममञ्जरी पूर्वदुग्धं क्षपणीभूतं विरूपकं रहस्युपसृत्य ततोऽपहृतं सर्वमर्थजातं तस्मै प्रत्यर्प्य सप्रश्रयं च बह्वनुनीय प्रत्यागमत् । सोऽपि कथंचिन्निर्ग्रन्थिकग्रहान्मोचितात्मा मदनुशिष्टो हृष्टतमः स्वधर्ममेव प्रत्यपद्यत । काममञ्जर्यपि कतिपयैरेवाहोभिरश्मन्तकशेषमजिनरत्नदोहाशया स्वमभ्युदयमकरोत् । अथ मत्प्रयुक्तो धनमित्रः पार्थिवं मिथो व्यज्ञापयत्—'देव येयं गणिका काममञ्जरी लोभोत्कर्षाल्लोभमञ्जरीति लोकापक्रोशपात्रमासीत्साऽद्य मुशलोलूखलान्यपि निरपेक्षं त्यजति । तन्मन्ये मच्चर्मरत्नलाभहेतुः । तस्य खलु कल्पस्तादृशः । वणिग्भ्यो वाग्मुख्याभ्यश्च दुग्धे नान्येभ्य इति हि तद्गता प्रतीतिः । अतोऽमुष्यामस्ति मे शङ्का' इति । सा सद्य एव राज्ञा सह जनन्या समाहूयत । व्यथितवर्णेनेव मयोपह्वरे कथितम्—

स वराकस्तुच्छोऽर्थपतिः । मद्ग्राहितेति । मयाऽपहारवर्मणा ग्राहितमङ्गीकारितं त्वदभिज्ञानचिह्नं तव राजवाहनस्याभिज्ञानचिह्नं यस्येति स तथा । मन्नियोगान्ममाज्ञावशात् । प्रातिष्ठत प्रस्थितवान् । अर्थपतिस्तं विमर्दकम् । तत्कृतं विमर्दककृतम् । आत्मसंबद्धम् स्वीयमेव । प्रत्याख्याय विपरीतमुक्त्वा । विभाविते आविष्कृते । प्रकटीकृत इत्यर्थः । सप्रश्रयं सविनयम् । 'सप्रत्ययम्' इति पाठे सशपथम् । सोऽपि क्षपणकवेषधारी विरूपकनामा । निर्ग्रन्थिकग्रहात्क्षपणकसिद्धान्तात् । 'निर्ग्रन्थोऽर्हः क्षपणकः श्रमणो जिन इत्यपि ।' इति वैजयन्ती । मदनुशिष्टो मया बोधितः । अश्मन्तकं चुल्लिः । 'अश्मन्तमुद्धानमधिश्रयणी चुल्लिरन्तिका' इत्यमरः । दोहः स्रुवर्णेन पूरणम् । मत्प्रयुक्तः मदुपदिष्टः । लोकोपक्रोशपात्रम् । लोकनिन्दापात्रमित्यर्थः । तस्य मच्चर्मरत्नस्य । कल्पः प्रकारः । प्रतीतिः ख्यातिः । उपह्वरे एकान्ते । व्यथितवर्णेनेवेतीवकारेण कृत्रिमव्यथात्वं सूचितम् ।

१ °ज्ञानचिह्नो. २ तु अमन्. ३ विभावितेन. ४ विधिकल्पेन. ५ निर्ग्रन्थग्र°; निर्ग्रन्थिकाग्रहात्. ६ लाभहेतम्तस्याः; °लाभं हेतुम्; °लाभहेतु.

'नूनमार्ये सर्वस्वत्यागादतिप्रकाशादाशङ्कनीयचर्मरत्नलाभा तदनुयोगायाङ्गराजेन सभाहूयसे । भूयोभूयश्च निर्बद्धया त्वया नियतमस्मि तदागतित्वेनाहमपदेश्यः । ततश्च मे भावी चित्रवधः । मृते च मयि न जीविष्यत्येव ते भगिनी । त्वं च निःस्वीभूता । चर्मरत्नं च धनमित्रमेव प्रतिभजिष्यति । तदियमापत्समन्ततोऽनर्थानुबन्धिनी । तत्किमत्र प्रतिविधेयम्' इति । तया तज्जनन्या चाश्रूणि ... याोक्तम्—'अस्त्येवैतदस्मद्बालिश्यान्निर्भिन्नप्रायं रहस्यम् । राज्ञश्च निर्बन्धाद्द्वित्रिश्चतुर्निह्नुत्यापि नियतमागतिरपदेश्यैव चोरितस्य त्वयि । त्वयि व्यपदिष्टे सर्वमस्मत्कुटुम्बमवसीदेत् । अर्थपतौ च तदपयशो रूढम् । अङ्गपुरप्रसिद्धं च तस्य कीनाशस्यास्माभिः संगतम् । अमुनैव तदस्मभ्यं दत्तमित्यपदिश्यैवमात्मा गोपायितुम्' इति मामभ्युपगमय्य राजकुलमगमताम् । राज्ञाऽनुयुक्ते च 'नैष न्यायो वेशकुलस्य यद्दातुरपदेशः । न ह्यर्थैर्न्यायार्जितैरेव पुरुषा वेशमुपतिष्ठन्ति' इत्यसकृदतिप्रणुद्य कर्णनासाच्छेदोपक्षेपभीषिताभ्यां दग्धबन्धकीभ्यां स एव तपस्वी तस्करत्वेनार्थपतिरग्राह्यत । कुपितेन च राज्ञा तस्य प्राणे-

**नूनमिति** । अतिप्रकाशादतिप्रसिद्धात् । आशङ्कनीयश्चर्मरत्नलाभो यस्याः सा । तदनुयोगाय तत्प्रश्नाय । निर्बद्धया आग्रहपृष्टया । तदागतित्वेन चर्मरत्नप्राप्तिहेतुत्वेन । अपदेश्यः कथनीयः । **तत इति** । निःस्वीभूता दरिद्रीभूता । अनर्थानुबन्धिन्यनर्थकारिणी । अत्रास्मिन्नर्थे । प्रतिविधेयं प्रतिकर्तव्यम् । बालिशस्य भावो बालिश्यं मूर्खत्वम् । 'द्वित्रिश्चतुः इति सुजन्तः पाठः । द्वित्रिश्चतुर्वारमित्यर्थः ।' इति भूषणा । निह्नुत्य निगूह्य । आगतिरागमनहेतुरत्नम् । अपदेश्या कथनीयेत्यर्थः । चोरितस्य पदार्थस्य । त्वयि भवद्विषये । अवसीदेन्नश्येत् । तदपयशस्तच्चर्मरत्नचौर्यापयशः । कीनाशस्य क्षुद्रस्य धूर्तस्य वा । अमुनैवार्थपतिनैव । अभ्युपगमय्य बोधयित्वा । अनुयुक्ते । पृष्टे सतीत्यर्थः । वेशकुलस्य वेश्याजनस्य । दातुरपदेशो नामग्रहणम् । न्यायार्जितैर्न्यायप्राप्तैः । असकृद्वारंवारम् । अतिप्रणुद्य निह्नुत्य । कर्णनासस्य च्छेदस्तस्योपक्षेपः प्रस्तावस्तेन भीषिताभ्याम् । **कुपितेनेति** । प्रत्यषिध्यत प्रत्यवार्यत । मौर्यो राजनीतिकर्ता ।

१ सर्वस्य. २ बन्धिनी महत्यापानिता. ३ द्विस्त्रिश्चतुरम्. ४ च व्यपदिष्टे. ५ अपदेश्य. ६ मामुपगमय्य. ७ प्रणुद्य.

पद्यतो दण्डः । प्राञ्जलिना धनमित्रेणैव प्रत्यपिध्यत—' आर्य, मौर्यदत्त एष वरो वणिजाम् । ईदृशेष्वपराधेष्वसुभिरवियोगः । यदि कुपितोऽसि हृतसर्वस्वो निर्वासनीयः पाप एषः ' इति । तन्मूला च धनमित्रस्य कीर्तिरप्रथत । अप्रीयत च भर्ता । पटच्चरच्छेदशेषोऽर्थपति- रर्थमत्तः सर्वपौरजनसमक्षं निरवास्यत । तस्यैव द्रव्याणां तु केन- चिदवयवेन सा वराकी काममञ्जरी चर्मरत्नमृगतृष्णिकापविद्धसर्वस्वा सानुकम्पं धनमित्राभिनोदितेन भूपेनान्वगृह्यत । धनमित्रश्चाहनि गुणिनि कुलपालिकामुपायंस्त । तदेवं सिद्धसंकल्पो रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम् ।

अस्मिंश्च पुरे लुब्धसमृद्धवर्गस्तथा मुषितो यथा कपालपाणिः स्वैरेव धनैर्मद्विश्राणितैः समृद्धीकृतस्यार्थिवर्गस्य गृहेषु भिक्षार्थमभ्र- मत् । न ह्यलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमि- तुम् । यतोऽहमेकदा रागमञ्जर्याः प्रणयकोपप्रशमनाय सानुनयं पायितायाः पुनः पुनः प्रणयसमर्पितमुखमधुगण्डूषमास्वादमास्वादं मदेनास्पृश्ये । शीलं हि मदोन्मादयोरमार्गेणाप्युचितकर्मस्वेव प्रवर्तनम् । यदहमुपोढमदः ' नगरमिदमेकयैव शर्वर्या निर्धनीकृत्य त्वद्भवनं पूर-

निर्वासनीयो बहिःकार्यः । तन्मूला तत्प्राणरक्षणमूला । अप्रथत ख्याता बभूवेत्यर्थः । अप्रीयत प्रीतोऽभूदित्यर्थः । पटच्चरच्छेदशेषो जीर्णवस्त्रखण्डावशेषः । **तस्यैवेति** । तस्यार्थपतेः । अवयवेनांशेन । मृगतृष्णिका मरीचिका तयाऽपविद्धं हारितं सर्वस्वं यया इति तथा । अभिनोदितेन प्रेरितेन । गुणिन्यहनि गुणवद्दिवस इत्यर्थः । ' मुहू- र्तादिगुणयुक्ते ' इति भूषणा । उपायंस्त परिणीतवान् । सिद्धसंकल्पोऽहमपहारवर्मा । **अस्मिन्निति** । लुब्धसमृद्धवर्गो लुब्धाश्च ते समृद्धाश्च तेषां वर्गः समूहः । कपालं खर्परं पाणौ यस्येति तथा । स्वैरात्मीयैः । मद्विश्राणितैर्मद्दत्तैः । नियतिरदृष्टम् । प्रणयकोपः प्रीतिकलहस्तत्प्रशमनाय तन्नाशाय । पायितायाः पानं कारितायाः । मुखमधु मुखमद्यं तद्गण्डूषं पीतोज्झितम् । ' पीतशेषं तु गण्डूषम् ' इति हलायुधः । आस्वादमास्वादं आस्वाद्यास्वाद्येत्यर्थः । णमुल् । अस्पृश्ये स्पृष्टवानस्मि । उचित- कर्मस्वभ्यस्तकर्मसु । 'अभ्यस्तेऽप्युचिते न्याय्यम् ' इति वैजयन्ती । प्रवर्तनमनुष्ठानम् । **यदहमिति** । उपोढमदोऽधिकमदः । शर्वर्या रात्र्या । ' अथ शर्वरी । निशा

१ ०धेषु नास्वयसुभिरभियोगः. २ अभिचोदितेन. ३ यापितायाः; पाययितायाः. ४ अनु- चितः; उपाचित. ५ इदमनयैकया.

येयम्' इति प्रत्यथितप्रियतमाप्रणामाञ्जलिशपथशतातिवर्ती मत्त-वारण इव रभसच्छिन्नशृङ्खलः कयाऽपि धात्र्या शृगालिकाख्ययाऽनुगम्य-मानो नातिपरिकरोऽसिद्वितीयो रंहसा परेणोदचलम्। अभिपततोऽपि नागरिकपुरुषानशङ्कमेव विगृह्य तस्कर इति तैरभिहन्यमानोऽपि नाति-प्रकुपितः क्रीडन्निव मदावसन्नहस्तपतितेन निस्त्रिंशेन द्वित्रानेव हत्वाऽव-घूर्णमानताम्रदृष्टिरपतम्। अनन्तरमार्तरवान्विसृजन्ती शृगालिका ममा-भ्यासमगमत्। अबध्ये चाहमरिभिः। आपदा तु मदापहारिण्या सद्य एव बोधितस्तत्क्षणोपजातया प्रतिभया व्यचीचरम्—'अहो ममेयं मोहमूला महत्यापदापतिता। प्रभूततरं च सख्यं मया सह धनमित्रस्य मत्परिग्रहत्वं च रागमञ्जर्याः। मदेनसा च तौ प्रोर्णुतौ श्वो नियतं निग्रहीष्येते। तदियमिह प्रतिपत्ति-र्यथाऽनुष्ठीयमानया मन्नियोगतस्तौ परित्रास्येते। मां च कदाचिदनर्था-दितस्तारयिष्यतः' इति कमप्युपायमात्मनैव निर्णीय शृगालिकामगादि-षम्—'अपेहि जरतिके। या तामर्थलुब्धां दग्धगणिकां रागमञ्जरिकाम

निशांथिनी रात्रिः' इत्यमरः। शपथशतमतिक्रम्य वर्तत इति तथा। 'अनेन मधुपानं कृतमतोऽयमुन्मत्त इत्येतदर्थं तया शपथादिकं कृतमिति भावः' इति भूषणा। मत्तवारण इव मत्तगज इव। रभसेन वेगेन छिन्ना त्रोटिता शृङ्खला येनेति तथा। धात्र्युपमाता। परिकरः परिवारः। रंहसा वेगेन। अभिपततः संमुखमागच्छतः। विगृह्य युद्धं कृत्वा। अभिहन्यमानस्ताड्यमानः। मदेनावसन्नः शिथिलो यो हस्तस्तस्मात्पतितेन। निस्त्रिंशेन खड्गेन। 'नृशंसखड्गौ निस्त्रिंशौ' इत्यमरः। अवघूर्णमाना विह्वला। अनन्तरमिति। अभ्यासं समीपम्। मदापहारिण्या मदनाशकर्त्र्या। प्रतिभया प्रज्ञया। 'प्रज्ञा नवनवोल्लासशालिनी प्रतिभा मता' इति भरतः। व्यचीचरं विचा-रितवान्। मोहमूलाऽज्ञानमूला। महत्यतिशयिता। आपतिता आगता। प्रभूततरं ख्यात-तरम्। मत्परिग्रहत्वं मत्पत्नीत्वम्। 'परिग्रहस्तु स्वीकारे शापे पत्न्यां परिच्छदे' इति महीपः। मदेनसा मत्पापेन। 'कलुषं वृजिनैनोघम्' इत्यमरः। तौ राग-मञ्जरीधनमित्रौ। प्रोर्णुतावभिभूतौ। निग्रहीष्येते। निगृहीतौ भविष्यत इत्यर्थः। प्रतिपत्तिः कर्तव्यम्। यया प्रतिपत्त्या। नियोगतो नियमात्। परित्रास्येते परि-रक्षितौ भविष्यतः। अगादिषमवदम्। अपेहि गच्छेत्यर्थः। जरतिका वृद्धा।

१ धूर्तया धात्र्या. २ अभ्याशम्. ३ प्रथिततरं. ४ संप्रोर्णुतौ. ५ निग्राहयिष्यते. ६ ०ष्यति. ७ त्वम्.

जिनरत्नपत्तेन शत्रुणा मे मित्रच्छद्मना धनमित्रेण संगमितवती मा हताऽस्मि । तस्य पापस्य चर्मरत्नमोषाद्दुहितुश्च ते साराभरणापहारादहमद्य निःशल्यमुत्सृजेयं जीवितम्' इति । सा पुनरुद्घटितज्ञा परमधूर्ता साश्रुगद्गदमुदञ्जलिस्तान्पुरुषानप्रणाममासादितवती सामपूर्वं मम पुरस्तादयाचत—'भद्रकाः प्रतीक्षध्वं[2] कंचित्कालं यावदस्मादस्मदीयं सर्वं मुषितमर्थजातमवगच्छेयम्' इति । तथेति तैः प्रतिपन्ने पुनर्मत्समीपमासाद्य 'सौम्य क्षमस्वास्य दासीजनस्यैकमपराधम् । अस्तु स कामं त्वत्कलत्राभिमर्शी वैरास्पदं धनमित्रः । स्मरंस्तु चिरकृतां ते परिचर्यामनुग्रहीतुमर्हसि दासीं रागमञ्जरीम् । आकल्पसारो हि रूपाजीवाजनः[3] । तद्ब्रूहि क निहितं तस्या भूषणम् ।' इति पादयोरपतत् । ततो दयमान इवाहमब्रवम्—'भवतु, मृत्युहस्तवर्तिनः किं ममामुष्या[4] वैरानुबन्धेन' इति । तद्ब्रुवन्निव कर्ण एवैनामशिक्षयम्—'एवमेवं प्रतिपत्तव्यम्' इति । सा तु प्रतिपन्नार्थेव 'जीव चिरम्, प्रसीदन्तु ते देवताः, देवोऽप्यङ्गराजः पौरुषप्रीतो मोचयतु त्वाम्, एतेऽपि भद्रमुखास्तव दयन्ताम्' इति क्षणादपासरत् । आनीये चाहमारक्षिकनायकस्य[5] शासनाच्चारकम् ।

या तामिति । मित्रच्छद्मना कपटमित्रेण । संगमितवती संबन्धं कारितवती । तस्य पापस्य धनमित्रस्य । साराभरणानामपहारात्स्तेयात् । सा शृगालिका । उद्घटितज्ञा सूचितज्ञा । 'सूचनमुद्घटनं बोधिः' इत्यजयः । उदञ्जलिर्बद्धाञ्जलिः । भद्रकाः कल्याणरूपाः । मुषितं चोरितम् । प्रतिपन्नेऽङ्गीकृते । सः धनमित्रः । त्वत्कलत्राभिमर्शी त्वत्स्त्रीगामी । वैरास्पदं वैरस्थानम् । **स्मरन्निति** । आकल्पसारो भूषणसारः । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । रूपाजीवा वेश्या । 'वारस्त्री गणिका वेश्या रूपाजीवा' इत्यमरः । भवतु किं तेनेत्यर्थः । अमुष्या रागमञ्जर्याः । वैरानुबन्धेन वैरसंबन्धेन । 'अनुबन्धोऽनुवृत्तिः' इति भूषणा । प्रतिपत्तव्यं कर्तव्यम् । प्रतिपन्नार्थेव प्राप्तार्थेव । पौरुषप्रीतः पुरुषार्थसंतुष्टः । त्वेति त्वामित्यर्थः । तव दयन्तामित्यत्र 'अधीगर्थदयेशां—' इति कर्मणि षष्ठी । अपासरदपसृता । आरक्षिका रक्षणकारकास्तेषां नायकस्य कोट्टपालस्य । शासनान्नियोगात् ।

1 ०ज्ञाना 2 प्रतीक्ष्यताम् 3 ०जाती, ०जीवः, 4 अमुष्या 5 आरक्षक.

अथोत्तरेद्युरागत्य हृष्टतरः सुभगमानी सुन्दरंमन्यः पितुरत्ययादचिराधिष्ठिताधिकारस्तारुण्यमदादनतिपक्वः कान्तको नाम नागरिकः किंचिदिव भर्त्सयित्वा मां समभ्यधत्त—'न चेद्धनमित्रस्याजिनरत्नं प्रतिप्रयच्छसि न चेद्वा नागरिकेभ्यश्चोरितकानि प्रत्यर्पयसि द्रक्ष्यसि पारमष्टादशानां कारणानाम्, अन्ते च मृत्युमुखम्' इति। मया तु स्मयमानेनाभिहितम्—'सौम्य, यद्यपि दद्यामा जन्मनो मुषितं धनं न त्वर्थपतिदारापहारिणः शत्रोर्मे मित्रमुखस्य धनमित्रस्य चर्मरत्नप्रत्याशां पूरयेयम्। अद्यत्वैव तदयुतमपि यातनानामनुभवेयम्। इयं मे साधीयसी संधा' इति। तेनैव क्रमेण वर्तमाने सान्त्वनतर्जनप्राये प्रतिदिनमनुयोगव्यतिकरेऽनुगुणान्नपानअभ्यासात्कतिपयैरेवाहोभिर्विरोपितव्रणः प्रकृतिस्थोऽहमासम्।

अथ कदाचिदच्युताम्बरपीतातपत्विषि क्षयिणि वासरे हृष्टवर्णा शृगालिकोज्ज्वलेन वेषेणोपसृत्य दूरस्थानुचरा मामुपश्लिष्याब्रवीत्—'आर्य दिष्ट्या वर्धसे। फलिता तव सुनीतिः। यथा

---

चारकं बन्धनालयम्। **अथेति**। उत्तरेद्युः परदिवसे। 'सद्यःपरुत्-' इति निपातः। सुभगमानी सुभगमात्मानं मन्यमानः। 'सर्वोन्नतत्वं सौभाग्यं तद्वान्सुभग उच्यते' इति दिवाकरः। सुन्दरंमन्यः सौन्दर्याभिमानी। पितुरत्ययात्पितृनाशात्। अचिराधिष्ठिताधिकारोऽल्पकालप्राप्ताधिकारः। अनतिपक्वोऽनतिपरिणतः। नागरिकः कारापतिः। 'कारापतिर्नागरिकः' इति वैजयन्ती। **न चेदिति**। कारणानां यातनानाम्। 'कारणा तु यातना तीव्रवेदना' इत्यमरः। स्मयमानेन स्मितमुखेन। मित्रमुखस्य मित्रच्छद्मनः। 'मुखं तु वदने मुख्ये तान्त्रे छद्मनि वा पुमान्' इति भागुरिः। प्रत्याशां पुनःप्राप्तीच्छाम्। 'प्रत्याशा पुनराप्तीच्छा' इति वैजयन्ती। साधीयसी दृढतरा। संधा प्रतिज्ञा। 'संधा स्थितौ प्रतिज्ञायाम्' इति विश्वः। अनुयोगव्यतिकरे प्रश्नप्रकारे। 'संपर्के च व्यतिकरः प्रकारेऽपि' इत्यजयः। अनुगुणान्नपानालाभादनुकूलाशनपानप्राप्तेः। विरोपितव्रण उपशान्तक्षतः। 'विरोपित उपशान्तश्चिकित्सितः' इति बोपालितः। **अथेति**। अच्युतो विष्णुस्तस्याम्बरं वस्त्रं तद्वत्पीता पिशङ्गा आतपत्विट् उद्द्योतप्रभा यस्येति। क्षयिणि क्षीणे। वासरे दिवसे। हृष्टस्य इव वर्ण आकृतिर्यस्याः सा हृष्टवर्णा। उपश्लिष्य संनिकृष्य।

---

१ कारापतिः.

त्वयाऽऽदिश्ये तथा धनमित्रमेत्याब्रवम्—'आर्य तवैवमापन्नः सुहृदित्यु[1]वाच—'अहमद्य वेशसंसर्गसुलभात्पानदोषाद्बद्धः। त्वया पुनरविशङ्कमद्यैव राजा विज्ञापनीयः—'देव, देवप्रसादादेव पुराऽपि तदजिनरत्नमर्थपतिमुषितमासादितम्। अथ तु भर्ता रागमञ्जर्याः कश्चिदक्षधूर्तः कलासु कवित्वेषु लोकवार्तासु चातिवैचक्षण्यान्मया समसृज्यत। तत्संबन्धाच्च वस्त्राभरणप्रेषणादिना तद्भार्यां प्रतिदिनमन्ववर्ते। तदसावशङ्किष्ट निकृष्टाशयः[2] कितवः। तेन च कुपितेन हृतं तच्चर्मरत्नमाभरणसमुद्गकश्च तस्याः। स तु भूयः स्तेयाय प्रच्छन्नमगृह्यत नागरिकपुरुषैः। आपन्नेन चामुनाऽनुसृत्य रुदत्यै रागमञ्जरीपरिचारिकायै[3] पूर्वप्रणयानुवर्तिना तद्भाण्डनिधानोद्देशः कथितः। ममापि चर्मरत्नमुपायोपक्रान्तो यदि प्रयच्छेदिह देवपादैः प्रसादः कार्यः' इति। तथा निवेदितश्च नरपतिरसुभिर्माविवियोज्योपच्छन्दनैरेव स्वं ते दापयितुं प्रयतिष्यते। तन्नः पथ्यम्' इति। श्रुत्वैव च त्वदनुभाव[4]प्रत्ययादनतित्रस्नुना तेन तत्तथैव संपादितम्। अथाहं त्वदभिज्ञानप्रत्यायिताया रागमञ्जर्याः सकाशाद्यथेप्सितानि वस्तूनि[5] लभमाना राजदुहितुरम्बालिकाया धात्रीं माङ्गलिकां त्वदादिष्टेन मार्गेणान्वरञ्जयम्। तामेव च संक्रमीकृत्य रागमञ्जर्याश्चाम्बालिकायाः सख्यं परमवीवृधम्।

आदिश्ये आदिष्टम्। आपन्न आपत्तिं प्राप्तः। 'आपन्न आपत्प्राप्तः स्यात्' इत्यमरः। **अथ त्विति**। अक्षधूर्तोऽक्षनिपुणः। समसृज्यत। संगतोऽभवदित्यर्थः। 'अन्ववर्ते स्वसंबन्धिवर्गवत्सादरमाचरामीति फलितार्थः' इति भूषणा। असावक्षधूर्तः। निकृष्टाशयः क्षुद्रान्तःकरणः। समुद्गकः संपुटकः। स्तेयाय चौर्याय। नागरिकपुरुषैः कारापातिपुरुषैरित्यर्थः। तस्या यद्भाण्डं भूषणम्। 'भाण्डं भूषणमात्रेऽपि भाण्डं मूलवणिग्धने' इति विश्वः। तस्य निधानोद्देशः स्थापनप्रदेशः। उपायैरुपक्रान्तो वशीकृतः। 'उपक्रमो वशीकारे समारम्भे चिकित्सने।' इति वैजयन्ती। उपच्छन्दनैः सान्त्वनैः। 'सान्त्वनोपच्छन्दने च समावनुनये' इति केशवः। स्वं चर्मरत्नम्। पथ्यमनुगुणम्। त्वदनुभावप्रत्ययात्त्वत्प्रभावज्ञानात्। अनतित्रस्नुनाऽतिशयितत्रासरहितेन। 'त्रसिगृधि–' इति क्नुप्रत्ययः। तेन धनमित्रेण। **अथेति**। त्वदभिज्ञानप्रत्यायितायास्त्वत्प्रत्यायकवस्तुविश्वासिताया:। संक्रमीकृत्योपायीकृत्य। 'प्रत्युपाये संक्रमे च

१ सुहृदमुना चैवमादिष्टोऽसि. २ निकृष्टाशयतया. ३ परिचारिकायै श्रृगालिकायै. ४ त्वदनुभाव. ५ वस्तूनि.

अहरहश्च नवनवानि प्राभृतान्युपहरन्ती कथाश्चित्राश्चित्तहारिणीः कथयन्ती तस्याः परं प्रसादपात्रमासम् । एकदा च हर्म्यगतायास्तस्याः स्थानस्थितमपि कर्णकुवलयं स्रस्तमिति समादधती प्रमत्तेव प्रच्याव्य पुनरुत्क्षिप्य भूमस्तेनोपकन्यापुरं कारणेन केनापि भवनाङ्गणं प्रविष्टस्य कान्तकस्योपरि प्रवृत्तकुहरपारावतत्रासनापदेशात्प्रहसन्ती प्राहार्षम् । सोऽपि तेन धन्यंमन्यः किंचिदुन्मुखः स्मयमानो मत्कर्मप्रहासिताया राजदुहितुर्विलासप्रायमाकारमात्माभिलापमूलमिव यथा संकल्पयेत्तथा मयाऽपि संज्ञयैव किमपि चतुरमाचेष्टितम् । आकृष्टधन्वना च मनसिजेन विद्धः स दिग्धफलेन पत्रिणाऽतिमुग्धः कथंकथमप्यपासरत् । सायं च राजकन्याङ्गुलीयकमुद्रितां वासताम्बूलपट्टांशुकयुगलभूषणावयवगर्भां च वङ्गेरिकां कयाचिद्बालिकया ग्राहयित्वा रागमञ्जर्या इति नीत्वा कान्तकस्यागारमगाम् । अगाधे च रागसागरे मग्नो नावमिव मामुपलभ्य परमहृष्यत् । अवस्थान्तराणि च राजदुहितुः सुदारुणानि व्यावर्णयन्त्या मया स दुर्मतिः

निःश्रेण्यां संक्रमो मतः' इत्युत्पलिनी । अवीत्रधम् । अवर्धयमित्यर्थः । प्राभृतान्युपायनानि । 'प्राभृतं तु प्रदेशनम् । उपायनमुपग्राह्यम्' इत्यमरः । चित्तहारिणीर्मनोहराः । **एकदेति** । स्थानस्थितमपि यथास्थितमपि । स्रस्तं गलितमिति समादधती सज्जयन्ती । प्रमत्तेवानवहितेव । प्रच्याव्य पातयित्वा । तेन कर्णकुवलयेन । उपकन्यापुरं कन्यान्तःपुरसमीपे । कान्तकस्य कारापतेः । प्रवृत्तकुहर आरब्धसुरतः । 'कुहरं सुषिरे दम्भे नागलोके रतेऽपि च ।' इत्यजयः । पारावतः कपोतः तस्य त्रासनापदेशाद्भयोत्पादनमिषात् । तेन कर्णकुवलयप्रहारेण आत्मनि योऽभिलापः स मूलं कारणं यत्रेति तथा । संकल्पयेच्चिन्तयेत् । आकृष्टधन्वना सज्जीकृतचापेन । विद्धो भिन्नः । दिग्धं विषलिप्तम् । 'दिग्धलिप्तौ विषाक्ते च' इति वैजयन्ती । फलं शल्यम् । **सायं चेति** । राजकन्याया अङ्गुलीयकं मुद्रिका तया मुद्रिता कृतमुद्राम् । वासताम्बूलं एलालवङ्गकर्पूरादिभिः सुगन्धीकृतं ताम्बूलम् । 'घनसारादिभिर्यत्तु वासितं वासमुच्यते ।' इति वैजयन्ती । पट्टांशुकयुगलं पट्टवस्त्रयुगलम् । भूषणावयवाः कतिपयभूषणानि तद्गर्भाम् । वङ्गेरिकां वेत्रपुटिकाम् । 'वङ्गेरी वेत्रपुटिका' इति वैजयन्ती । **अगाधे चेति** । अगाधेऽतलस्पर्शे । अहृष्यत् हर्षं प्राप । सुदारुणान्यसह्यानि । स दुर्मतिः कान्तकः । सुदूरमत्यन्तम् । उदमाद्यत उन्ममादेत्यर्थः ।

१ हर्म्याङ्गणगतायाः. २ प्रमत्तकुहर. ३ ०मन्यः पग. ४ संकल्पयेत. ५ चङ्गेलिकां; चङ्गालिकां; पटिकाम्.

सुदूरमुदमाद्यत। तत्प्रार्थिता चाहं त्वत्प्रियाप्रहितमिति ममैव मुखताम्बूलोच्छिष्टानुलेपनं निर्माल्यं मलिनांशुकं चान्येद्युरुपाहरम्। तदीयानि च राजकन्यार्थमित्युपादाय च्छन्नमेवापोढानि।

इत्थं च संधुक्षितमन्मथाग्निः स एवैकान्ते मयोपमन्त्रितोऽभूत्—'आर्य, लक्षणान्येव तवाविसंवादीनि। तथा हि मत्प्रातिवेश्यः कश्चित्कार्तान्तिकः 'कान्तकस्य हस्ते राज्यमिदं पतिष्यति। तादृशानि तस्य लक्षणानि' इत्यादिक्षत्। तदनुरूपमेव च त्वामियं राजकन्यका कामयते। तदेकापत्यश्च राजा तया त्वां समागतमुपलभ्य कुपितोऽपि दुहितुर्मरणभयान्नोच्छेत्स्यति। प्रत्युत प्रापयिष्यत्येव यौवराज्यम्। इत्थं चायमर्थोऽर्थानुबन्धी। किमिति तात नाराध्यते। यदि कुमारीपुरप्रवेशाभ्युपायं नावबुध्यसे ननु भवनागारभित्तेर्व्याममात्रमन्तरालमारामप्राकारस्य। केनचित्तु हस्तवतैकागारिकेण तावतीं सुरुङ्गां कारयित्वा प्रविष्टस्योपवनं तवोपरिष्टादस्मदायत्तैव रक्षा। रक्ततरो हि तस्याः परिजनो न रहस्यं भेत्स्यति' इति। सोऽब्रवीत्—'साधु भद्रे दर्शितम्। अस्ति कश्चित्तस्करः खननकर्मणि सगरसुतानामिवान्यतमः। स चेल्लब्धः क्षणेनैतत्कर्म साधयिष्यति' इति। 'कतमोऽसौ, किमिति न लभ्यते' इति मयोक्ते येन तद्धनमित्रस्य चर्मरत्नं मुषितमिति त्वामेव स निर-

त्वत्प्रियाप्रहितमिति प्रेषितमिति। उच्छिष्टानुलेपनं स्वभुक्तावशिष्टाङ्गरागम्। तदीयानि कान्तकसंबन्धीनि। उपादाय गृहीत्वा। छन्नमेव गुप्तमेव। अपोढानि त्यक्तानि। **इत्थमिति**। संधुक्षितो वृद्धिं प्रापितः। उपमन्त्रित उपदिष्टः। अविसंवादीनि विसंवादरहितानि। 'प्रतिवेशे चरति यः प्रातिवेश्यः स उच्यते' इति, 'कार्तान्तिको लक्षणज्ञः' इति च वैजयन्ती। आदिक्षदवोचत्। तदेकापत्यः सैवैकमपत्यं यस्येति स तथा। समागतं संगतम्। अर्थानुबन्धी राजरूपार्थसंबन्धी। तातेत्यात्मीयतासूचकं संबोधनम्। व्याममात्रम्। व्याम: परिमाणविशेषः। भाषया 'वांव' इति प्रसिद्धः। 'व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरम्' इत्यमरः। आराम उपवनम्। हस्तवता शिक्षितहस्तेन। ऐकागारिकेण चौरेण। 'चौरैकागारिकस्तेनदस्युतस्करमोषकाः।' इत्यमरः। तावतीं तत्प्रमाणाम्। सुरुङ्गा भूम्यन्तर्गतखनितमार्गविशेषः। अस्मदायत्ताऽस्मदधीना। 'अधीनो निघ्न आयत्तः' इत्यमरः। भेत्स्यति प्रकटं करिष्यति। **अस्तीति**। निरदिक्षन्निर्दिष्टवान्। तेन चौरेण सह।

१ अपाविध्यम्; प्राक्षिपम्; अपविद्धानि. २ उत्सेत्स्यति. ३ सुरुङ्गाम्.

दिक्षत् । 'यद्येवमेहि, त्वयाऽस्मिन्कर्मणि साधिते चित्रैरुपायै-स्त्वामहं मोचयिष्यामीति शपथपूर्वं तेनाभिसंधाय सिद्धेऽर्थे भूयोऽपि निगडयित्वा 'योऽसौ चौर स सर्वथोपक्रान्तः, न तु धाष्ट्र्य-भूमिः प्रकृष्टवैरस्तद्धनरत्नं दर्शयिष्यति' इति राज्ञे विज्ञाप्य चित्र-मेन हनिष्यसि । तथा च सत्यर्थः सिध्यति, रहस्यं च न स्रवति' इति मयोक्ते सोऽतिहृष्टः प्रतिपद्य मामेव त्वदुपप्रलोभने नियुज्य बहिरवस्थितः । प्राप्तमितः परं चिन्त्यताम्' इति । प्रीतेन च मयो-क्तम्—'मदुक्तमलम्, त्वन्नय एवात्र भूयान् । आनयैनम्' इति । अथानीतेनामुना मन्मोचनाय शपथः कृतः, मया च रहस्यानिर्भेदाय । विनिगडीकृतश्च स्नानभोजनविलेपनान्यनुभूय नित्यान्धकारात्कारा-भित्तिकोणादारभ्योरगास्येन सुरङ्गामकरवम् । अचिन्तयं चैवम्—'हन्तुमनसैवामुना मन्मोचनाय शपथः कृतः । तदेनं हत्वाऽपि नासत्य-वाददोषेण स्पृश्ये' इति । निष्पततश्च मे निगडनाय प्रसार्यमाणपाणे-स्तस्य पादेनोरसि निहत्य पतितस्य तस्यैवासिधेन्वा शिरो न्यकृन्तम् । अकथयं च शृगालिकाम्—'भद्रे कथंभूतः कन्यापुरसंनिवेशः महानयं प्रयासो वृथैव मा भूत् । अमुत्र किंचिच्चोरयित्वा निवर्तिष्ये' इति । तदुपदर्शितविभागं चावगाह्य कन्यान्तःपुरं प्रज्वलत्सु मणिप्रदीपेषु नैकक्रीडाखेदसुप्तस्य परिजनस्य मध्ये महितमहार्घरत्नप्रत्युप्तसिंहाकार-

अभिसंधाय । प्रतिज्ञायेत्यर्थः । निगडयित्वा बद्ध्वा । उपक्रान्तश्चिकित्सितः । धार्ष्ट्यभूमिरचलधैर्य इत्यर्थः । चित्रमनेकप्रकारम् । प्रतिपद्याभ्युपगम्य । त्वदुप-प्रलोभने त्वद्वशीकरणे । प्राप्तं कर्तव्यम् । त्वन्नय एव त्वन्नीतिरेव । **अथानीतेनेति** । रहस्यानिर्भेदाय गोप्यस्याप्रकटीकरणाय । विनिगडीकृतः । मुक्त इत्यर्थः । नित्यान्ध-कारादखण्डतमसः । उरगास्येन फणिमुखाकारखननसाधनेन । हन्तुमनसा मन्मारण-निश्चितचेतसा । निष्पततो निर्गच्छतः । तस्यैव । असिधेन्वा छुरिकया । 'छुरिका चासिधेनुका' इत्यमरः । न्यकृन्त कृत्तवानस्मि । संनिवेशः संस्थानम् । 'संस्थानं संनिवेशे च स्वरूपे च निगद्यते' इति वररुचिः । अयं प्रयासः सुरङ्गाकरणक्लेशः । अमुत्र कन्यापुरे । तदुपदर्शितविभागं शृगालिकाकथितप्रदेशम् । महितानि उत्कृष्टानि महार्घाणि बहुमूल्यानि रत्नानि तैः प्रत्युप्ताः खचिताः सिंहाकारा दन्तपादा

१ संधाय. २ मोचयिष्यामि. ३ प्राप्तमेतत्. ४ नित्यान्धकारागारभित्ति. ५ तदर्थं. ६ शुभे कन्यापुरसंस्थानम्. ७ विभागः विभागः. ८ महार्हरत्न; महति महार्हरत्न. ९ प्रसुप्त.

दन्तपादे हंसतूलगर्भशय्योपधानशालिनि कुसुमलवच्छुरितपर्यन्ते पर्यङ्कतले दक्षिणपादपार्ष्ण्यधोभागानुवलितेतरचरणाग्रपृष्ठम्, ईषद्विवृत्तमधुरगुल्फसंधि, परस्पराश्लिष्टजङ्घाकाण्डम्, आकुञ्चितकोमलोभयजानु, किंचिद्वेल्लितोरुदण्डयुगलम्, अधिनितम्बस्रस्तमुक्तैकभुजलताग्रपेशलम्, अपाश्रयान्तनिमिताकुञ्चितेतरभुजलतोत्तानतलकरकिसलयम्, आभुग्नश्रोणिमण्डलम्, अतिश्लिष्टचीनांशुकान्तरीयम्, अनतिवलिततनुतरोदरम्, अतनुतरनिःश्वासारम्भकम्पमानकठोरकुचकुड्मलम्, आतिरश्चीनबन्धुरशिरोधरोद्देशदृश्यमाननिष्टप्ततपनीयसूत्रपर्यस्तपद्मरागरुचकम्, अर्धलक्ष्याधरकर्णपाशनिभृतकुण्डलम्, उपरिपरावृत्तश्रवणपाशरत्नकर्णिका-

---

यस्येति तस्मिन्। हंसतूलः पक्षिपक्ष्माणि गर्भे यस्या एवंविधा। उपधानमुपबर्हः। कुसुमलवैश्छुरितो मिश्रितः। शोभित इति यावत्। पर्यन्तो यस्येति। पर्यङ्कः मञ्चः। 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः। पार्ष्णिः पादमूलम्। अनुवलितः संवृतः। 'संवृतः स्यात्संवलितो भिन्नोऽनुवलितोऽपि च।' इति बोपालितः। इतरचरणो वामचरणः। गुल्फं घुटिका। काण्डं स्तम्भः। वेल्लितं वक्रितम्। अधिनितम्बमिति विभक्त्यर्थे अव्ययीभावः। पेशलं चारु यथा तथा। अपाश्रयः शिरोभागः। निमितं निक्षिप्तम्। 'डुमिञ् प्रक्षेपणे।' अपाश्रयान्ते निमितः आकुञ्चिता या इतरभुजलता तस्याः उत्तानतलः करः किसलय इव उत्तानतलकरकिसलयो यथा स्यात्तथा। आभुग्नमीषत्कुटिलम्। चीनांशुकस्य चीनदेशीयवस्त्रस्य। अन्तरीयमधोवस्त्रम्। अनतिवलितं नातिप्रह्वम्। आ ईषत्तिरश्चीनो वक्रः। बन्धुरः सुन्दरः। निष्टप्तं तापितम्। तपनीयं सुवर्णम्। 'तपनीयं शातकुम्भं गाङ्गेयं भर्म कर्बुरम्।' इत्यमरः। रुचकोऽङ्गुलिकामणिः। आतिरश्चीना बन्धुरा च या शिरोधरा तस्या उद्देशे दृश्यमानः निष्टप्ततपनीयसूत्रपर्यन्तः पद्मरागरुचको यत्र तद्यथा तथा। 'रुचको मङ्गलद्रव्ये ग्रीवाभरणदन्तयोः।' इति विश्वप्रकाशः। अधरोऽधः। 'अधस्तादपि चाधरः' इत्यमरः। अधरकर्णपाशः अधस्ताद्भूतः कर्णपाशः शय्यालग्नः वामकर्णः। 'इदानीं द्वितीयकर्णविषयकमाह—**उपरीति**।' इति भूषणा। परावृत्तः समुत्तानः। कर्णिका कर्णभूषणम्। विषममयथार्थकम्। व्याविद्धो बद्धः। 'सम्यक्तया न बद्धः' इति भूषणा। शिखण्डः केशकलापः। उपरि परावृत्तः य श्रवणपाशस्तत्र या रत्नकर्णिका तस्याः

---

१ अनुवेल्लिते०. २ विवृत. ३ निहित; निमित्त. ४ उत्तरीयम्. ५ नातिवलित. ६ अणुतर. ७ श्वासारम्भ.

किरणमञ्जरीपिञ्जरितविषमव्याविद्धाशिथिलशिखण्डबन्धनम्, आत्मप्रभा-पटलदुर्लक्ष्यपाटलोत्तराधरविवरम्, गण्डस्थलीसंक्रान्तहस्तपल्लवदर्शित-कर्णावतंसकृत्यम्, उपरिकपोलादर्शतलनिषिक्तचित्रवितानपत्रजाति-जनितविशेषकक्रियम्, आमीलितलोचनेन्दीवरम्, अविभ्रान्तभ्रूपताकम्, उद्भिद्यमानश्रमजलपुलकभिन्नशिथिलचन्दनतिलकम्, आननेन्दुसंमुखा-लकलतं च विश्रब्धप्रसुप्तामतिधवलोत्तरच्छदनिमग्नप्रायैकपार्श्वतया चिरविलसनखेदनिश्चलां शरदम्भोधरोत्सङ्गशायिनीमिव सौदामनीं राजकन्यामपश्यम् । दृष्ट्वैव स्फुरदनङ्गरागश्चकितश्चोरयितव्यनिःस्पृह-स्तयैव तावच्चोर्यमाणहृदयः किंकर्तव्यतामूढः क्षणमतिष्ठम् । अत-र्कयं च—'न चेदिमां वामलोचनामाप्नुयां न मृष्यति मां जीवितुं वसन्त-बन्धुः । असंकेतितपरामृष्टा चेयमार्तस्वरेण निहन्यान्मे मनोरथम् । ततोऽहमेवाघ्नीय । तदियमत्र प्रतिपत्तिः ।' इति नाग-

किरणमञ्जरीभिः पिञ्जरितः विषमव्याविद्धः आशिथिलः शिखण्डबन्धः यस्मिन्कर्मणि तथा । पाटलः श्वेतरक्तः । उत्तराधर उत्तरोष्ठः । गण्डस्थली गल्लप्रदेशस्तत्र संक्रान्तो मिलितो यः हस्तपल्लवः करपल्लवः तेन दर्शितं कर्णावतंसस्य कृत्यं यथा स्यात्तथा । कपोल एवादर्शतलं तस्योपरि निषिक्तं प्रतिबिम्बितं यच्चित्रं वितानमुल्लोचः । 'अस्त्री वितानमुल्लोचः' इत्यमरः । तदेव पत्रजातिः पत्रक्रिया तया जनितोत्पादिता विशेष-क्रिया तिलकादिक्रिया । अविभ्रान्ता निश्चला । उद्भिद्यमानं जायमानम् । श्रमजल घर्मस्तस्य पुलका बिन्दवः । अलकलता केशवल्लिः । इत्येतानि क्रियाविशेषणानि । विश्रब्धप्रसुप्ता विश्रामकृतनिद्राम् । उत्तरच्छद आस्तरणपटः । निमग्नप्रायः निमग्न इवेत्यर्थः । 'मन्ये शङ्के ध्रुवं प्राय इति वेवार्थवाचकाः' इत्याभधानात् । विलसनं स्फुरणम् । उत्सङ्गो मध्यम् । 'मध्योत्सङ्गौ समुत्सङ्गः' इति वैजयन्ती । सौदामनी विद्युत् । **दृष्ट्वैवेति** । स्फुरन् द्विगुणीभूतोऽनङ्गरागो यस्येति । किंकर्तव्यतामूढोऽग्रे किं कर्तव्यमिति ज्ञानरहितः । **अतर्कयमिति** । मृष्यति सहते । 'वर्तमानसामीप्ये वर्तमानवद्वा' इति लट् । वसन्तबन्धुर्मदनः । असंकेतितपरामृष्टा अकृतसंकेता सती परामृष्टा स्पृष्टा । आर्तस्वरेण पीडितस्वरेण । आङ्पूर्वकस्य हन्तेः 'आङो यमहनः' इत्यनेन तङि विधिलिङि उत्तमपुरुषैकवचनम् । हता भवेयमित्यर्थः । प्रतिपत्तिः कर्तव्यम् । नागदन्तोऽवलम्बनकाष्ठम् । 'खुंटी' इति भाषया प्रसिद्धम् ।

१ व्यात्तदर्शितेन. २ निपतत्. ३ पत्रक्रिया. ४ आननतालकलतम्. ५ अतिचिरम् ६ स्वेन ७ आघ्नीये.

दन्तलग्ननिर्यासकल्कवर्णितं फलकमादाय मणिसमुद्गकाद्वर्णवर्तिका-मुद्धृत्य ता तथा शयानां तस्याश्च मामाबद्धाञ्जलिं चरणलग्नमालिखमार्यां चैताम्—

'त्वामयमाबद्धाञ्जलि दासजनस्तमिममर्थमर्थयते।
स्वपिहि मया सह सुरतव्यतिकरखिन्नैवं मा मैवम्॥'

हेमकरण्डकाच्च वासताम्बूलवीटिकां कर्पूरस्फुटिकां पारिजातकं चोपयुज्यालक्तकपाटलेन तद्रसेन सुधाभित्तौ चक्रवाकमिथुनं निरष्ठीवम्। अङ्गुलीयकविनिमयं च कृत्वा कथंकथमपि निरगाम्। सुरङ्गया च प्रत्येत्य बन्धनागारं तत्र बद्धस्य नागरिकवरस्य सिंहघोषनाम्नस्तेष्वेव दिनेषु मित्रत्वेनोपचरितस्य 'एवं मया हतस्तपस्वी कान्तकः, तत्त्वया प्रतिभिद्य रहस्यं लब्धव्यो मोक्षः' इत्युपदिश्य सह शृगालिकया निरक्रामिषम्। नृपतिपथे च समागत्य रक्षिकपुरुषैरगृह्ये। अचिन्तयं च—' अलमस्मि जवेनापसर्तुमनामृष्ट एवभिः। एषा पुनर्वराकी गृह्येत। तदिदमत्र प्राप्तरूपम्'

तत्र लग्नं संस्थापितम्। निर्यासकल्केन चिक्कणद्रव्यक्वाथेन वर्णितम्। वर्णो रक्तादिः स संजातो यस्मिन्निति तम्। फलकं काष्ठपट्टिकाम्। हिङ्गुलरक्तपट्टिकामिति यावत्। मणिसमुद्गकाद्रत्नसंपुटकात्। 'समुद्गकः संपुटकः' इत्यमरः। वर्तिकां तूलिकाम्। 'तूलिका वर्णवर्तिका' इति वैजयन्ती। चरणलग्नं पादलग्नम्। **आर्यामिति**। आर्यालक्षणं वृत्तरत्नाकरोक्तम्—' लक्ष्मैतत्सप्तगणा गोपेता भवति नेह विषमे जः।' इति। **त्वामयमिति**। अयं दासजनो मद्रूपः सेवकजनः आबद्धाञ्जलि कृताञ्जलीति क्रियाविशेषणम्। त्वामिमर्थं अर्थयते प्रार्थयते। द्विकर्मकोऽयम्। सुरतस्य व्यतिकरः संसर्गस्तेन खिन्नैव मया सह स्वपिहि निद्रां कुरु। एवं सुरतखेदं विना मा मेति। 'अमानोनाः प्रतिषेधे'। वीप्सायां द्विर्वचनम्। हेमकरण्डकात्सुवर्णपेटकात्। वासताम्बूलवीटिकां सुवासितनागवल्लीपत्रवीटिकाम्। कर्पूरस्फुटिकां कर्पूरखण्डम्। पारिजातकं सुगन्धखदिरसारम्। उपयुज्य भुक्त्वा। अलक्तकपाटलेन यावकवद्रक्तेन। तद्रसेन ताम्बूलवीटिकारसेन। सुधया लिप्ता संस्कृता वा भित्तिः सुधाभित्तिः तस्यां सुधाभित्तौ। चूर्णकुड्य इत्यर्थः। चक्रवाकमिथुनं निरष्ठीवमभ्बूकृतवान्। विनिमयो व्यत्ययः। बन्धनागारं प्रत्येत्यागत्य। उपचरितस्य सेवितस्य। तपस्वी शोच्यः। मोक्षो मोचनम्। अलं समर्थः। अपसर्तुं पलाय्य गन्तुम्। अनामृष्टोऽस्पृष्टः। एषा वराकी दीना शृगालिका। तदिदमत्र प्राप्तरूपं तस्मादिदं प्रशस्तं प्राप्तं वक्ष्यमाणं

१ निर्यासवालुका. २ तुलिकावर्तिकाम्. ३ मदन. ४ खिन्नेव. ५ व्यतिक्रमम्. ६ समापत्य.

इति तानेव चपलमभिपत्य स्वपृष्ठसमर्पितकूर्परः पराङ्मुखः स्थित्वा 'यद्यहमस्मि तस्करः, भद्रा बध्नीत माम्। युष्माकमयमधिकारः, न पुनरस्या वर्षीयस्याः' इत्यवादिषम्। सा तु तावतैवोन्नीतमदभिप्राया तान्सप्रणाममभ्येत्य 'भद्रमुखाः ममैष पुत्रो वायुग्रस्तश्चिरं चिकित्सितः। पूर्वेद्युः प्रसन्नकल्पः प्रकृतिस्थ एव जातः। जातास्थया मया बन्धनान्निष्क्रमय्य स्नापितोऽनुलेपितश्च परिधाप्य निष्प्रवाणियुगलमभ्यवहार्य परमान्नमौशीरेऽद्य कामचारः कृतोऽभूत्। अथ निशीथे भूय एव वायुनिघ्नः 'निहत्य कान्तकं नृपतिदुहित्रा रमेयम्' इति रंहसा परेण राजपथमभ्यपतत्। निरूप्य चाहं पुत्रमेवंगतमस्यां वेलायामनुधावामि। तत्प्रसीदत। बद्ध्वैनं मह्यमर्पयत' इति यावदसौ क्रन्दति तावदहं 'स्थविरे, केन देवो मातरिश्वा बद्धपूर्वः। किमेते काकाः शौङ्गेयस्य मे निग्रहीतारः। शान्तं पापम्' इत्यधावम्। असावप्यमीभिः 'त्वमेवोन्मत्तयाऽनुन्मत्त इत्युन्मत्तं मुक्तवती। कस्तमिदानीं बध्नाति' इति कदर्थिता रुदत्येव मामन्वधावत्। गत्वा च रागमञ्जरीगृहं चिरविरहखेदविह्वलामिमां बहुविधं समाश्वास्य तं निशाशेषमनयम्। प्रत्यूषे चोदारकेण समगच्छे।

अथ भगवन्तं मरीचिं वेशकृच्छ्रादुत्थाय पुनः प्रतितप्ततपः-

प्रशस्तं कर्तव्यम। चपलं शीघ्रम्। स्वपृष्ठे समर्पितौ निहितौ कूर्परौ येनेति सः। अयमधिकारस्तस्करबन्धनरूपः। वर्षीयस्या वृद्धायाः। **सा त्विति**। तावतैव तावन्मात्रेणैव। उन्नीतस्तर्कितः। वायुग्रस्तो वातुलः। प्रकृतिस्थः स्वभावस्थः। जातास्थया जातादरया। निष्प्रवाणियुगलमनाहतवस्त्रयुगलम्। 'अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे।' इत्यमरः। अभ्यवहार्य भोजयित्वा। परमान्नं पायसम्। औशीरे शयनासने। 'औशीरं शयनासनम्' इति हलायुधः। कामचारः स्वेच्छाचारित्वम्। **अथेति**। निशीथेऽर्धरात्रे। वायुनिघ्नो वाताधीनः। रंहसा वेगेन। मातरिश्वा वायुः। 'मातरिश्वा सदागतिः' इत्यमरः। शौङ्गेयस्य। 'तिलञ्छदस्तु शौङ्गेयो विहङ्गारातिरित्यपि।' इति वैजयन्ती। 'ससाणा' इति प्रसिद्धः। तद्बन्धने काकानामसामर्थ्यमिति भावः। **असाविति**। असौ शृगालिका। कदर्थिता निन्दिता। 'निन्दितः क्लेशने चैव वर्णने च कदर्थने' इति सज्जनः। **गत्वा चेति**। चिरं बहुकालं यो विरहखेदो वियोगदुःखं तेन विह्वलाम्। प्रातःकाले। उदारकेण मित्रेण। **अथेति**। वेशकृच्छ्राद्वेश्याकष्टात्।

---

१ अनाहतयुगलम्. २ चिरवियोग. ३ विह्वलाम्. ४ पुनरुदा०. ५ प्रतिपन्न.

प्रभावप्रत्यापन्नदिव्यचक्षुषमुपसंगम्य तेनास्म्येवंभूतं त्वद्दर्शनमवगमितः। सिंहघोषश्च कान्तकापचारं निर्भिद्य तत्पदे प्रसन्नेन राज्ञा प्रतिष्ठापितस्तेनैव चारकसुरङ्गापथेन कन्यापुरप्रवेशं भूयोऽपि मे समपादयत्। समगंसि चाहं शृगालिकामुखविसृतवार्तानुरक्तया राजदुहित्रा। तेष्वेव दिवसेषु चण्डवर्मा सिंहवर्मावधूतदुहितृप्रार्थनः कुपितोऽभियुज्य पुरमवारुणत्। अमर्षणश्चाङ्गराजो यावदरिः पारिग्रामिकं विधिमाचिकीर्षति तावत्स्वयमेव प्राकारं निर्भिद्य प्रत्यासन्नानपि सहायानप्रतीक्षमाणो निर्गत्याभ्यधिकबलेन विद्विषा महति संपराये भिन्नवर्मा सिंहवर्मा बलादगृह्यत। अम्बालिका च बलवदभिगृह्य चण्डवर्मणा हठात्परिणेतुमात्मभवनमनीयत। कौतुकं च स किल क्षपावसाने विवाह इत्यबध्नात्। अहं च धनमित्रगृहे तद्विवाहायैव पिनद्धमङ्गलप्रतिसरस्तमेवमवोचम्—'सखे समापतितमेवाङ्गराजाभिसरं राजमण्डलम्। सुगूढमेव संभूय पौरवृद्धैस्तदुपावर्तय। उपावृत्तश्च कृत्तशिरसमेव शत्रुं द्रक्ष्यसि' इति। 'तथा' इति तेनाभ्युपगते गतायुषोऽमुष्य भवनमुत्सवाकुलमुपसमाधीय-

---

प्रतितप्तं यत्तपस्तस्य प्रभावात्सामर्थ्यात्प्रत्यापन्नं प्राप्तं दिव्यं चक्षुर्येनेति तथा तम्। एवंभूतममुना प्रकारेण जातम्। त्वद्दर्शनम्। त्वच्छन्दे राजवाहनस्योपस्थितिः। 'उपसंगम्य इत्यस्यावगमित इत्यवगमेऽन्वयः। अतः समानकर्तृत्वम्।' इति भूषणा। अवगमितो बोधितः। सिंहघोषः कारागृहमित्रम्। कान्तकापचारं कारापत्यपकारम्। निर्भिद्य प्रकटीकृत्य। तेनैव मत्कृतमार्गेण। विसृतवार्तया निर्गतगोष्ठ्या। अनुरक्तयाऽऽसक्तया। तेष्वेवेति। चण्डवर्मा राजवाहनबन्धनकर्ता। सिंहवर्मणाऽङ्गदेशस्थचम्पानगरराज्ञा। अभियुज्याभिभूय। 'अभियोगस्त्वभिभवः' इति कोशः। अमर्षणः सकोपः। अङ्गराजः सिंहवर्मा। पारिग्रामिकं ग्रामस्य परितः क्रियमाणम्। 'ग्रामात्पर्यनुपूर्वात्' इति ठञ्। प्राकारमावरणभित्तिम्। प्रत्यासन्नान्समीपवर्तिनः। संपराये संग्रामे। भिन्नवर्मा भिन्नतनुत्रः। अम्बालिका सिंहवर्मदुहिता। कौतुकं मङ्गलसूत्रम्। स किल चण्डवर्मा अहमपहारवर्मा। तद्विवाहायाम्बालिकाविवाहाय। पिनद्धः मङ्गलप्रतिसरो येन स तथा। बद्धमङ्गलहस्तसूत्रः इत्यर्थः। 'हस्तसूत्रं प्रतिसरः' इति वैजयन्ती। समापतितं समागतम्। अङ्गराजाभिसरमङ्गराजसहायीभूतम्। सुगूढं सुगुप्तम्। तद्राजमण्डलमुपावर्तय समीपमानय। उपावृत्तश्च पुनरागतः सन्। शत्रुं चण्डवर्माणम्। अभ्युपगतेऽङ्गीकृते। गतायुषोऽल्पायुषः। अमुष्य चण्डवर्मणः। उपसमाधीयमान-

---

१ पारग्रा०. २ मालम्. ३ ०मर्मा. ४ अम्बालिकाम्. ५ अनभिसरम्. ६ कृतकृत्यः कृत्त०.

मानपरिणयोपकरणमितस्ततःप्रवेशनिर्गमप्रवृत्तलोकसंबाधमलक्ष्यशस्त्रिकः सह प्रविश्य मङ्गलपाठकैरम्बालिकापाणिपल्लवमग्नौ साक्षिण्याथर्वणेन विधिनाऽर्प्यमाणमादित्समानस्यायामिनं बाहुदण्डमाकृष्य च्छुरिकयोरसि प्राहार्षम्। स्फुरतश्च कतिपयानन्यानपि यमविषयमगमयम्। हतविध्वस्तं च तद्गृहमनुविचरन्वेपमानमधुरगात्रीं विशाललोचनामभिनिशाम्य तदालिङ्गनसुखमनुबुभूषुस्तामादाय गर्भगृहमविक्षम्। अस्मिन्नेव क्षणे तथास्मि नवाम्बुवाहस्तनितगम्भीरेण स्वरेणानुगृहीतः' इति।

श्रुत्वा च स्मित्वा च देवोऽपि राजवाहनः 'कथमसि कार्कश्येन कर्णीसुतमप्यतिक्रान्तः' इत्यभिधाय पुनरवेक्ष्योपहारवर्माणम् 'आचक्ष्व। तवेदानीमवसरः' इत्यभाषत। सोऽपि सस्मितं प्रणम्यारभताभिधातुम्।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽपहारवर्मचरितं नाम द्वितीय उच्छ्वासः।

## तृतीयोच्छ्वासः।

एषोऽस्मि पर्यटन्नेकदा गतो विदेहेषु। मिथिलामप्रविश्यैव बहिः क्वचिन्मठिकाया विश्रमितुमेत्य कयाऽपि वृद्धतापस्या दत्तपाद्यः क्षणम-

---

परिणयोपकरणं संपाद्यमानविवाहोपयुक्तवस्तुजातम्। इतस्ततः प्रवेशनिर्गमाः गतागतानि तत्र प्रवृत्त उपक्रान्तो यो लोकस्तेन संबाधं संकटम्। अलक्ष्याऽदृश्या शस्त्रिका च्छुरिका यस्येति स तथा। मङ्गलपाठकैर्ब्राह्मणैः सह। अग्नौ साक्षिणी सत्यग्निसाक्षिकमित्यर्थः। आथर्वणेन पुरोधसा। 'आथर्वणः पुरोधाः स्याच्छान्तिपुष्टिकरो द्विजः।' इति कामन्दकः। विधिना विध्युक्तप्रकारेण। अर्प्यमाणं दीयमानम्। आदित्समानस्य ग्रहीतुकामस्य। आयामिनं दैर्घ्यवन्तम्। प्राहार्षं हतवान्। यमविषयं यमदेशम्। मधुरं सुन्दरम्। अभिनिशाम्य संमुखं दृष्ट्वा। अनुबुभूषुरनुभवितुमिच्छुः। गर्भगृहम्। अस्मिन्निति। नवाम्बुवाहो नूतनमेघस्तस्य स्तनितं गर्जितम्। कार्कश्येन कर्कशस्य भावस्तेन। काठिन्येनेत्यर्थः। कर्णीसुतः स्तेयशास्त्रकर्ता।

इति श्रीदशकुमारचरितटीकायां द्वितीय उच्छ्वासः।

---

इदानीमुपहारवर्मचरितमभिधातुमुपक्रमते-एषोऽस्मीति। मठिका अल्पमठः। दत्तपाद्यो दत्तपादोदकः। 'पाद्यं पादाय वारिणि' इत्यमरः। अलिन्दभूमौ।

---

१ संपातम्. २ पुनर्निरीक्ष्य. ३ एषोऽप्यहमस्मि.

लिन्दभूमाववास्थिषि । तस्यास्तु मद्दर्शनादेव किमप्याबद्धधारमश्रु प्रावर्तत । 'किमेतदम्ब, कथय कारणम्' इति पृष्टा सकरुणमाचष्ट— 'जैवातृक ननु श्रूयते पतिरस्या मिथिलायाः प्रहारवर्मा नामासीत् । तस्य खलु मगधराजो राजहंसः परं मित्रमासीत् । तयोश्च वल्लभे बलशम्बलयोरिव वसुमतीप्रियंवदे सख्यमप्रतिममधत्ताम् । अथ प्रथमगर्भाभिनन्दितां तां च प्रियसखीं दिदृक्षुः प्रियंवदा वसुमतीं सह भर्त्रा पुष्पपुरमगमत् । तस्मिन्नेव च समये मालवेन मगधराजस्य महज्जन्यमजनि । तत्र लेशतोऽपि दुर्लक्ष्यां गतिमगमन्मगधराजः । मैथिलेन्द्रस्तु मालवेन्द्रप्रयत्नप्राणितः स्वविषयं प्रतिनिवृत्तो ज्येष्ठस्य संहारवर्मणः सुतैर्विकटवर्मप्रभृतिभिर्व्याप्तं राज्यमाकर्ण्य स्वस्रीयात्सुह्मपतेर्दण्डावयवमादित्सुरटवीपथमवगाह्य लुब्धकलुप्तसर्वस्वोऽभूत् । तत्सुतेन च कनीयसा हस्तवर्तिना सहैकाकिनी वनचरशरवर्षभयपलायिता वनमगाहिषि । तत्र च मे शार्दूलनखावलीढनिपतितायाः पाणिभ्रष्टः स बालकः कस्यापि कपिलाशवस्य क्रोडमभ्यलीयत । तच्छवाकर्षिणश्च व्याघ्रस्यासूनिषुरिष्वसनयन्त्रमुक्तः क्षणादलिक्षत् । भिल्ल-

---

अलिन्दभूमिर्बहिर्द्वाराग्रवर्तिचतुष्कम् । 'ओटा' इति भाषया प्रसिद्धम् । 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठके ।' इत्यमरः । अवास्थिषीत्यत्र 'समवप्रविभ्यः स्थः' इत्यात्मनेपदम् । आबद्धधारमविच्छिन्नधारम् । जैवातृक आयुष्मन् । जीवतीति जैवातृकः । जीवेः आतृकन् वृद्धिश्च । तयोः राजहंसप्रहारवर्मणोः । बलश्च शम्बलश्च द्वावप्यसुरौ तयोरिव । अप्रतिममसदृशम् । अधत्तां दधतुः । अथेति । प्रियंवदा प्रहारवर्मस्त्री । भर्त्रा प्रहारवर्मणा सह । पुष्पपुरं वसुमतीभर्तू राजहंसस्य नगरम् । तस्मिन्निति । मालवेनान्यराज्ञा । मगधराजस्य राजहंसस्य । जन्यं युद्धम् । लेशतः किंचित् । सार्वविभक्तिकस्तसिः । मगधराजो राजहंसः । मालवेन्द्रप्रयत्नेन प्राणितो जीवितः । स्वविषयमात्मदेशम् । ज्येष्ठस्य भ्रातुः । स्वस्रीयाद्भगिनीपुत्रात् । 'स्वसुश्छः' इति छः । दण्डावयवं सैन्यैकदेशम् । लुब्धका व्याधाः । तत्सुतेन प्रहारवर्मपुत्रेण । वनचराणां भिल्लानां शरवर्षाद्भयं तेन पलायिता । अगाहिष्यालोडितवती । शार्दूलो व्याघ्रः । कपिलाशवस्य मृतगोशरीरस्य । क्रोडो वक्षःस्थलम् । इष्वसनं धनुः । अलिक्षदपाहरत् । वृष्णिपालेन गोपालेन ।

१ शम्बर. २ पुलीसनाम्. ३ मैथिलस्तु. ४ रक्षिप

दारकैः स बालोऽपाहारि । सा त्वहं मोहसुप्ता केनापि वृष्णिपालेनोपनीय स्वं कुटीरमावेश्य कृपयोपक्रान्तव्रणा स्वस्थीभूय स्वभर्तुरन्तिकमुपतिष्ठासुरसहायतया यावद्व्याकुलीभवामि तावन्ममैव दुहिता सह यूना केनापि तमेवोद्देशमागमत् । सा भृशं रुरोद । रुदितान्ते च सा सार्थघाते स्वहस्तगतस्य राजपुत्रस्य किरातभर्तृहस्तगमनम्, आत्मनश्च केनापि वनचरेण व्रणविरोपणम्, स्वस्थायाश्च पुनस्तेनोपयन्तुं चिन्तिताया निकृष्टजातिसंसर्गवैक्लव्यात्प्रत्याख्यानपारुष्यम्, तदक्षमेण चामुना विविक्ते विपिने स्वशिरःकर्तनोद्यमम्, अनेन यूना यदृच्छया दृष्टेन तस्य दुरात्मनो हननम्, आत्मनश्चोपयमनम्, इत्यकथयत् । स तु पृष्टो मैथिलेन्द्रस्यैव कोऽपि सेवकः कारणविलम्बी तन्मार्गानुसारी जातः । सह तेन भर्तुरन्तिकमुपसृत्य पुत्रवृत्तान्तेन श्रोत्रमस्य देव्याः प्रियंवदायाश्चादहाव ।

स च राजा दिष्टदोषाज्ज्येष्ठपुत्रैश्चिरं विगृह्य पुनरहसहिष्णुतयाऽतिमात्रं चिरं प्रयुध्य बद्धः । देवी च बन्धनं गमिता । दग्धा पुनरहमस्मिन्नपि वार्द्धके हतजीवितमपारयन्ती हातुं प्रव्रज्यां किलाग्रहीषम् । दुहिता तु मम हतजीविताकृष्टा विकटवर्ममहादेवीं कल्पसुन्दरीं किलाशिश्रियत् । तौ चेद्राजपुत्रौ निरुपद्रवावेवावर्धिष्येताम्, इयता

---

अविपालेनेति वा । कुटीरमल्पगृहम् । 'कुटीशमीशुण्डाभ्यो रः' इति रः । उपक्रान्तव्रणा चिकित्सितक्षता । उपतिष्ठासुर्गन्तुमिच्छुः । तमेवोद्देशं कुटीरप्रदेशम् । सा मत्कन्या । सार्थघाते संघभ्रंशे । किरातभर्तुर्भिल्लप्रभोः । व्रणविरोपणं क्षतचिकित्सनम् । उपयन्तुं परिणेतुम् । निकृष्टा हीना । प्रत्याख्याने दूरीकरणे पारुष्यं काठिन्यम् । तदक्षमेण पारुष्यामहेन । विविक्ते विजने । स तु परिणेता । मैथिलेन्द्रस्य प्रहारवर्मणः । कारणविलम्बी प्रयोजनविलम्बितः । भर्तुर्मिथिलेन्द्रस्य । स राजा प्रहारवर्मा । दिष्टं दैवम् । अतिमात्रमत्यन्तम् । देवी प्रियंवदा । हातुं त्यक्तुम् । प्रव्रज्या संन्यासम् । विकटवर्मा प्रहारवर्मज्येष्ठभ्रातृपुत्रः । महादेवीं पट्टमहिषीम् ।

---

१ मिथिलेन्द्रस्य. २ ज्येष्ठभ्रातृपुत्रैः. ३ हतजीवितकाकृष्टा. हतजीविना. ४ महिषीम्.

कालेन तवेमां वयोवस्थामस्प्रक्ष्येताम्। तयोश्च सतोर्न दायादा नरेन्द्रस्य प्रसह्यकारिणो भवेयुः' इति प्रमन्युरभिरुरोद। श्रुत्वा च तापसीगिरमहमपि प्रवृद्धबाष्पो निगूढमभ्यधाम्—'यद्येवमम्ब समाश्वसिहि। नन्वस्ति कश्चिन्मुनिस्त्वया तदवस्थया पुत्राभ्युपपादनार्थं याचितस्तेन स लब्धो वर्धितश्च। वार्तेयमतिमहती। किमनया। सोऽहमस्मि। शक्यश्च मयाऽसौ विकटवर्मा यथाकथंचिदुपश्लिष्य व्यापादयितुम्। अनुजाः पुनरतिबहवः, तैरपि घटन्ते पौरजानपदाः। मां तु न कश्चिदिहत्य ईदृक्तया जनो जानाति। पितरावपि तावन्मां न संविदाते किमुतेतरे। तदेनमर्थमुपायेन साधयिष्यामि' इत्यगादिषम्। सा तु वृद्धा सरुदितं परिष्वज्य मुहुः शिरस्युपाघ्राय प्रस्नुतस्तनी सगद्गदमगदत्—'वत्स चिरं जीव। भद्रं तव। प्रसन्नोऽद्य भगवान्विधिः। अद्यैव प्रहारवर्मण्यधि विदेहा जाताः, यतः प्रलम्बमानपीनबाहुर्भवानपारमेतच्छोकसागरमद्योत्तारयितुं स्थितः। अहो महद्भागधेयं देव्याः प्रियंवदायाः' इति हर्षनिर्भरा स्नानभोजनादिना मामुपाचरत्। अशिश्रियं चास्मिन्मठैकदेशे निशि कटशय्याम्। अचिन्तयं च—'विनोपधिनाऽयमर्थो न साध्यः। स्त्रियश्चोपधीनामुद्भव-

अस्प्रक्ष्येतां स्पृष्टौ भविष्यतः। दायादा बान्धवाः। प्रसह्यकारिणो बलात्कारकारिणः। प्रमन्युः प्रकृष्टशोका। निगूढं गुप्तम्। सोऽहमस्मीत्यात्मनिरूपणम्। उपश्लिष्य संनिधानं प्राप्य। व्यापादयितुं हन्तुम्। अनुजाः विकटवर्मणः कनिष्ठा भ्रातरः। तैरपि घटन्ते मिलन्ति पौरजनाः। 'एवं तस्मिन्हतेऽपि तस्यानुजा राज्यं करिष्यन्ति। तथा च मत्कृतं व्यापादनं व्यर्थमेव भवेत् इति भावः।' इति भूषणा। इहत्योऽत्रत्यो जनः। 'अव्ययात्त्यप्' इति त्यप्। ईदृक्तया ईदृशस्य भावस्तथा तया। उपाघ्रायाघ्राणं कृत्वा। प्रस्नुतस्तनी क्षरदुग्धस्तनी। भद्रं कल्याणम्। प्रहारवर्मण्यधि प्रहारवर्माधीनाः। 'अधिरीश्वरे' इति कर्मप्रवचनीयसंज्ञा। 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी'। प्रलम्बमानौ दीर्घौ पीनौ पुष्टौ बाहु यस्येति स तथा। एतच्छोकसागरं प्रहारवर्मशोकसमुद्रम्। उपाचरदुपचारमकरोत्। अशिश्रियमाश्रितवान्। कटशय्यां तृणास्तरणम्। उपधिना कपटेन। 'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे' इत्यमरः। उद्भवक्षेत्रमुत्पत्तिस्थानम्।

१ प्रवृद्धमन्युः. २ यावन्माम्; तावदित्यधम्. ३ तमेनम्. ४ प्रस्रुत. ५ भद्र. ६ उत्तारयिता.

क्षेत्रम् । अतोऽन्तःपुरवृत्तान्तमस्या अवगम्य तद्द्वारेण किंचिज्जालमाचरेयम्' इति चिन्तयत्येव मयि महार्णवोन्मग्नमार्तण्डतुरङ्गमश्वासरयावधूतेव व्यावर्तत त्रियामा । समुद्रगर्भवासजडीकृत इव मन्दप्रतापो दिवसकरः प्रादुरासीत् ।

उत्थायावसायितदिनमुखनियमविधिस्तां मे मातरमवादिषम्—'अम्ब जाल्मस्य विकटवर्मणः कच्चिदन्तःपुरवृत्तान्तमभिजानासि' इत्यनवसितवचन एव मयि काचिदङ्गना प्रत्यदृश्यत । तां चावेक्ष्य सा मे धात्री हर्षाश्रुकुण्ठितकण्ठमाचष्ट—'पुत्रि पुष्करिके पश्य भर्तृदारकम् । अयमसावकृपया मया वने परित्यक्तः पुनरप्येवमागतः' इति । सा तु हर्षनिर्भरनिपीडिता चिरं प्ररुद्य बहु विलप्य शान्ता पुनः स्वमात्रा राजान्तःपुरवृत्तान्ताख्याने न्ययुज्यत । उक्तं च तया—'कुमार कामरूपेश्वरस्य कलिन्दवर्मनाम्नः कन्या कल्पसुन्दरी कलासु रूपे चाप्सरसोऽप्यतिक्रान्ता पतिमभिभूय वर्तते । तदेकवल्लभः स तु बहुवरोधोऽपि विकटवर्मा' इति । तामवोचम्—'उपसर्पैनां मत्प्रयुक्तैर्गन्धमाल्यैः । उपजनय चासमानदोषनिन्दादिना स्वभर्तरि द्वेषम् । अनुरूपभर्तृगामिनीनां च वासवदत्तादीनां वर्णनेन ग्राह-

अस्या वृद्धायाः सकाशात् । जाल्मं कपटम् । 'जालं समूह आनाये गवाक्षे कपटेऽपि च' इति वैजयन्ती । चिन्तयत्येवेति । महार्णवोन्मग्नः समुद्रमध्यान्निःसृतो यो मार्तण्डः सूर्यः तस्य तुरङ्गमा अश्वाः तेषां श्वासरयो मुखमारुतवेगस्तेनावधूतेव कम्पितेव । त्रियामा रात्रिः । समुद्रगर्भवासः समुद्रमध्यवसतिः । जडीकृतः शीतलीकृतः । मन्दप्रतापः स्वल्पतापः । अवसायितः समापितः । दिनमुखनियमविधिः प्रातःकालनियमकृत्यम् । जाल्मस्य मूढस्य । 'जडो जाल्मश्च निर्बुद्धौ स्तब्धेऽनालोच्यकारिणि ।' इति वैजयन्ती । कच्चिदिति प्रश्ने । 'कच्चित्कामप्रवेदने' इत्यमरः । अनवसितवचनेऽसमापितवचने । धात्र्युपमाता । हर्षाश्रु आनन्दाश्रु तेन कुण्ठितोऽवरुद्धः कण्ठो यथा तथेति क्रियाविशेषणम् । अकृपया निर्दयया । राजान्तःपुरं विकटवर्मान्तःपुरं तस्य वृत्तान्तो वार्ता तदाख्याने तत्कथने । न्ययुज्यत नियोजिता । अप्सरसोऽप्यतिक्रान्तोत्कृष्टेत्यर्थः । अभिभूय पराभूय । बहुवरोधोऽपि बहुपत्नीकोऽपि । एनां कल्पसुन्दरीम् । मत्प्रयुक्तैर्मत्प्रेषितैः । उपजनयोत्पादय । असमानोऽतुल्यः ।

१ चिन्तापन्ने. २ दिवाकरः. ३ कुञ्चित; कुण्ट.

यानुशयम् । अवरोधान्तरेषु च राज्ञो विलसितानि सुगूढान्यपि प्रयत्नेनान्विष्य प्रकाशयन्ती मानमस्या वर्धय ' इति । पुनरिदमम्बामवोचम्— ' इत्थमेव त्वयाऽप्यनन्यव्यापारया नृपाङ्गनाऽसावुपस्थातव्या । प्रत्यहं च यद्यत्तत्र वृत्तं तदस्मि त्वयैव बोध्यः । मदुक्त्या पुनरियमुदर्कस्वादुनोऽस्मत्कर्मणः प्रसाधनाय च्छायेवानपायिनी कल्पसुन्दरीमनुवर्तताम् ' इति । ते च तमर्थं तथैवान्वतिष्ठताम् ।

केषुचिद्दिनेषु गतेष्वाचष्ट मां मदम्बा—' वत्स माधवीव पिचुमन्दाश्लेषिणी यथाऽसौ शोच्यमात्मानं मन्येत तथोपपाद्य स्थापिता । किं भूयः कृत्यम् ' इति । पुनरहमभिलिख्यात्मनः प्रतिकृतिम् ' इयमस्यै नेया । नीतां चैनां निर्वर्ण्य सा नियतमेवं वक्ष्यति—' नन्वस्ति कश्चिदीदृशाकारः पुमान् ' इति । प्रतिब्रूह्येनाम्—' यदि स्यात्ततः किम् ' इति । तस्य यदुत्तरं सा दास्यति तदहमस्मि प्रतिबोधनीयः ' इति । सा ' तथा ' इति राजकुलमुपसंक्रम्य प्रतिनिवृत्ता मामेकान्ते न्यवेदयत्—' वत्स, दर्शितोऽसौ चित्रपटस्तस्यै मत्तकाशिन्यै । चित्रीयमाणा चासौ ' भुवनमिदं सनाथीकृतं यद्देवेऽपि कुसुमधन्वनि नेदृशी

वासवदत्तादीनामित्यत्र आदिशब्देन शकुन्तलादमयन्त्यादयो ग्राह्याः । अनुशयं पश्चात्तापम् । अवरोधान्तरेष्वपरस्त्रीषु । राज्ञो विकटवर्मणः । विलसितानि विलासान् । मानमीर्ष्याकृतं कोपम् । अनन्यव्यापारा त्यक्तसर्वान्यकार्या । असौ नृपाङ्गना । उपस्थातव्या सेवनीया । अस्मीत्यहमर्थेऽव्ययम् । त्वयैव भवत्यैव । मदुक्त्येयं पुष्करिका । उदर्क उत्तरं फलम् । स्वादु मधुरम् । प्रसाधनाय करणाय । अनपायिनी नाशरहिता । कल्पसुन्दरी राजपत्नी । माधवी वासन्ती । ' वासन्ती माधवी लता ' इत्यमरः । पिचुमन्दो निम्बवृक्षः । ' पिचुमन्दश्च निम्बे ' इत्यमरः । उपपाद्य सयुक्तिकं संबोध्य । प्रतिकृतिं स्वरूपम् । नियतं असंशयम् । ईदृश आकारो यस्येति स तथा । मत्तकाशिनी उत्तमाङ्गना । चित्रीयमाणा विस्मयमाना । 'नमोवरिवश्चित्रङः क्यच्' इति क्यजन्तादात्मनेपदम् । सनाथीकृतं नाथवत्कृतमित्यर्थः । यद्यस्मात् । कुसुमधन्वनि मदने । ईदृश्येतत्सदृशा । वपुःश्रीः शरीरशोभा । न संनिधत्ते । नास्तीत्यर्थः

१ त्वयाऽनन्यव्या . २ पिचुमन्दा. ३ मन्यत. ४ अस्मत्प्रतिकृतिरियम्. ५ मदम्.

वपुःश्रीः संनिधत्त । चित्रमेतच्चित्रतरम् । न च तमवैमि य ईदृशमिहत्यो निर्मिमीत । केनेदमालिखितम्' इत्यादृतवती व्याहृतवती च । मया च स्मेरयोदीरितम्—'देवि सदृशमाज्ञापयसि । भगवान्मकरकेतुरप्येवं सुन्दर इति न शक्यमेव संभावयितुम्। अथ च विस्तीर्णेयमर्णवनेमिः । क्वचिदीदृशमपि रूपं दैवशक्त्या संभवेत् । अथ तु यद्येवंरूपो रूपानुरूपशिल्पशीलविद्याज्ञानकौशलो युवा महाकुलीनश्च कश्चित्संनिहितः स्यात्स किं लप्स्यते[1] ' इति । तयोक्तम्—' अम्ब किं ब्रवीमि । शरीरं[2] हृदयं जीवितमिति सर्वमिदमल्पमनर्हं च । ततो न किंचिल्लप्स्यते । न चेदयं विप्रलम्भस्तस्यामुष्य दर्शनानुभवेन यथेदं चक्षुश्चरितार्थं भवेत्तथाऽनुग्रहः कार्यः ' इति । भूयोऽपि मया दृढतरीकर्तुमुपन्यस्तम्—' अस्ति कोऽपि राजसूनुर्निगूढं चरन् । अमुष्य वसन्तोत्सवे सह सखीभिर्नगरोपवनविहारिणी रतिरिव विग्रहिणी यदृच्छया दर्शनपथं गताऽसि । गतश्चासौ कामशरैकलक्ष्यतां मामन्ववर्तिष्ट । मया च वामन्योन्यानुरूपैरन्यदुर्लभैराकारादिभिर्गुणातिशयैश्च प्रेर्यमाणया तद्रचितैरेव कुसुमशेखरस्रगनुलेपनादिभिश्चिरमुपासिताऽसि । सादृश्यं च स्वमनेन स्वयमेवाभिलिख्य त्वत्समाधिगाढत्वदर्शनाय[3]

चित्रतरमतितरामाश्चर्यकरम् । स्मेरया सहासया । उदीरितमुक्तम् । सदृशं युक्तम् । एवं संभावयितुं सुन्दरत्वेन निदर्शयितुम् । अथ चेति तथाऽपि । विस्तीर्णा विशाला । अर्णवनेमिः पृथिवीत्यर्थः । अथ त्विति । तिष्ठत्वित्यर्थः । ' अथ त्वित्यभिधेयेऽस्मिन्नास्तामथ तु चाव्ययम् । ' इत्यजयः । रूपस्यानुरूपं अनुकूलम् । शिल्पं चातुर्यम् । विद्याश्चतुर्दशाष्टादश वा । ज्ञानं लिप्यादि । अनर्हमयोग्यम् । न किंचिल्लप्स्यते प्राप्यते । अमुष्य पुरुषस्य । चरितार्थं कृतकृत्यम् । उपन्यस्तम् । उक्तमित्यर्थः । **अस्तीति** । विग्रहिणी शरीरधारिणी । यदृच्छया स्वेच्छया । **गतश्चेति** । असौ राजपुरुषः । लक्ष्यतां वेध्यताम् । **मया चेति** । वामिति युवयोः । अन्योन्यानुरूपैः परस्परानुरक्तैः । प्रेर्यमाणयोद्योजितया । तद्रचितैस्तन्निर्मितैः । शेखर आपीडः । स्रङ् माला । अनुलेपनमुद्वर्तनम् । उपासिताऽसि । सेविताऽसीत्यर्थः । सादृश्यं स्वस्य प्रतिकृतिः । त्वत्समाधिगाढं त्वद्ध्यानदृढम् ।

१ स्यात्तमु०, स्यात्तस्या अमुष्य. २ अवरुद्धः. ३ त्वत्समाधिगमाय गाढं त्वद्दर्शनाय.

प्रेषितम् । एष चेदर्थो निश्चितस्तस्यामुष्यातिमानुषप्राणसत्त्वप्रज्ञाप्रकर्षस्य न किंचिद्दुष्करं नाम। तमद्यैव दर्शयेयम्। संकेतो देयः' इति। तया तु किंचिदिव ध्यात्वा पुनरभिहितम्—'अम्ब तव नैतदिदानीं गोप्यतमम्। अतः कथयामि। मम तातस्य राज्ञा प्रहारवर्मणा सह महती प्रीतिरासीत्। मातुश्च मे मानवत्याः प्रियवयस्या देवी प्रियंवदाऽऽसीत्। ताभ्यां पुनरजातापत्याभ्यामेव कृतः समयोऽभूत्—'आवयोः पुत्रवत्याः पुत्राय दुहितृमत्या दुहिता देया' इति। तातस्तु मां जातां प्रनष्टापत्या[*]प्रियंवदेति प्रार्थयमानाय विकटवर्मणे दैवाद्दत्तवान्। अयं च निष्ठुरः पितृद्रोही नात्युपपन्नसंस्थानः कामोपचारेष्वलब्धवैचक्षण्यः कलासु काव्यनाटकादिषु मन्दाभिनिवेशः शौर्योन्मादी दुर्विकत्थनोऽनृतवादी चास्थानवर्षी। नातिरोचते म एष भर्ता विशेषतश्चैषु वासरेषु। यदयमुद्याने मदन्तरङ्गभूतां पुष्करिकामप्युपान्तवर्तिनीमनादृत्य मयि बद्धसापत्न्यमत्सरामनात्मज्ञामात्मनाटकीयां रमयन्तिकां नामापत्यनिर्विशेषं मत्संव-

'गाढत्वदर्शनाय दृढत्वज्ञानाय' इति भूषणा। एष चेदिति पूर्वोक्तोऽयमर्थः। अतिमानुषो मनुष्यमतिक्रान्तः। प्राणो बलम्। सत्त्वं पराक्रमः[²]। प्रकर्ष आधिक्यं यस्येति स तथा तस्य। नामेति निश्चयार्थे। अद्यैवेति। स्वस्यैतत्कार्यघटनापटुत्वद्योतनार्थमेवकारः। ध्यात्वा विचार्य। गोप्यतममतिशयेन गोप्यमिति तथा। प्रियवयस्या प्रियसखी। अजातापत्याभ्यामनुत्पन्नापत्याभ्याम्। समयः शपथः। प्रनष्टापत्या हृतापत्या। निष्ठुरः कठिनः। 'नात्युपपन्नसंस्थानोऽननुगुणावयवः' इति भूषणा। 'उपपन्नं समृद्धे च संपन्नेऽनुगुणेऽपि च।' इति केशवः। 'संस्थानं मरणे गात्रे संनिवेशे च वर्तते' इति भागुरिः। कामोपचारेषु मदनतन्त्रेषु। अलब्धमप्राप्तं वैचक्षण्यं विचक्षणस्य भावः कौशलं येनेति स तथा। कलासु चतुःषष्ट्याम्। काव्येषु श्रव्यरूपेषु नाटकादिषु दृश्यरूपेषु च। आदिशब्देन रूपकाख्यायिकाचम्पूरूपेषु। मन्दो निश्चलोऽभिनिवेश आग्रहो यस्येति। शौर्योन्मादी शौर्योन्मत्तः। दुर्विकत्थनो दुष्टश्चासौ विकत्थनश्चेति तथा। आत्मश्लाघानिरर्थः। अस्थानवर्ष्यपात्रदाता। मे इति 'रुच्यर्थानां प्रीयमाणः' इति चतुर्थी। मदन्तरङ्गभूतामाप्तभूताम्। बद्धः सपत्न्याः भावः सापत्न्यं तस्य मत्सरोऽसह्यता ययेति तथा। नाटकीयां नर्तकीम्। 'नाटकीयो नृत्तकरः' इत्यजयः। अपत्यनिर्विशेषमपत्यतुल्यमिति क्रियाविशेषणम्। मत्संवर्धितायाः

१ आबद्ध. २ नामेति क्वचिन्नास्ति.

धितायाश्चम्पकलतायाः स्वयमवचिताभिः सुमनोभिरलमकार्षीत् । मदुपभुक्तमुक्ते चित्रकूटगर्भवेदिकागते रत्नतल्पे तया सह व्यहार्षीत् । अयोग्यश्च पुमानवज्ञातुं च प्रवृत्तः । तत्किमित्यपेक्ष्यते । परलोकभयं चैहिकेन दुःखेनान्तरितम् । अविषह्यं हि योषितामनङ्गशरनिषङ्गीभूतचेतसामनिष्टजनसंवासयन्त्रणादुःखम् । अतोऽमुना पुरुषेण मामद्योद्यानमाधवीगृहे समागमय । तद्वार्ताश्रवणमात्रेणैव हि ममातिमात्रं मनोऽनुरक्तम् । अस्ति चायमर्थराशिः । अनेनामुष्य पदे प्रतिष्ठाप्य तमेवात्यन्तमुपचर्य जीविष्यामि ' इति । मयाऽपि तदभ्युपेत्य प्रत्यागतम् । अतः परं भर्तृदारकः 'प्रमाणम् ' इति ।

ततस्तस्या एव सकाशादन्तःपुरनिवेशमन्तर्वंशिकपुरुषस्थानानि प्रमदवनप्रदेशानपि विभागेनावगम्य, अस्तगिरिकूटपातक्षुभितशोणित इव शोणीभवति भानुबिम्बे, पश्चिमाम्बुधिपयःपातनिर्वापितपत-

मत्पालितायाः । चम्पकलतायाः अल्पचम्पकस्येत्यर्थः । अवचिताभिर्लूनाभिः सुमनोभिः पुष्पैः । ' स्त्रियः सुमनसः पुष्पम् ' इत्यमरः । अलमकार्षीत्पूर्णमकरोत् । अलंकृतवानिति वा । ' अलं भूषणपर्याप्तिशक्तिवारणवाचकम् ' इत्यमरः । मदुपभुक्तमुक्ते मयाऽऽदौ उपभुक्ते पश्चान्मुक्ते । चित्रकूटः क्रीडापर्वतः । तद्गर्भवेदिकागते । रत्नतल्पे रत्नमञ्चके । तया रमयन्तिकया । व्यहार्षीद्विहारं कृतवान् । अयोग्यो मूर्खः । अवज्ञातुमवमन्तुम् । ऐहिकेनेह भवं तथा तेन । अन्तरितं व्यवधानीकृतम् । अनङ्गस्य मदनस्य शराणां निषङ्गीभूतं तूणीभूतम् । स्थानतां प्राप्तमिति भावः । चेतश्चित्तं यासामिति तथा तासाम् । अनिष्टजनः शत्रुलोकस्तत्संवासस्तत्समागमः स एव यन्त्रणा निर्बन्धस्तद्दुःखमिति । अतिमात्रमत्यन्तम् । **अस्तीति** । अर्थराशिर्द्रव्यराशिः । अमुष्य विकटवर्मणः । उपचर्याराध्य । मयाऽपि वृद्धतापस्या । **तत इति** । अन्तःपुरनिवेशमन्तःपुरप्रदेशम् । अन्तर्वंशिकपुरुषाः । ' अन्तःपुरे त्वधिकृतः स्यादन्तर्वंशिको जनः । ' इत्यमरः । 'प्रमदवनम्–' विज्ञेयं प्रमदवनं पुरोपकण्ठे शुद्धान्तैः सह रमते नृपस्तु यस्मिन् । ' इति हलायुधः । विभागेन विवेकेन । अस्तगिरेः कूटं शिखरं तस्माद्यः पातः पतनं तेन क्षुभितं निःसृतं शोणितं रक्तं यस्येति तथा तस्मिन् । शोणीभवति सति । पतङ्ग एव सूर्य एवाङ्गारः प्रदीप्तकाष्ठावयवस्तस्य

१ अद्य भा. वा. २ अमुं स्वे पदे. ३ संनिवेशम्. ४ शिखर.

ज्वालाङ्गारधूमसंभार इव भरिततनभसि तमसि विजृम्भिते, परदारपरामर्शोन्मुखस्य ममाचार्यकमिव कर्तुमुत्थिते गुरुपरिग्रहश्लाघिनि ग्रहाग्रेसरे क्षपाकरे, कल्पसुन्दरीवदनपुण्डरीकेणेव मद्दर्शनातिरागप्रथमोपनतेन स्मयमानेन चन्द्रमण्डलेन संधुक्षमाणतेजसि भुवनविजिगीषोद्यते देवे कुसुमधन्वनि, यथोचितं शयनीयमभजे। व्यचीचरं च-'सिद्धप्राय एवायमर्थः। किं तु परकलत्रलङ्घनाद्धर्मपीडा भवेत्। साऽप्यर्थकामयोर्द्वयोरुपलम्भे शास्त्रकारैरनुमतैवेति। गुरुजनबन्धमोक्षोपायसंधिना मया चैष व्यतिक्रमः कृतस्तदपि पापं निर्हृत्य कियत्याऽपि धर्मकलया मां समभ्रयेदिति। अपि त्वेतदाकर्ण्य देवो राजवाहनः सुहृदो वा किं नु वक्ष्यन्ति' इति चिन्तापराधीन एव निद्रया परामृश्ये। अदृश्यत च स्वप्ने हस्तिवक्त्रो भगवान्। आह स्म च—'सौम्य उपहारवर्मन्, मा स्म ते दुर्विकल्पो भूत्। यतस्त्वमसि मदंशः। शंकरजटाभारलालनोचिता सुरसरिदसौ वरवर्णिनी। सा च कदाचिन्मद्विलोडनासहिष्णुर्मामशपत्—'एहि

---

धूमस्तस्य संभारो यस्मिन्निति तथा तस्मिन्। भरितं व्याप्तं नभो येनेति तथा तस्मिन्। विजृम्भिते प्रसृते। परामर्शो गमनम्। तत्रोन्मुखस्योत्कण्ठितस्य। आचार्यकमिवोपदेशमिव। इवशब्दोऽत्रोत्प्रेक्षायाम्। गुरुपरिग्रहो गुरुपत्न्यभिलाषस्तच्छ्लाघिनि श्लाघतेऽसौ तथा तस्मिन्। ग्रहाग्रेसरे ग्रहमुख्ये। क्षपाकरे चन्द्रे। 'नक्षत्रेशः क्षपाकरः' इत्यमरः। मद्दर्शनातिरागो मद्दर्शनेच्छा तेन प्रथमोपनतेन प्रागेव प्राप्तेन। संधुक्षमाणतेजसि प्रवृद्धतेजसि। भुवनविजिगीषा जगद्विजेतुमिच्छा तत्रोद्यते उद्युक्ते। अभजेऽधिष्ठितवान्। क्रियाबलादहमिति पदमध्याहार्यम्। व्यचीचरं चेति। अचिन्तयं च। परकलत्रलङ्घनं परस्त्रीगमनम्। धर्मपीडा धर्मनाशः। उपलम्भे प्राप्तौ। शास्त्रकारैर्मन्वादिभिः अनुमतैवानिषिद्धैव। संधिः साधकता। अभिसंधिनेति पाठ 'अभिसंधिरुद्योगः' इति भूषणा। व्यतिक्रमो धर्मनाशरूपः। तदपि पापम्। समभ्रयेत्संपूर्णं करिष्यति। अदृश्यतेति। हस्तिवक्त्रो गजाननः। दुर्विकल्पो दुर्विचारः। सुरसरिद्गङ्गा। सैवासौ कल्पसुन्दरी। वरवर्णिनी। 'उत्तमा वरवर्णिनी' इत्यमरः। मद्विलोडनं मन्मेलनं तदसहिष्णुः

---

१ भरिततमसि नभसि. २ उपस्थिते. ३ पारग्रहग्रहण. ४ त्रिभुवन. ५ अभिसंधिना. ६ धर्मः कलया. ७ समाश्रयेत् ८ अदृश्यत स्वप्ने भगवान्भर्गः. ९ मज्जटा. १० तां च कदाचिद्गजाननो जलक्रीडां कुर्वन्नतिव्यगाहत। सा च सपत्नीतनयविहितां विलोडनामसहमाना तमशपत।

मर्त्यत्वम्' इति । अशप्यत मया च—'यथेह बहुभोग्या तथा प्राप्यापि मानुष्यकमनेकसाधारणी भव' इति । अभ्यर्थितश्चानया 'एकपूर्वा पुनस्त्वामेवोपचर्य यावज्जीवं रमेयम्' इति । तदयमर्थो भव्य एव भवता निराशङ्क्यः' इति । प्रतिबुध्य च प्रीतियुक्तस्तदहरपि प्रियासंकेतव्यतिकरादिस्मरणेनाहमनैषम् ।

अन्येद्युरनन्यथावृत्तिरनङ्गो मय्येवेषुवर्षमवर्षत् । अशुष्यच्च ज्योतिष्मतः प्रभामयं सरः । प्रासरच्च तिमिरमयः कर्दमः । कार्दमिकनिवसनश्च दृढतरपरिकरः खड्गपाणिरुपहृतप्रकृतोपस्करः स्मरन्मातृदत्तान्यभिज्ञानानि राजमन्दिरपरिखामुदम्भसमुपातिष्ठम् । अथोपखातं मातृगृहद्वारे पुष्करिकया प्रथमसंनिधापितां वेणुयष्टिमादाय तया शायितया च परिखाम्, स्थापितया च प्राकारभित्तिमलङ्घयम् । अधिरुह्य

---

तदसहनशीला । इह बहुभोग्या गङ्गात्वेन । अनेकसाधारणी बहुभोग्या भवेति । अभ्यर्थितः प्रार्थितः । एकः पूर्वो यस्या इति तथा । त्वां द्वितीयम् । उपचर्य संसेव्य । तदयमिति । अयमर्थः कल्पसुन्दरीभोगरूपः । भव्य एव कुशल एव । प्रतिबुध्य ज्ञात्वा । तदहस्तद्दिनम् । अनन्यथावृत्तिरभेदकवृत्तिः । इषुवर्षमपूर्ववर्षायितेति तथा । गमुल् । अवर्षत वर्षयेत्यर्थः । ज्योतिष्मतः सूर्यस्य । प्रभामयं दीप्तिरूपं सरः । ताद्रूप्ये मयट् । प्रासरत प्रसरति स्मेत्यर्थः । तिमिरमयोऽन्धकारमयः । कर्दमः पङ्कः । कार्दमिकनिवसनः कर्दमेनाक्तं कार्दमिकम् । 'तेन रक्तं रागात्' इत्यधिकारे 'लाक्षारोचनाट्ठक्' इति सूत्रे 'शकलकर्दमाभ्यामुपसंख्यानम्' इति ठक् । नीलवस्त्रः । दृढतरः परिकरः संनाहो यस्येति सः । उपहृतोऽङ्गीकृतः प्रकृतोपस्करो योग्यसामग्री येनेति स तथा । मातृदत्तानि धात्रीदत्तानि । परिखां प्राचीरसंनिकृष्टखनिम् । उदम्भसमुत्कटजलाम् । उपातिष्ठं समीपमगच्छम् । अथेति । उपखातं खातस्य समीपे । सामीप्यार्थेऽव्ययीभावः । प्रथमसंनिधापितां प्रागेव स्थापिताम् । शायितया प्रसारितया । स्थापितयोर्ध्वीकृतया च । पङ्केरुहा भर्जितेरहस्ताभिश्चितेन

१ सा त्वयहनकशापप्रदानात्कद्रुस्त्वामशपत्. २ ननगनन प्रतिशप्ता सा विनयेन मामुपगम्य गद्गदमगदत—'स्वामिन्, अहमनवगतभवच्चरणाविरभ्याधिभाविनी न शापार्हा ।' इत्याकर्ण्य कृपाक्रान्तमनसा मयोक्तम्—'प्रिये नास्य शापोऽन्यथा भवितुमर्हति । परं त्वदनुग्रहार्थमहमात्मनोंऽशं द्विधा विभज्य विकटवर्मनाम्ना मिथिलापतिप्रहारवर्मात्मजोपहारवर्मात्मना च मर्त्यलोकेऽवतरिष्यामि । त्वं च कामरूपाधिपतेः कलिङ्गवर्मनाम्नः कन्या कल्पसुन्दरी नाम भूत्वा ज्यायसा मदंशेन विकटवर्मणा प्रथममन्वीयासमनेहसं भुक्त्वा तस्मिन्विकटवर्मणि मरणमुपगते पत्न्युपहारवर्मात्मकं कनीयांसं मदंशमुपलभ्य तेन साकं विविधसुखोपभोगमनुभाविष्यसि । तदयमर्थः । इत्यादि. ३ अहं च कार्द०. ४ उपसंहतनपस्कर. ५ अलङ्घयम.

पक्केष्टकचितेन गोपुरोपरितलाधिरोहिणा सोपानपथेन भुवमवातरम्। अवतीर्णश्च बकुलवीथीमतिक्रम्य चम्पकावलिवर्त्मना मनागिवोपसृत्योत्तराहि करुणं चक्रवाकमिथुनरवमशृणवम्। पुनरुदीचा पाटलिपथेन स्पर्शलभ्यविशालसौधकुड्योदरेण शरक्षेपमिव गत्वा पुनः प्राचा पिण्डीभाण्डीरखण्डमण्डितोभयपार्श्वेन सैकतपथेन किंचिदुत्तरमतिक्रम्य पुनरवाचीं चूतवीथीमगाहिषि। ततश्च गहनतरमुद्रोपरचितरत्नवेदिकं माधवीलतामण्डपमीषद्विवृतसमुद्गकोन्मिषितभासा दीपवर्त्या न्यरूपयम्। प्रविश्य चैकपार्श्वे फुल्लपुष्पनिरन्तरकुरण्टपोतपङ्क्तिभित्तिपरिगतं गर्भगृहम्, अवनिपतितारुणाशोकलतामयमभिनवकुसुमकोरकपुलकलाञ्छितं प्रत्यग्रप्रवालपटलपाटलं कपाटमुद्घाट्य प्राविक्षम्। तत्र चासीत्स्वास्तीर्णं कुसुमशयनम्, सुरतोपकरणवस्तुगर्भाश्च कमलिनीपलाशसंपुटाः, दन्तमयस्तालवृन्तः, सुरभिसलिलभरितश्च भृङ्गारकः। समुपविश्य मुहूर्तं

---

कृतेन। 'इष्टकेषीकामालानां चिततूलभारिषु' इति ह्रस्वता। गोपुरस्य पुरद्वारस्योपरितलं तत्राधिरोहो यस्येति। सोपानपथेन सोपानमार्गेणावातरम्। चम्पकावलिवर्त्मना चम्पकश्रेणिमार्गेण। मनागिवोपसृत्याल्पमिव गत्वा। उत्तराहीत्यव्ययमुत्तरस्यां दिशि दूरे इत्यर्थे। 'आहि च दूरे' इत्याहिप्रत्ययः। उदीचा उत्तरेणेत्यर्थः। पाटलिपथेन कृष्णवृन्तामार्गेण। सौधं राजसदनम्। कुड्यं भित्तिः। शरक्षेपमिव बाणक्षेपभूमिपर्यन्तमिव। प्राचा पूर्वेण। पिण्डी तगरः। 'पिण्डी स्यात्तगरेऽलाबूखर्जूरीभेदयोरपि।' इति विश्वः। अथ वा 'रक्ताशोके तु पिण्डी स्यात्' इति वैजयन्ती। भाण्डीरो मल्लिका। खण्डं समूहः। तेन मण्डितावुभौ पार्श्वौ यस्येति तेन। उत्तरमुत्तरप्रदेशम्। अवाचीं दक्षिणाम्। ततश्चेति। ईषदल्पम्। विवृत उद्घाटितः। समुद्गकः संपुटकः। उन्मिषितभासा निःसृतदीप्त्या। एकपार्श्वे एकस्मिन्भागे। फुल्लानि पुष्पाणि येषां ते फुल्लपुष्पाश्च ते निरन्तराश्च कुरण्टपोता अल्पपीतकुरबकाः। 'कुरण्टस्तु सुपीतकः' इत्यमरः। तेषां पङ्क्तिः सैव भित्तिस्तत्परिगतं तद्युक्तम्। गर्भगृहं गर्भागारम्। अवनिपतिताः पृथिव्यां लग्ना अरुणा आरक्ता अशोकलता अशोकशाखास्तन्मयम्। अभिनवा नूतनाः कुसुमकोरकाः पुष्पमुकुलास्त एव पुलकास्तैर्लाञ्छितं चिह्नितम्। प्रत्यग्रं नूतनं प्रवालपटलं पल्लवसमूहस्तेन पाटलं श्वेतरक्तम्। तत्र चेति। स्वास्तीर्णं सुष्ठ्वास्तरणं यस्मिंस्तत्। कुसुमशयनं पुष्पयुक्तं पर्यङ्कम्। सुरतार्थमुपकरणवस्तूनि गर्भे येषामिति। कमलिनीपलाशानां कमलिनीपत्राणाम्। संपुटा द्रोणाः। सुरभिसलिलं सुगन्धोदकं तेन भरितः पूरितः। भृङ्गारकः पात्रविशेषः।

---

१ रोहेण. २ विमलसौधकुट्टिमोदरेण. ३ अन्तरम्. ४ समुद्गकसंपुटको०. ५ शाखा. ६ विस्तीर्णम्. ७ पट्टनी०. ८ भृङ्गारः.

विश्रान्तः परिमलमतिशयवन्तमाघ्रासिषम् । अश्रौषं च मन्दमन्दं पदशब्दम् । श्रुत्वैव संकेतगृहान्निर्गत्य रक्ताशोकस्कन्धपार्श्वव्यवहिताङ्गयष्टिः स्थितोऽस्मि । सा च सुभ्रूरसुषीमकामा शनैरुपेत्य तत्र मामदृष्ट्वा बलवदव्यथिष्ट । व्यसृजच्च मत्तराजहंसीव कण्ठरागवल्गुगद्गदां गिरम्—'व्यक्तमस्मि विप्रलब्धा । नास्त्युपायः प्राणितुम् । अयि हृदय किमिदमकार्यं कार्यवदध्यवस्य तदसंभवेन किमेवमुत्ताम्यसि । भगवन्पञ्चबाण कस्तवापराधः कृतो मया यदेवं दहसि न च भस्मीकरोषि' इति । अथाहमाविर्भूय विवृतदीपभाजनः 'भामिनि ननु बह्वपराद्धं भवत्या चित्तजन्मनो यदमुष्य जीवितभूता रतिराकृत्या कदर्थिता, धनुर्यष्टिर्भ्रूलताभ्याम्, भ्रमरमालामयी ज्या नीलालकद्युतिभिः, अस्त्राण्यपाङ्गवीक्षितवृष्टिभिः, महारजनध्वजपटांशुकं दन्तच्छदमयूखजालैः, प्रथमसुहृन्मलयमारुतः परिमल-

'भृङ्गारः कनकालुका' इत्यमरः । रक्ताशोकस्कन्धस्य पार्श्वे व्यवहिताऽङ्गयष्टिर्येनेति सुषीमः शिशिरः कामो यस्याः सा । 'सुषीमः शिशिरो जडः' इत्यमरः । 'असुषीमकामा तीव्रमन्मथा' इति भूषणा । बलवदत्यर्थम् । अव्यथिष्ट । व्यथां प्रापेत्यर्थः । वल्गुः सुन्दरो गद्गदो यस्या तथा ताम् । विप्रलब्धा प्रतारिता । 'विप्रलब्धा प्रियं तत्रादृष्ट्वा संतापसंकुला' इति रसरत्नहारः—इति भूषणा । अयीति खेदोक्त्या कोमलामन्त्रणे । अध्यवस्य निश्चित्य । तदसंभवेन कार्यासंभवेन । उत्ताम्यस्युत्तमं भवसि । दहसि दाहमात्रं करोषि । परं तु न भस्मीकरोषीति । भस्मीकरणे दुःखानुभवव्यथा न स्यादिति भावः । अथाहमिति । आविर्भूय प्रकटीभूय । विवृतदीपभाजन उद्घाटितदीपपात्रः । भामिनीति सकोपकामिनीसंबोधनम् । 'कोपना सैव भामिनी' इत्यमरः । चित्तजन्मनो मदनस्य । यद्यस्मात् । अमुष्य चित्तजन्मनः । आकृत्या आकारेण कदर्थिताऽधिक्षिप्ता । ज्या मौर्वी । नीला श्यामा येऽलकाः कुन्तलास्तेषां द्युतिभिः कान्तिभिः । अपाङ्गवीक्षितं नेत्रप्रान्तदर्शनम् । तद्वृष्टिभिः । महारजनं कुसुम्भम् । 'स्यात्कुसुम्भं वह्निशिखं महारजनमित्यपि ।' इत्यमरः । तद्युक्तो यो ध्वजपटः पताकावस्त्रं तस्यांशुरेवांशुकम् । दन्तच्छद ओष्ठः । जालैः समूहैः । प्रथमसुहृन्मुख्यमित्रम् । परिमलपर्यायस्य सौगन्ध्यसमर्थेन । परभृतरुतं

१ सुषी (शी) मकामा. २ अध्यवसाय. ३ ०संभवे. ४ भूयो ०तिराकृत्या कर्शितवती. ५ धनुर्यष्टिम. ६ ०मयीं ज्याम्. ७ वीक्षितैः ८ सुहृदं मारुतम्.

पटीयसा निःश्वासपवनेन, परभृतरुतैमतिमञ्जुलैः प्रलापैः, पुष्पमयीं[2] पताकां भुजयष्टिभ्याम्, दिग्विजयारम्भपूर्णकुम्भमिथुनमुरोजकुम्भयुगलेन, क्रीडासरो नाभिमण्डलेन, संनाह्यरथैः श्रोणिमण्डलेन, भवरत्नतोरणस्तम्भयुगलमूरुयुगलेन, लीलाकर्णकिसलयं चरणतलप्रभाभिः । अतः स्थान एव त्वां दुनोति मीनकेतुः । मां पुनरनपराधमधिकमायासयतीत्येष एव तस्य दोषः । तत्प्रसीद सुन्दरि, जीवय मां जीवनौषधिभिरिवापाङ्गैरनङ्गभुजङ्गदष्टम् ।' इत्याश्लिष्टवान् । अरीरमं चानङ्गरागपेशलविशाललोचनाम् ।[4] अवसितार्थां चारक्तवलितेक्षणाम्, ईषत्स्वेदरेखोद्भेदजर्जरितकपोलमूलाम्, अनर्गलकेलप्रलापिनीम्, अरुणदशनकररुहार्पणव्यतिकराम्, अत्यर्थपरिश्लथाङ्गीमार्तामिव लक्षयित्वा मानसीं शारीरीं च धारणां शिथिलयन्नात्मानमपि तया समानाथमापादयम् । तत्क्षणविमुक्तसंगतौ रतावसानिकं विधिमनुभवन्तौ चिरपरिचिताविवातिगूढविश्रम्भौ क्षणमवातिष्ठावहि । पुनरहमुष्णमायतं च निःश्वस्य किंचिद्दीनदृष्टिः

कोकिलरवः । अतिमञ्जुलैरतिमनोज्ञैः । 'मनोज्ञं मञ्जु मञ्जुलम्' इत्यमरः । दिग्विजयारम्भे पूर्णकुम्भमिथुनं पूर्णघटद्वन्द्वम् । उरोजकुम्भौ स्तनकलशौ । संनाह्यरथः सग्रामार्थं सज्जीकृतो रथः । रत्नयुक्तौ तोरणस्तम्भौ तयोर्युगलम् । कर्णकिसलयं कर्णावतंसपल्लवम् । स्थाने युक्तमित्यर्थः । 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः । जीवनौषधिभिरिवापाङ्गैरित्यत्रोपमेयोपमानभावश्चन्द्रमुखवज्ज्ञेयः । **अरीरममिति** । अनङ्गरागेण मदनरागेण पेशले रम्ये विशाले लोचने यस्यास्ताम् । अवसितार्थां कृतार्थाम् । वलितं वक्रितमीक्षणमवलोकनं यस्याः । स्वेदरेखा घर्मराजिस्तस्या उद्भेदः प्रारम्भस्तेन जर्जरितं क्लिष्टं कपोलमूलं यस्यास्ताम् । अनर्गलोऽप्रतिहतः कलकलः कोलाहलस्तं प्रलपतीति ताम् । अरुणं यद्दशनकररुहं दन्तनखं तस्यार्पणं करणं तद्व्यतिकरो यस्याः । श्लथाङ्गीं निःसहावयवाम् । मानसीं शारीरीं च धारणाम् । 'शरीरधारणा यत्तु भौतिकं तु निरीक्षणम् । मानसं तु मुनीनां स्यादाश्रमेषु विसर्पणम् । अभ्यासं धारयेदेतौ यावत्स्यात्कृतिनिर्वृतिः ॥' इति वात्स्यायनीये कामशास्त्रे । तया नायिकया । समानार्थमापादयं समापादयम् । **तदिति** । विमुक्तौ च तौ संगतौ चेति । अनाश्लिष्टस्थिताविति भावः । रतावसानिकं सुरतान्तसमयोचितम् । विधिं व्यापारम् । अतिगूढविश्रम्भावतिगुप्तविश्वासौ । क्षणं किंचित्कालम् । आयतं दीर्घम् । प्रयातमेव गतमेव । गणय जानीही-

१ कुलम्. २ ० मयी पताकाम्. ३ ०यमण्डलम्. ४ अनङ्गरागाविष्टपेशलां विशाल०. ५ चिकुरैरीक्षणाम्. ६ कलकलप्रलापिनीम्. ७ अकरुण. ८ अतिरूढ. ९ तदाऽऽस्वयोर्वियोगकाले समुपायान् पुनरहमुष्णम्.

सचकितप्रसारिताभ्यां भुजाभ्यामेनामनतिपीडं परिष्वज्य नातिविशदमचुम्बिषम् । अश्रुमुखी तु सा 'यदि प्रयासि नाथ प्रयातमेव मे जीवितं गणय । नय मामपि । न चेदसौ दासजनो निष्प्रयोजनः' इत्यञ्जलिमवतंसतामनैषीत् । अवादिषं च ताम्—'अयि मुग्धे कः सचेतनः स्त्रियमभिकामयमानां नाभिनन्दति । यदि मदनुग्रहनिश्चलस्तवाभिसंधिराचराविचारं मदुपदिष्टम् । आदर्शय रहसि राज्ञे मत्सादृश्यगर्भं चित्रपटम् । आचक्ष्व च—'किमियमाकृतिः पुरुषसौन्दर्यस्य पारमारूढा न वा' इति । 'बाढमारूढा' इति नूनमसौ वक्ष्यति । ब्रूहि भूयः—'यद्येवम्, अस्ति काऽपि तापसी देशान्तरभ्रमणलब्धप्रागल्भ्या मम च मातृभूता । तयेदमालेख्यरूपं पुरस्कृत्याहमुक्ता—'सोऽस्ति तादृशो मन्त्रो येन त्वमुपोषिता पर्वणि विविक्तायां भूमौ पुरोहितैर्हुतमुक्ते सप्तार्चिषि नक्तमेकाकिनी शतं चन्दनसमिधः, शतमगुरुसमिधः, कर्पूरमुष्टीः, पट्टवस्त्राणि च प्रभूतानि हुत्वा भविष्यस्येवमाकृतिः । अथ चालयिष्यसि घण्टाम् । घण्टापुटक्वणिताहूतश्च भर्ता भवत्यै सर्वरहस्यमाख्याय निमीलिताक्षो यदि त्वामालिङ्गेत्, इयमाकृतिरमुमुपसंक्रामेत् । त्वं तु भविष्यसि यथा पुराकारैव । यदि भवत्यै भवत्प्रियाय चैवं

त्यर्थः । असौ मद्रूपः । निष्प्रयोजनोऽकिंचित्कर इति यावत् । अवतंसतां शिरोभूषणताम् । अभिकामयमानामभिकामयतेऽसौ तथा । स्वयमनुरक्तामित्यर्थः । यद्रीति । अभिसंधिरभिप्रायः । रहस्येकान्ते । मत्सादृश्यगर्भं मत्सदृशरूपयुक्तम् । इयमाकृतिश्चित्रपटस्था । काऽप्यपरिमितशक्तिः । देशान्तरभ्रमणेनानेकदेशगमनेन लब्धं प्रागल्भ्यं प्रगल्भता ययेति सा । तादृशः प्रभाववानित्यर्थः । उपोषिताऽऽहारवर्जिता । 'उपवासः स विज्ञेयः सर्वाहारविवर्जितः ।' इति स्मृतेः । पर्वण्यमावास्यादौ । विविक्तायां पूतायां विजनायां वा । 'विविक्तौ पूतविजनौ' इति कोशः । पूर्वं हुतः पश्चान्मुक्तस्तस्मिन् । सप्तार्चिष्यग्नौ । नक्तं रात्रौ । एकाकिनीत्यत्र 'एकादाकिनिच्चासहाये' इत्याकिनिच्प्रत्ययः । अद्वितीयेत्यर्थः । समिध इति द्वितीयाबहुवचनम् । कर्पूरमुष्टीः बद्धकरपरिमितकर्पूरानित्यर्थः । 'मुष्टिर्बद्धकरे' इति विश्वः । एवमाकृतिश्चित्रफलकलिखिताकृतिः । क्वणितं प्रतिशब्दः । 'क्वणितं प्रतिशब्दः स्याद्वीणानादः' इति । उपसंक्रामेत् । संक्रान्ता भविष्यतीत्यर्थः । पुराकारा पूर्वा-

१ परमा०. २ सर्वं रहस्यजातम्.

रोचेत, न चास्मिन्विधौ विसंवादः कार्यः' इति । वपुश्चेदिदं तवाभिमतं सह सुहृन्मन्त्रिभिरनुजैः पौरजानपदैश्च संप्रधार्य तेषामप्यनुमते कर्मण्यभिमुखेन स्थेयम्' इति । स नियतमभ्युपैष्यति । पुनरस्यामेव प्रमदवनवीथीशृङ्गाटिकायामाथर्वणिकेन विधिना संज्ञपितपशुनाऽभिहुत्य मुक्ते हिरण्यरेतसि तैद्धूमशमनेन संप्रविष्टेन मयाऽस्मिन्नेव लतामण्डपे स्थातव्यम् । त्वं पुनः प्रगाढाया प्रदोषवेलायामालपिष्यसि कर्णे कृतनर्मस्मिता विकटवर्माणम्—' ' धूर्तोऽसि त्वमकृतज्ञश्च । मदनुग्रहलब्धेनापि रूपेण लोकलोचनोत्सवायमानेन मत्सपत्नीरभिरमयिष्यसि । नाहमात्मविनाशाय वेतालोत्थापनमाचरेयम्' इति । श्रुत्वेदं त्वद्वचः स यद्वदिष्यति तन्मह्यमेकाकिन्युपागत्य निवेदयिष्यसि । ततः परमहमेव ज्ञास्यामि । मत्पदचिह्नानि चोपवने पुष्करिकया प्रमार्जय' इति । सा ' तथा ' इति शास्त्रोपदेशमिव मदुक्तमादृत्यातृप्तसुरतरागैव कथंकथमप्यगादन्तःपुरम् । अहमपि यथाप्रवेशं निर्गत्य स्वमेवावासमयासिषम् ।

अथ सा मत्तकाशिनी तथा तमर्थमन्वतिष्ठत् । अतिष्ठच्च तन्मते स दुर्मतिः । अभ्रमच्च पौरजानपदेष्वियमद्भुतायमाना वार्ता—' राजा

कृतिः । अस्मिन्विधौ अस्मिन्प्रयोजने । विसंवादः । 'विसंवादोऽन्यथाभावः' इति वैजयन्ती । अन्यथाभावो न कार्यः । अभिमतं समतम् । संप्रधार्य निश्चित्य । ' निर्णयः संप्रधारणम् ' इति । शृङ्गाटिकायामन्यचतुष्पथे । ' शृङ्गाटकचतुष्पथे ' इत्यमरः । आथर्वणिकेन पुरोहितेन । संज्ञपितो मारितो यः पशुस्तेन । ' संज्ञपितं विशसितं समालब्धम् ' इति वररुचिः । अभिहुत्य हुत्वा । हिरण्यरेतस्यग्नौ । त्वं पुनरिति । प्रगाढायामतिदृढायाम् । प्रदोषवेलायां रजनीमुखसमये । आलपिष्यसि वदिष्यसि । कृतं नर्मस्मितं परिहासहसितं ययेति सा । धूर्तो वञ्चकः । मदनुग्रहलब्धेन मत्प्रसादप्राप्तेन । लोकलोचनानां लोकनेत्राणामुत्सववदाचरतीति तथा तेन । वेतालोत्थापनं भूतविशेषोत्पादनम् । प्रमार्जय प्रोञ्छय । अतृप्तसुरतरागैवासंपूर्णसुरतेच्छैव । कथंकथमपि महता प्रबन्धेन । आवासं वसतिस्थानम् । अथेति । मत्तकाशिन्युत्तमाङ्गना । 'वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी' इत्यमरः । तमर्थं मदुपदिष्टं प्रयोजनम् । अन्वतिष्ठत् अकरोदित्यर्थः । स दुर्मतिर्विकटवर्मा । पौरजानपदेषु नागरिकलोकसंघेषु । अद्भुतायमाना आश्चर्यायमाणा ।

१ रोचेत. २ अङ्गजैः. ३ संमन्त्र्य. ४ कर्मण्यस्मिन्. ५ वीथी. ६ धूमपटलेन स ह
७ वह्गति

किल विकटवर्मा देवीमन्त्रबलेन देवयोग्यं वपुरासादयिष्यति । नूनमेवं विप्रलम्भो नातिकल्याणः । कैव कथा प्रमादस्य । स्वस्मिन्नेवान्तःपुरोपवने स्वाग्रमहिष्यैव संपाद्यः किलायमर्थः । तथा हि बृहस्पतिप्रतिमबुद्धिभिर्मन्त्रिभिरप्ययमभ्यूह्यानुमतः । यद्येवं भावि नान्यदतः परमस्ति किंचिदद्भुतम् । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।' इति प्रसृतेषु लोकप्रवादेषु प्राप्ते पर्वदिवसे प्रगाढाया प्रौढतमसि प्रदोषवेलायामन्तःपुरोद्यानादुदैरयद्धूर्जटिकण्ठधूम्रो धूमोद्गमः । क्षीराज्यदधितिलगौरसर्षपवसामांसरुधिराहुतीनां च परिमलः पवनानुसारी दिशि दिशि प्रावात्सीत् । प्रशान्ते च सहसा धूमोद्गमे तस्मिन्नहमविशम् । निशान्तोद्यानमागमच्च गजगामिनी । आलिङ्ग्य च मां सस्मितं समभ्यधत्त—'धूर्त सिद्धं ते समीहितम् । अवसितश्च पशुरसौ । अमुष्य प्रलोभनाय त्वदादिष्टया दिशा मयोक्तम्—'कितव न साधयामि ते सौन्दर्यम् । एवं सुन्दरो हि त्वमप्सरसामपि स्पृहणीयो भविष्यसि किमुत मानुषीणाम् । मधुकर

---

नूनं ध्रुवमेव विप्रलम्भो वञ्चना न किं त्वतिकल्याणः अतिशुभः । कैव कथा प्रमादस्य प्रमादः कथमपि न स्यादित्यर्थः । स्वाग्रमहिषी । 'कृताभिषेका महिषी' इत्यमरः । तथा हीति । बृहस्पतिप्रतिमा गुरुसमाना बुद्धिर्येषामिति तैः । अभ्यूह्य वितर्क्य । भावि भविष्यत् । प्रसृतेष्वितस्ततो गतेषु । लोकप्रवादेषु जनवार्तासु । प्राप्ते पर्वदिवसेऽमावास्यायाम् । प्रौढतमसि गाढतमसि । अन्तःपुरस्योद्यानमुपवनम् । उदैरयदुदगच्छत् । धूर्जटिकण्ठवद् धूम्रः कृष्णलोहितः । धूमोद्गमो धूमप्रारम्भः । क्षीरेति । आज्यं घृतम् । तिलाश्च गौरसर्षपाः सिद्धार्थाश्च । 'सिद्धार्थस्त्वेष धवलः' इत्यमरः । वसा वपा । रुधिरं चैतेषामाहुतीनाम् । परिमलो गन्धः । पवनानुसारी यथावायुगामी । दिशि दिशि प्रतिदिशम् । प्रावात्सीत् । आगच्छदित्यर्थः । प्रशान्ते विनष्टे । निशान्तोद्यानं गृहोपवनम् । 'निशान्तवस्त्यसदनम्' इत्यमरः । समभ्यधत्त । उवाचेत्यर्थः । समीहितमीप्सितम् । अवसितोऽवसानं प्राप्तः । पक्षे कृतनिश्चयः । अमुष्येति । त्वदादिष्टया दिशा । त्वदादिष्टेन मार्गेणेत्यर्थः । स्पृहणीयः

---

१ एष न विप्रलम्भोऽतिक०. २ अभ्युद्गमनः. ३ उदैरत. ४ चापप्रलोभनाय.

इव निसर्गचपलो यत्र क्वचिदासज्जति भवादृशो नृशंसः ' इति । तेन तु मे पादयोर्निपत्याभिहितम्—' रम्भोरु सहस्व मत्कृतानि दुश्चरितानि । मनसाऽपि न चिन्तयेयमितः परमितरनारीम् । त्वरस्व प्रस्तुते कर्मणि ' इति । तदहमीदृशेन वैवाहिकेन नेपथ्येन त्वामभिसृतवती । प्रागपि रागाग्निसाक्षिकमनङ्गेन गुरुणा दत्तैव तुभ्यमेषा जाया । पुनरपीमं जातवेदसं साक्षीकृत्य स्वहृदयेन दत्ता ' इति प्रपदेन चरणपृष्ठे निष्पीड्योत्क्षिप्तपादपार्ष्णिरितरेतरव्यतिषक्तकोमलाङ्गुलिदलेन भुजलता-द्वयेन कंधरां ममावेष्ट्य सलीलमाननमानमय्य स्वयमुन्नमितमुखकमला विभ्रान्तविशालदृष्टिरसकृदभ्यचुम्बत् ।

अथैनाम् ' इहैव कुरण्टकगुल्मगर्भे तिष्ठ यावदहं निर्गत्य साधयेयं साध्यं सम्यक् ' इति विसृज्य तामुपसृत्य होमानलप्रदेशमशोकशाखावलम्बिनीं घण्टामचालयम् । अकूजच्च सा तं जनं कृतान्तदूतीवाह्वयन्ती । प्रावर्तिषि चाहमगुरु-चन्दनप्रमुखानि होतुम् । आयासीच्च राजा यथोक्तं देशम् । शङ्का-

अभिलषणीयः । यत्र क्वचिद्यत्र कुत्रापि । आसज्जत्यासक्तो भवति । नृशंसः क्रूरः । प्रस्तुत उपक्रान्ते । वैवाहिकेन विवाहसंबन्धिना । नेपथ्येन वेषेण । राग एवाग्निः रागाग्निरिच्छाग्निः । गुरुणा पितृभूतेनेत्यर्थः । जातं वेदो धनं यस्मात् जातं वेत्ति वेदयते वा इति जातवेदाः तं जातवेदसमग्निम् । प्रपदं पादाग्रम् । ' पादाग्रं प्रपदम् ' इत्यमरः । उत्क्षिप्तेति । ' पादोत्क्षेपणादेव पार्ष्ण्युत्क्षेपेऽपि गोबलीवर्दन्यायात्पृथगुक्तिः ' इति भूषणा । इतरेतरं परस्परम् । व्यतिषक्तं मिलितम् । इतरेतरं व्यतिषिक्तानि कोमलाङ्गुलिदलानि यस्य तेन । कंधरां ग्रीवाम् । अथेति । कुरण्टकाः पीतकुरवकाः । ' तत्र शोणे कुरबकस्तत्र पीते कुरण्टकः ' इत्यमरः । तेषां गुल्मः स्तम्बः । ' अप्रकाण्डे स्तम्बगुल्मौ ' इत्यमरः । साध्यं कार्यम् । अचालयं चालितवानस्मि । तं जनं विकटवर्मरूपम् । कृतान्तदूतीव यमदूतीव । प्रावर्तिषि प्रवृत्तोऽभवम् । आयासीदिति । अत्र कामन्दकः—' न हि देवीगृहं गच्छेदात्मीयात्संनिवेशनात् । अत्यन्तवल्लभोऽपीह विश्वासं स्त्रीषु न व्रजेत् ॥ देवीगृह-

१ निसर्गचापलात्. २ दुश्चरित्राणि. ३ प्रकृत. ४ पादाग्रेण. ५ लतेन. ६ अगरु.

पन्नमिव किंचित्सविस्मयं विचार्य तिष्ठन्तमब्रवम्—'ब्रूहि सत्यं भूयोऽपि मे भगवन्तं चित्रभानुमेव साक्षीकृत्य । न चेदनेन रूपेण मत्सपत्नीरभिरमयिष्यसि ततस्त्वयीदं रूपं संक्रामयेयम्' इति । स तदैव देव्येवेयम्, नोपधिः, इति स्फुटोपजातसंप्रत्ययः प्रावर्तत शपथाय । स्मित्वा पुनर्मयोक्तम्—'किं वा शपथेन । कैव हि मानुषी मां परिभविष्यति । यद्यप्सरोभिः संगच्छसे, संगच्छस्व कामम् । कथय कानि ते रहस्यानि । तत्कथनान्ते हि त्वत्स्वरूपभ्रंशः' इति । सोऽब्रवीत्—'अस्ति वृद्धो मत्पितुः कनीयान्भ्राता प्रहारवर्मा । तं विषान्नेन व्यापाद्याजीर्णदोषं ख्यापयेयमिति मन्त्रिभिः सहाध्यवसितम् । अनुजाय विशालवर्मणे दण्डचक्रं पुण्ड्रदेशाभिक्रमणाय दित्सितम् । पौरवृद्धश्च पाञ्चालिकः परित्रातश्च सार्थवाहः खनतिनाम्नो यवनाद्वज्रमेकं वसुंधरामूल्यं लघीयसाऽर्घेण लभ्यमिति ममैकान्तेऽमन्त्रयेताम् । गृहपतिश्च ममान्तरङ्गभूतो जनपदमहत्तरः शतहलिरलीकवादशीलमवलेपवन्तं दुष्टग्रामण्यमनन्तसीरं जनपद-

---

गतं भ्राता भद्रसेनममारयत् । मातुः शय्यान्तरे लीनः कारूषं चौरसः सुतः ॥ लाजान्विषेण संयोज्य मधुनेति विलोभितम् । देवी तु काशिराजेन्द्रं निजघान रहोगतम् ॥ विषाक्तेन च सौवीरं मेखलामणिना नृपम् । नूपुरेण च वैरन्त्यं जारूषं दर्पणेन च ॥ वेण्यां शस्त्रं समाधाय तथैव च विदूरथम् । अहिंस्रत्तं परिहरेच्छत्रौ चापि प्रयोजयेत् ॥' इति । शङ्कापन्नमिव प्राप्तसंशयमिव । चित्रभानुमग्निम् । संक्रामयेयं योजयेयम् । उपधिः कपटम् । उपजातसंप्रत्ययः प्राप्तविश्वासः । कामं यथेष्टम् । विषान्नेन विषमिश्रेणान्नेन । अजीर्णदोषं विषूचिकाम् । अध्यवसितं निश्चितम् । दण्डचक्रं सेनाचक्रम् । 'दण्डो यमे मानभेदे लगुडे दमसैन्ययोः' इति विश्वः । पुण्ड्रदेशाभिक्रमणाय तद्देशग्रहणाय । दित्सितं दातुमभिलषितम् । पाञ्चालिकस्तन्नामा । सार्थवाहस्तन्नामा । वज्रं हीरकम् । गृहपतिर्ग्रामाध्यक्षः । 'ग्रामाध्यक्षो गृहपतिः' इति कोशः । अन्तरङ्गभूतः आत्मभूतः । जनपदमहत्तरो देशश्रेष्ठः । 'नीवृज्जनपदो देशविषयौ तूपवर्तनम्' इत्यमरः । शतहलिः शतं हला यस्येति तथा । अलीकवादशीलं मिथ्याभाषणस्वभावम् । अवलेपवन्तं सगर्वम् । दुष्टश्चासौ ग्रामणीश्च तम् । अनन्तसीरमेतन्नामकम् । जनपदकोपेन लोकक्रोधेन । दण्डधरः

---

१ निचाय्य. २ संक्रम०. ३ कनिष्ठः प्रहार०. ४ पुण्ड्राभियोगाय. ५ असमीति.

कोपेन घातयेयमिति दण्डधरानुद्धारकर्मणि मत्प्रयोगान्नियोक्तुमभ्युपागमत्। इत्थमिदमचिरप्रस्तुतं[1] रहस्यम्' इत्याकर्ण्य तम् 'इयत्तवायुः। उपपद्यस्व स्वकर्मोचितां गतिम्' इति च्छुरिकया द्विधाकृत्य कृत्तमात्रं[2] तस्मिन्नेव प्रवृत्तस्फीतसर्पिषि हिरण्यरेतस्यजुहवम्। अभूच्चासौ भस्मसात्। अथ स्त्रीस्वभावादीषद्विह्वलां हृदयवल्लभां समाश्वास्य हस्तकिसलयेऽवलम्ब्य गत्वा तद्गृहमनुज्ञयाऽस्याः सर्वाण्यन्तःपुराण्याहूय सद्य एव सेवां दत्तवान्। सविस्मितविलासिनीसार्थमध्ये कंचिद्विहृत्य कालं विसृष्टावरोधमण्डलस्तामेव संहतोरूमूरूपपीडं[3] भुजोपपीडं चोपगृह्य तल्पेऽभिरमयन्नल्पामिव तां निशामत्यनैषम्। अलभे च तन्मुखात्तद्राजकुलस्य शीलम्। उषसि स्नात्वा कृतमङ्गलो मान्त्रिभिः सह समगच्छे। तांश्चाब्रवम्—'आर्याः, रूपेणैव सह परिवृत्तो मम स्वभावः। य एष विषान्नेन हन्तुं चिन्तितः पिता मे स मुक्त्वा स्वमेतद्राज्यं[4] भूय एव ग्राहयितव्यः। पितृवदमुष्मिन्वयं शुश्रूषयैव वर्तामहे। न ह्यस्ति पितृवधात्परं पातकम्' इति। भ्रातरं च विशालवर्माणमाहूयोक्तवान्—'वत्स न सुभिक्षाः[5] सांप्रतं पुण्ड्राः। ते दुःखमोहोपहतास्त्यक्तात्मानो राष्ट्रं नः समृद्धमभिद्रवेयुः। अतो मुष्टिवधैः[6]

सेनापतिः। उद्धारकर्मणि निर्यातकर्मणि। नियोक्तुं नियोजयितुम्। उपपद्यस्व प्राप्नुहि। भस्मसाद्रक्षावशेषः। 'विभाषा साति कार्त्स्न्ये' इति सातिप्रत्ययः। हस्तकिसलये पाणिपल्लवे। सविस्मितः साश्चर्यः। विलासिनीसार्थः स्त्रीसमूहः। विसृष्टावरोधमण्डलो विसर्जितान्तःपुरस्त्रीसमूहः। तामेव कल्पसुन्दरीमेव। ऊर्वोरुरूपपीडा यत्रेति क्रियाविशेषणम्। 'सप्तम्यां चोपपीडरुध–' इति णमुल् इति तु भूषणा। भुजोपपीडं च गाढालिङ्गनपूर्वकमिति भावः। तान्मन्त्रिणः। परिवृत्तः परावृत्तिं प्राप्तः। "पितृवत् पितरीव। 'तत्र तस्येव' इति वतिः" इति भूषणा। अमुष्मिन्प्रहारवर्मणि। शुश्रूषया सेवया। सुभिक्षाः समृद्धान्नाः। नोऽस्माकम्। समृद्धं सस्यादिसंपन्नम्। मुष्टिवधो बीजप्रक्षेपघातः। सस्यवधः परिणत-

---

१ प्रसृतम्. २ कृत्तगात्रम्. ३ ऊरुपीडमुरुपीडं च. ४ स्वयमेव तद्राज्यम्. ५ सुभिक्षम् ६ वधैः.

सस्यवधो वा यदोत्पद्यते तदाऽभियास्यसि। नाद्य यात्रा युक्ता' इति। नगरवृद्धावप्यलापिषम्—'अल्पीयसा मूल्येन महार्हं वज्रवस्तु माऽस्तु मे लभ्यं धर्मरक्षायै, तदनुगुणेनैव मूल्येनादः क्रीयताम्' इति। शतहलिं च राष्ट्रमुख्यमाहूयाख्यातवान्—'योऽसावनन्तसीरः प्रहारवर्मणः पक्ष इति निनाशयिषितः, सोऽपि पितरि मे प्रकृतिस्थे किमिति नाश्येत, तत्त्वयाऽपि तस्मिन्संरम्भो न कार्यः' इति। त इमे सर्वमाभिज्ञानिकमुपलभ्य 'स एवायम्' इति निश्चिन्वाना विस्मयमानाश्च मां महादेवीं च प्रशंसन्तो मन्त्रबलानि चोद्घोषयन्तो 'बन्धनात्पितरौ निष्क्राम्य[3] स्वं राज्यं प्रत्यपादयन्। अहं च तया मे धात्र्या सर्वमिदं मम चेष्टितं रहसि पित्रोरवगमय्य प्रहर्षकाष्ठाधिरूढयोस्तयोः पादमूलमभजे। अभज्ये च यौवराज्यलक्ष्म्या तदनुज्ञातया। प्रसाधितात्मा देवपादविरहदुःखदुर्भगान्भोगान्निर्विशन्भूयोऽस्य पितृसखस्य सिंहवर्मणो लेख्याच्चण्डवर्मणश्चम्पाभियोगमवगम्य 'शत्रुवधो मित्ररक्षा चोभयमपि करणीयमेव' इत्यलघुना लघुसमुत्थानेन सैन्यचक्रेणाभ्यसरम्। अभूवं च भूमिस्त्वत्पादलक्ष्मीसाक्षात्क्रियामहोत्सवानन्दराशेः' इति।

श्रुत्वैतद्देवो राजवाहनः सस्मितमवादीत्—'पश्यत पारतल्पिकमुपधियुक्तमपि गुरुजनबन्धव्यसनमुक्तिहेतुतया दुष्टामित्रप्रमापणाभ्युपायतया राज्योपलब्धिमूलतया च पुष्कलावर्थधर्मावप्यरीरधत्।

धान्यच्छेदः। ''यानकालमाह याज्ञवल्क्यः—'यदा सस्यगुणोपेतं परराष्ट्रं तदा व्रजेत्' इति।'' इति भूषणा। नगरवृद्धौ पाञ्चालिकसार्थवाहौ। महार्हं बहुमूल्यम्। तदनुगुणेन वज्रमण्यनुकूलेन। पक्षः सहायः। निनाशयिषितो नाशयितुमिष्टः। प्रकृतिस्थे स्वराज्यस्थिते। तस्मिन्ननन्तसीरनाशे। संरम्भ आदरः। आभिज्ञानिकमभिज्ञानम्। स्वार्थे ठक्। महादेवीं राजपत्नीम्। उद्घोषयन्तः प्रकटयन्तः। प्रत्यपादयन्ददुः। प्रहर्षकाष्ठा संतोषमर्यादा। प्रसाधितात्मोपयुक्तबुद्धिः। देवस्त्वं राजवाहनः। दुर्भगान् विरसान्। निर्विशन्नुपभुञ्जन्। चम्पाभियोगं चम्पोपद्रावणम्। लघुसमुत्थानेन शीघ्रगामिना। अभ्यसरं गतवान्। भूमिः स्थानम्। त्वत्पादलक्ष्मीस्त्वच्चरणशोभा तस्याः साक्षात्क्रिया प्रत्यक्षीकरणं स एव महोत्सवः। पारतल्पिकं परस्त्रीगमनम्। कर्तृ। उपधियुक्तं कपटयुक्तम्। गुरुजनः पितृजनः। व्यसनं दुःखम्। प्रमापणं मरणम्। राज्योपलब्धिः राज्यप्राप्तिः। पुष्कलौ

१ यन्त्रमूः न्वहन्. २ मूल्येनादानं क्रियताम्. ३ निष्क्रमय्य.

किं हि बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम्' इति । अर्थपालमुखे निधाय स्निग्धदीर्घां दृष्टिम् 'आचष्टां भवानात्मीयचरितम्' इत्यादिदेश । सोऽपि बद्धाञ्जलिरभिदधे—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते उपहारवर्मचरितं नाम तृतीय उच्छ्वासः ।

---

## चतुर्थोच्छ्वासः ।

देव सोऽहमप्येभिरेव सुहृद्भिरेककर्मोर्मिमालिनेमिभूमिवलयं परिभ्रमन्नुपासरं कदाचित्काशीपुरीं वाराणसीम् । उपस्पृश्य मणिमञ्जनिर्मलाम्भसि मणिकर्णिकायामविमुक्तेश्वरं भगवन्तमन्धकमथनमभिप्रणम्य प्रदक्षिणं परिभ्रमन्पुरुषमेकमायामवन्तमायसपरिघपीवराभ्यां भुजाभ्यामाबध्यमानपरिकरमविरतरुदितोच्छूनताम्रदृष्टिमद्राक्षम् । अतर्कयं च—'कर्कशोऽयं पुरुषः, कार्पण्यमिव वर्षति क्षीणतारं चक्षुः, आरम्भश्च साहसानुवादी । नूनमसौ प्राणनिःस्पृहः किमपि कृच्छ्रं प्रियजनव्यसनमूलं प्रतिपित्सते । तत्पृच्छेयमेनमस्ति चेन्ममापि कोऽपि साहाय्यदानावकाशः तमेनमभ्युपेत्येत्यपृच्छम्—'भद्र संनाहोऽयं साहसमवगमयति । न चेद्गोप्यमिच्छामि श्रोतुं शोकहेतुम्' इति । स मां सबहुमानं

---

बहुतरौ । अरीरधदसाधयत् । 'राध साध संसिद्धौ' । अर्थपालो दशकुमारेष्वन्यतमः तस्य मुखे । अभिदधे वक्तुमुपचक्रमे ।

इति श्रीदशकुमारचरितटीकायां तृतीय उच्छ्वासः ।

---

देवेति । एककर्मा ऽनन्यकार्यः । कर्म च भवदन्वेषणम् । ऊर्मिमालिनेमिः समुद्रावधिका भूमिः । 'नेमिस्तु चक्रधारायां सीमधर्मोऽवस्थयोः' इत्यजयः । उपासरं गतवान् । उपस्पृश्य स्नात्वा । मणिभङ्गो रत्नशकलं तद्वन्निर्मलं शुद्धमम्भो जलं यस्यास्तथा ताम् । अन्धकमथनमन्धकासुरसंहारकं शिवम् । तदुक्तं-'स व्रजत्यन्धवत्तस्मादनन्धोऽपि हि भारत । तमन्धकोऽयं नाम्नेति प्रोचुस्तत्र निवासिनः ॥' इति । आयामो दैर्घ्यं तद्वन्तम् । आयसः अयोनिर्मितः परिघोऽर्गलः तद्वत्पीवराभ्यां मांसलाभ्याम् । 'कक्षाबन्धः परिकरः' इति वैजयन्ती । उच्छूना उन्नता । कर्कशः कठिनः । क्षीणा म्लाना तारका कनीनिका यस्येति । आरम्भ उद्योगः । साहसं महत्कर्म । तदनुवादी तद्बोधकः । "साहसानुवादी साहसस्य सदृशः । 'सदृक्सदृशसंवादी सजातीयानुवादिनः ।' इति दण्डी ।" इति भूषणा । कृच्छ्रं कष्टम् । प्रतिपत्स्यते प्राप्स्यति । तदिति । सहायस्य कर्म भावो वा साहाय्यम् । संनाहः परिकरः ।

---

१ बुद्धिमद्भिः प्र०. २ एतन्नास्ति क्वचित्. ३ म्लानतारम्. ४ प्रतिपत्स्यते. ५ साहाय्यावकाशः. ६ अभ्युपेत्य इति.

निर्वर्ण्य 'को दोषः श्रूयताम्' इति क्वचित्करवीरतले मया सह निषण्णः कथामकार्षीत्—'महाभाग सोऽहमस्मि पूर्वेषु कामचरः पूर्णभद्रो नाम गृहपतिपुत्रः। प्रयत्नसंवर्धितोऽपि पित्रा दैवच्छन्दानुवर्ती चौर्यवृत्तिरासम्। अथास्यां काशीपुर्यामर्यवर्यस्य कस्यचिद्गृहे चोरयित्वा रूपाभिग्राहितो बद्धः। वध्ये च मयि मत्तहस्ती मृत्युविजयो नाम हिंसाविहारी राजगोपुरोपरितलाधिरूढस्य पश्यतः कामपालनाम्न उत्तमामात्यस्य शासनाज्जनकण्ठरवद्विगुणितघण्टारवो मण्डलितहस्तकाण्डं समभ्यधावत्। अभिपत्य च मया निर्भयेन निर्भर्त्सितः परिणमन्दारुखण्डसुषिरानुप्रविष्टोभयभुजदण्डचण्डघट्टितप्रतिमानो भीतवन्न्यवर्तिष्ट। भूयश्च नेत्रा जातसंरम्भेण निकामदारुणैर्वागङ्कुशपादघातैरभिमुखीकृतः। मयाऽपि द्विगुणाबद्धमन्युना निर्भर्त्स्याभिहतो निवृत्यापाद्रवत्। अथ मयोपेत्य सरभसमाक्रुष्टो रुष्टश्च यन्ता 'हन्त

प्राणनिरपेक्षं कर्म साहसमुच्यते। गोप्यमप्रकाश्यम्। निर्वर्ण्य दृष्ट्वा। करवीरो वृक्षाविशेषः। पूर्वेषु पूर्वदेशेषु। कामचरः स्वेच्छागमनकर्ता। 'इषुकामेति देशस्य संज्ञा' इति भूषणा। गृहपतिर्ग्रामाध्यक्षः। दैवच्छन्दो दैववशः। अर्यवर्यस्य वैश्यश्रेष्ठस्य। 'स्यादर्यः स्वामिवैश्ययोः' इत्यमरः। रूपाभिग्राहितश्चौर्यवस्तुनाणकेन ग्राहितो धारितः। 'रूपं श्लोके यशोनाटकादौ सौन्दर्यशब्दयोः। ग्रन्थावृत्तौ तथाकारे स्वभावे नाणके मृगे॥' इति महीपः। 'लोप्त्रेण गृहीतः' इति भूषणा। राजद्वारस्य गोपुरं प्रतोली। 'गोपुरं हि प्रतोल्यां च नगरद्वारयोरपि' इति महीपः। उपरितलमूर्ध्वप्रदेशस्तत्राधिरूढस्य। जनकण्ठरवो लोकसांनिध्यशब्दः। 'कण्ठो गले संनिधाने ध्वनौ मदनपादपे' इति विश्वः। मण्डलितं मण्डलाकारं कृतं हस्तकाण्डं शुण्डादण्डः यस्यां क्रियायां इति क्रियाविशेषणम्। निर्भर्त्सितस्तर्जितः। परिणमंस्तिर्यग्दन्तप्रहारं कुर्वन्। 'तिर्यग्दन्तप्रहारस्तु गजः परिणतो मतः' इति हलायुधः। दारुखण्डं काष्ठखण्डं तस्य सुषिरं बिलं तत्रानुप्रविष्टावुभयभुजदण्डौ ताभ्यां चण्डं यथा तथा घट्टितं संघर्षितं प्रतिमानं यस्य। 'दन्तयोरुभयोर्मध्यं प्रतिमानं प्रचक्षते।' इति वैजयन्ती। नेत्रा आधोरणेन। जातसंरम्भेण जातक्रोधेन। निकामदारुणैरतिकठोरैः। अभिमुखीकृतः संमुखीकृतः। **मयाऽपीति**। द्विगुणाबद्धमन्युना द्विगुणितक्रोधेन। 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमरः। अभिहतस्ताडितः। निवृत्य परावृत्य। अपाद्रवत्पलायनपरोऽभूदित्यर्थः। **अथेति**। उपेत्य गत्वा। सरभसं सवेगम्। आक्रुष्ट आक्रोशं प्रापितः। निन्दित इत्यर्थः। यन्ता हस्तिपकः। अपसद

१ पूर्वेषुकाम०. २ अबध्ये. ३ बद्धे. ४ राजद्वारगोपु०. ५ ०काण्डः; मण्डलितकरः. ६ दण्डघट्टित. ७ भीत इव. ८ पादैः. ९ विवृत्य. १० अनुपत्य. ११ रुष्टः स.

मृतोऽसि कुञ्जरापसद' इति निशितेन वारणेन वारणं मुहुर्मुहुरभिघ्नन्निर्याणभागे कथमपि मदभिमुखमकरोत् । अथावोचम्—'अपसरतु द्विपकीट एषः । अन्यः कश्चिन्मातङ्गपतिरानीयताम्, येनाहं मुहूर्तं विहृत्य गच्छामि गन्तव्यां गतिम्' इति । दृष्ट्वैव स मां रुष्टमुद्गर्जन्तमुत्क्रान्तयन्तृनिष्ठुराज्ञः पलायिष्ट । मन्त्रिणा पुनरहमाहूयाभ्यधायिषि—'भद्र मृत्युरेवैष मृत्युविजयो नाम हिमाविहारी । सोऽयमपि तावत्त्वयैवंभूतः कृतः । तद्विरम्य कर्मणोऽस्मान्मलीमसात् । किमलमसि प्रतिपद्यास्मानार्यवृत्त्या वर्तितुम्' इति । 'यथाऽऽज्ञापितोऽस्मि' इति विज्ञापितोऽयं मया मित्रवन्मय्यवर्तिष्ट ।

पृष्टश्च मयैकदा रहसि जातविश्रम्भेणाभाषत स्वचरितम्—'आसीत्कुसुमपुरे राज्ञो रिपुंजयस्य मन्त्री धर्मपालो नाम विश्रुतधीः श्रुतर्षिः । अमुष्य पुत्रः सुमित्रो नाम पित्रैव समः प्रज्ञागुणेषु । तस्यास्मि द्वैमातुरः कनीयान्भ्राताऽहम् । वेशेषु विलसन्तं मामसौ विनयरुचिरवारयत् । अवार्यदुर्नयश्चाहमपसृत्य दिङ्मुखेषु भ्रमन्यदृच्छयाऽस्यां वाराणस्यां प्रमदवने मदनदमनाराधनाय निर्गत्य सह सखीभिः कन्दुकेनानुक्रीडमानां काशीभर्तुश्चण्डसिंहस्य कन्यां

---

अधम । 'निहीनोऽपसदो जाल्मः' इति वैजयन्ती । निशितेन तीक्ष्णेन । वारणेनाङ्कुशेन । वारणं गजम् । 'वारणस्तु गजे प्रोक्तो वारणं तन्निवारणे' इत्यजयः । निर्याणभागेऽपाङ्गदेशे । 'अपाङ्गदेशो निर्याणम्' इत्यमरः । द्विपकीटो हस्तिकीटः । गन्तव्यां प्राप्तव्यां गतिम् । मरणमित्यर्थः । स गजः । उद्गर्जन्तं दीर्घस्वरं वदन्तम् । उत्क्रान्ताऽतिक्रान्ता यन्तुराधोरणस्य निष्ठुरा क्रूरा आज्ञा येनेति । अभ्यधायिष्याभिहितः । मृत्युविजय एतन्नामा गजः । अस्मात्कर्मणश्चौर्यरूपात् । मलीमसान्मलिनात् । अलमसि शक्तोऽसि । आर्यवृत्त्या श्रेष्ठवृत्त्या । अयममात्यः । **मयेति** । रहसि एकान्ते । विश्रम्भो विश्वासः । **आसीदिति** । रिपुंजयस्यैतन्नाम्नः । श्रुतर्षिरधीतवेदः । "श्रुतऋषिः । 'ऋत्यकः' इति प्रकृतिभावः" इति भूषणा । प्रज्ञागुणेषु धीगुणेषु । ते गुणाः षट्—'शुश्रूषा ग्रहणं चैव श्रवणं चावधारणम् । ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥' इति कामन्दके । द्वैमातुरो द्वयोर्मात्रोरपत्यम् । द्विमातृज इत्यर्थः । 'मातुरुत्संख्या–' इत्युदादेशः । वेशेषु वेश्यासु । असौ सुमित्रनामा ज्येष्ठभ्राता । अवार्यदुर्नयोऽशार्यो दूरीकर्तुमशक्यो दुर्नयो दुर्नीतिर्यस्येति सः । दिङ्मुखेषु दिगन्तेषु । प्रमदवनेऽन्तःपुरोचितवने । 'स्यादेतदेव प्रमदवनमन्तःपुरोचितम् ।' इत्यमरः । मदनदमनः मदनशत्रुर्महादेवः । तदा-

---

१ द्विरदवराकः. २ उत्क्रामन्तम्. ३ मृत्युरिवैष. ४ यथाऽऽज्ञापयसि ५ नाम श्रुतऋषिः. वेदश्रुतऋषिः. ६ परिक्रीडमानाम्. ७ क्रीडमाना कन्या कान्तिमती नाम चकमे.

कान्तिमतीं नाम चकमे । कथमपि समगच्छे च । अथ च्छन्नं विहरता कुमारीपुरे सा मयाऽऽसीदापन्नसत्त्वा । कंचित्सुतं च प्रसूतवती । मृतजात इति सोऽपविद्धो रहस्यनिर्भेदभयात्परिजनेन क्रीडाशैले । शबर्या च श्मशानाभ्यासं नीतः । तयैव निवर्तमानया निशीथे राजवीथ्यामारक्षिकपुरुषैरभिगृह्य तर्जितया दण्डपारुष्यभीतया निर्भिन्नप्रायं रहस्यम् । राजाज्ञया निशीथेऽहमाक्रीडनगिरिदरीगृहे विश्रब्धप्रसुप्तस्तयोपदर्शितो यथोपपन्नरज्जुबद्धः श्मशानमुपनीय मातङ्गोद्यतेन कृपाणेन प्राजिहीर्ष्ये । नियतिबलाल्लूनबन्धस्तमसिमाच्छिद्यान्त्यजं तमन्यांश्च कांश्चित्प्रहृत्यापासरम् । अशरणश्च भ्रमन्नटव्यामेकदाऽश्रुमुख्या कयाऽपि दिव्याकारया सपरिचारया कन्ययोपास्थायिषि । सा मामञ्जलिकिसलयोत्तंसितेन मुखविलोलकुन्तलेन मूर्ध्ना प्रणम्य मया सह वनवटद्रुमस्य कस्यापि महतः प्रच्छायशीतले तले निषण्णा 'काऽसि वासु, कुतोऽस्यागता, कस्य हेतोरस्य मे प्रसीदसि' इति साभिलाषमाभाषिता मया वाङ्मयं मधुवर्षमवर्षत्—'आर्य, नाथस्य यक्षाणां मणिभद्रस्यास्मि दुहिता तारावली नाम । साऽहं कदाचिदगस्त्यपत्नीं लोपामुद्रां नमस्कृत्यापावर्तमाना मलयगिरेः परेतावासे वाराणस्याः कमपि दारकं रुदन्तमद्राक्षम् । आदाय चैनं तीव्रस्नेहान्मम

---

राधनाय तत्पूजनाय । चकमे अभिलषितवान् । अथेति । छन्नं गुप्तम् । आपन्नसत्त्वा जातगर्भा । 'आपन्नसत्त्वा स्याद्गुर्विण्यन्तर्वत्नी च गर्भिणी ।' इत्यमरः । अपविद्धस्त्यक्तः । रहस्यं गोप्यं तस्य निर्भेदः प्रकटीभावस्तस्माद्भयं भीतिस्तस्मात् । शबर्या भिल्लया । अभ्यासं समीपम् । आरक्षिकपुरुषैः संरक्षणकारकपुरुषैः । तर्जितया भीषितया । दण्डपारुष्यं मारणादि । निर्भिन्नप्रायं प्रकाशितप्रायम् । निशीथेऽर्धरात्रे । आक्रीडनगिरिदरीगृहे क्रीडापर्वतकन्दरायामित्यर्थः । यथोपपन्नरज्जुबद्धो यथाप्राप्तदोरकबद्धः । मातङ्गश्चण्डालः । कृपाणेन खड्गेन । प्राजिहीर्ष्ये प्रहर्तुमिष्टः । नियतिबलाददृष्टप्रभावात् । तमसिं मातङ्गकरकृपाणम् आच्छिद्यापहृत्य । अशरणो गृहरक्षकहीनः । दिव्यः स्वर्ग्य आकारो यस्यास्तया । परिचारः सेवा लक्षणया तदुपकरणानि तत्समेतया । उपास्थायिषि समीपवर्त्यासम् । अञ्जलिकिसलयोत्तंसितेनाञ्जलिपल्लवशिखरितेन । मुखे विलोलाः कुन्तलाः केशा यस्येति तथा तेन । वाङ्मयं वाक्प्रचुरम् । मधुवर्षं मधुवृष्टिम् । परेतावासे महाश्मशान इत्यर्थः । दारकं

---

१ सूतजातः. २ आक्रीड. ३ बन्धनः. ४ उदश्रुमुख्या. ५ सपरिवारया. ६ प्रणिपत्य. ७ नाथ. ८ वाराणस्याम्. ९ तीव्रस्नेहा.

पित्रोः संनिधिमनैषम्। अनैषीच्च मे पिता देवस्यालकेश्वरस्यास्थानीम्। अथाहमाहूयाज्ञप्ता हरसखेन—'बाले, बालेऽस्मिन्कीदृशस्ते भावः' इति। 'औरस इवास्मिन्वत्से वत्सलता' इति मया विज्ञापितः 'सत्यमाह वराकी' इति तन्मूलामतिमहतीं कथामकरोत्। तत्रैतावन्मयावगतम्। त्वं किल शौनकः शूद्रकः कामपालश्चाभिन्नः। बन्धुमती विनयवती कान्तिमती चाभिन्ना। वेदिमत्यार्यदासी[1] सोमदेवी चैकैव। हंसावली[2] शूरसेना[3] सुलोचना चानन्या। नन्दिनी रङ्गपताकेन्द्रसेना चापृथग्भूता। या किल शौनकावस्थायामग्निसाक्षिकमात्मसात्कृता गोपकन्या सैव किलार्यदासी पुनश्चाद्य तारावलीत्यभूवम्। बालश्च किल शूद्रकावस्थे त्वय्यार्यदास्यवस्थायां मय्युदभूत्। अवर्ध्यत च विनयवत्या स्नेहवासनया। स तु तस्यां कान्तिमत्यवस्थायामद्योदभूत्। एवमनेकमृत्युमुखपरिभ्रष्टं दैवान्मयोपलब्धं तमेकपिङ्गादेशाद्वने तपस्यतो राजहंसस्य देव्यै वसुमत्यै तत्सुतस्य भाविचक्रवर्तिनो राजवाहनस्य परिचर्यार्थं समर्प्य गुरुभिरभ्यनुज्ञाता कृतान्तयोगात्कृतान्तमुखभ्रष्टस्य[4] ते पादपद्मशुश्रूषार्थमागतास्मि' इति।

तच्छ्रुत्वा तामनेकजन्मरमणीमसकृदाश्लिष्य हर्षाश्रुमुखो मुहुर्मुहुः सान्त्वयित्वा तत्प्रभावदर्शिते महति मन्दिरेऽहर्निशं भूमिदुर्लभान्भो-

---

बालकम्। अलकेश्वरस्य कुबेरस्य। आस्थानीं सभाम्। 'आस्थानी क्लीबमास्थानम्' इत्यमरः। हरसखेन कुबेरेण। बाले कन्ये इति संबोधनं प्रथमम्। बालेऽस्मिन्निति अस्मिन्बालक इत्यर्थः। भावः स्नेहः। औरस उरसि भवस्तस्मिन्। पुत्र इति यावत्। वत्सलता स्नेहः। वराकी कृपार्हा। तन्मूलां बालकमूलाम्। तत्रेति। त्वं कामपालः। त्रिष्वपि जन्मसु नाम्नैव भिन्नः न तु स्वरूपेणेति। शौनकावस्थायां बन्धुमती वेदिमती हंसावली नन्दिन्यश्चतस्रः। शूद्रकावस्थायां विनयवत्यार्यदासी शूरसेना रङ्गपताका। कामपालावस्थायां कान्तिमती सोमदेवी सुलोचनेन्द्रसेना। एतास्तिस्रोऽभिन्नाः। एकरूपा इत्यर्थः। वेदिमतीप्रभृतयस्तिस्रोऽप्यभिन्नाः। हंसावलीप्रभृतयस्तिस्रोऽप्यभिन्नाः। नन्दिनीमुखाः तिस्रोऽप्यभिन्नाः। शौनकावस्थायाम्। आत्मसात्कृता परिणीतेत्यर्थः। अनेकमृत्युमुखेत्यत्र 'कान्तिमतीसखीभिः क्रीडागिरौ त्यक्तं शबर्या च श्मशाने' इति भूषणा। एकपिङ्गादेशात्कुबेरादेशात्। कृतान्तयोगाद्दैवयोगात्। कृतान्तमुखभ्रष्टस्य यमसुखनिर्गतस्य। 'कृतान्तो यमसिद्धान्तदैवाकुशलकर्मसु।' इत्यमरः। तत्प्रभावदर्शिते तारावलीसामर्थ्यप्रकटीकृते। अहर्निशं दिवारात्रम्।

---

१ अर्यवासी; यक्षदासी; यज्ञदासी. २ हंसावती. ३ सुरसेना. ४ परिभ्रष्टस्य. ५ इन्द्रदु०.

गमन्वभूवम् । द्वित्राणि दिनान्यतिक्रम्य मत्तकाशिनीं तामवादिषम्—'प्रिये प्रत्यपकृत्य मत्प्राणद्रोहिणश्चण्डसिंहस्य वैरनिर्यातनसुखमनुबुभूषामि' इति । तया सस्मितमभिहितम्—'एहि कान्त, कान्तिमतीदर्शनाय नयामि त्वाम्' इति । स्थितेऽर्धरात्रे राज्ञो वासगृहमनीये । ततस्तच्छिरोभागवर्तिनीमादायासियष्टिं प्रबोध्यैनं प्रस्फुरन्तमब्रवम्—'अहमस्मि भवज्जामाता भवदनुमत्या विना तव कन्याभिमर्शी । तमपराधमनुवृत्त्या प्रमार्ष्टुमागतः' इति । सोऽतिभीतो मामभिप्रणम्याह—'अहमेव मूढोऽपराद्धः, यस्तव दुहितृसंसर्गानुग्राहिणो ग्रहग्रस्त इवोत्क्रान्तसीमा समादिष्टवान्वधम् । तदास्ता कान्तिमती, राज्यमिदं मम च जीवितमप्यद्यप्रभृति भवदधीनम्[3]' इत्यवादीत् । अथापरेद्युः प्रकृतिमण्डलं संनिपात्य[4] विधिवदात्मजायाः पाणिमग्राहयत् । अश्रावयच्च तनयवार्तां तारावली कान्तिमत्यै, सोमदेवीसुलोचनेन्द्रसेनाभ्यश्च पूर्वजातिवृत्तान्तम् । इत्थमहं मन्त्रिपदापदेशं यौवराज्यमनुभवान्विहरामि विलासिनीभिः' इति ।

स एवं मादृशेऽपि जन्तौ परिचर्यानुबन्धी बन्धुरेकः सर्वभूतानामलसकेन स्वर्गते श्वशुरे, ज्यायसि च श्याले चण्डघोषनाम्नि स्त्रीष्वतिप्रसङ्गात्प्रागेव क्षयक्षीणायुषि, पञ्चवर्षदेशीयं सिंहघोषनामानं कुमार-

मत्तकाशिनीमुत्तमां स्त्रियम् । अवादिषमवोचम् । प्रत्यपकृत्य प्रत्यपकारं कृत्वेत्यर्थः । वैरनिर्यातनं वैरशुद्धिः । अनुबुभूषाम्यनुभवितुमिच्छामि । तया तारावल्या । वासगृहं गर्भागारम् । **तत इति** । एनं चण्डसिंहम् । प्रस्फुरन्तं कम्पमानम् । अनुवृत्त्या सेवया । प्रमार्ष्टुं दूरीकर्तुम् । अपराद्धः कृतापराधः । दुहितृसंसर्गानुग्राहिणः कन्यासंसर्गकृपाकर्तुः । उत्क्रान्तसीमोज्झितमर्यादः । कान्तिमती कन्या । **अथेति** । प्रकृतिमण्डलं प्रजासमूहम् । मन्त्रिपदस्यापदेशो मिषम् । स एवमिति पूर्णभद्रोक्तिः । परिचर्यानुबन्धी सेवानुबन्धी । अलसकेन क्षयेण । 'क्षयस्त्वलसको मतः' इति वैजयन्ती । ज्यायसि ज्येष्ठे । श्याले पत्नीभ्रातरि । 'श्यालाः स्युर्भ्रातरः पत्न्याः' इत्यमरः । अतिप्रसङ्गादतियोगादत्यन्तासक्तेरित्यर्थः । 'अतियोगवियोगाद्वा क्षयो भवति जन्मिनः' इति निदानम् । पञ्चवर्षदेशीयमीषदसमाप्तपञ्चवर्षवयसम् । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति देशीयप्रत्ययः । यौवनोन्मादिनस्तारुण्योन्मादवतः ।

१ अनीत्य. २ सोऽथ भीतः. ३ त्वदधीनम्. ४ संनिभाव्य.

मभ्यषेचयत् । अवर्धयच्च विधिनैनं स साधुः । तस्याद्य यौवनोन्मादिनः पैशुन्यवादिनो दुर्मन्त्रिणः कतिचिदासन्नन्तरङ्गभूताः । तैः किलासावित्थमग्राह्यत—'प्रसह्यैव स्वसा तवामुना भुजङ्गेन संगृहीता । पुनः प्रसुप्ते राजनि प्रहर्तुमुद्यतासिरासीत् । तेनास्मै तत्क्षणप्रबुद्धेन भीत्याऽनुनीय दत्ता कन्या । तं च देवज्येष्ठं चण्डघोषं विषेण हत्वा बालोऽयमसमर्थ इति त्वमद्यापि प्रकृतिविश्रम्भणायोपेक्षितः । क्षिणोति च पुरा स कृतघ्नो भवन्तम् । तमेवान्तकपुरमभिगमयितुं यतस्व' इति ।[1] स तथा दूषितोऽपि यक्षिणीभयान्नामुष्मिन्पापमाचरितुमशकत्[2] । एषु किल दिवसेष्वयथापूर्वमाकृतौ[3] कान्तिमत्याः समुपलक्ष्य राजमहिषी सुलक्षणा नाम समप्रागयमपृच्छत्—'देवि नाहमयथातथ्येन[4] विप्रलम्भनीया । कथय तथ्यं केनेदमयथापूर्वमाननारविन्दे[5] तवैषु वासरेषु' इति । सा त्ववादीत—'भद्रे स्मरसि किमद्याप्ययथातथ्येन किंचिन्मयोक्तपूर्वम् । सखी मे तारावली सपत्नी च किमपि कलुषिताशया रहसि भर्त्रा मद्गोत्रापदिष्टा प्रणयमभ्युपेक्ष्य[6] प्रणम्यमानाऽप्यस्माभिरुपोढमत्सरा प्रावसत् । अवसीदति च नः पतिः । अतो मे दौर्मनस्यम्' इति । तत्प्रायेणैकान्ते सुलक्षणया कान्ताय कथितम् ।

पैशुन्यं दौर्जन्यम् । दुष्टजनोचितमित्यर्थः । तद्वदन्तीति तथा । दुर्मन्त्रिणो दुष्टप्रधानाः । अन्तरङ्गभूता आप्ततराः । अग्राह्यत अबोध्यतेत्यर्थः । अमुनेति मामुद्दिश्योक्तिः । भुजङ्गेन विटेन । उद्यतासिरूर्ध्वीकृतखड्गः । अनुनीय सान्त्वयित्वा । विश्रम्भणं विश्वासः । क्षिणोति च पुरा । क्षयिष्यतीत्यर्थः । 'यावत्पुरानिपातयोर्लट्' । भवन्तं सिंहघोषम् । अभिगमयितुं प्रापयितुम् । दूषितो भेदितः । अमुष्मिन्कन्यादूषके । पापं हननरूपम् । अयथापूर्वमयथाभावम् । नवीनमित्यर्थः । आकृतौ शरीरे । यथातथं वास्तवं तस्याभावः तेन अयथातथ्येन । असत्येनेत्यर्थः । विप्रलम्भनीया प्रतारणीयेत्यर्थः । तथ्यं सत्यम् । सा कान्तिमती । भद्रे इति सुलक्षणासंबोधनम् । कलुषिताशया मलिनितबुद्धिः । मद्गोत्रापदिष्टा मन्नाम्नाऽऽहूता । 'गोत्रं नाम्नि कुलेऽचले' इति वैजयन्ती । प्रणयं प्रीतिम् । उपोढमत्सरा प्ररूढद्वेषा । दौर्मनस्यं दौश्चित्त्यम् । प्रायेण बाहुल्येन ।

१ वेवास्तत्क्षण. २ प्रभावात्; प्रभावभयात्. ३ अयथापूर्व्यम्. ४ अयाथातथ्येन. ५ आननारविन्दम्. ६ अभ्युपेक्ष्य.

अथासौ निर्भयोऽद्य प्रियतमाविरहपाण्डुभिरवयवैर्धैर्यस्तम्भिताश्रुपर्याकुलेन चक्षुषोष्मश्वासशोषिताभिरिवानतिपेशलाभिर्वाग्भिर्वियोगं दर्शयन्तं कथमपि राजकुले कार्याणि कारयन्तं, पूर्वसंकेतितैः पुरुषैरभिग्राह्यान्वयत् । तस्य किल स्थाने स्थाने दोषानुद्घोष्य तथोद्धरणीये चक्षुषी यथा तन्मूलमेवास्य मरणं भवेत्' इति । अतोऽत्रैकान्ते यथेष्टमश्रु मुक्त्वा तस्य साधोः पुरः प्राणान्मोक्तुकामो बध्नामि परिकरम्' इति ।

मयाऽपि तत्पितृव्यसनमाकर्ण्य पर्यश्रुणा सोऽभिहितः—'सौम्य, किं तव गोपायित्वा । यस्तस्य सुतो यक्षकन्यया देवस्य राजवाहनस्य पादशुश्रूषार्थं देव्या वसुमत्या हस्तन्यासः कृतः सोऽहमस्मि । शक्ष्यामि सहस्रमपि सुभटानामुदायुधानां हत्वा पितरं मोचयितुम् । अपि तु संकुले यदि कश्चित्पातयेत्तदङ्गे शस्त्रिकां सर्व एव मे यत्नो भस्मनि हुतमिव भवेत्' इति । अनवसितवचन एव मयि महानाशीविषः प्राकाररन्ध्रेणोदैरयच्छिरः । तमहं मन्त्रौषधिबलेनाभिगृह्य पूर्णभद्रमब्रवम्—'भद्र सिद्धं नः समीहितम् । अनेन तातमलक्ष्यमाणः संकुले यदृच्छया पतितेन नाम दंशयित्वा तथा विषं स्तम्भयेयं यथा मृत इत्युदास्येत । त्वया तु मुक्तसाध्वसेन माता मे बोधयितव्या—'यो यक्ष्या वने देव्या वसुमत्या हस्तार्पितो युष्मत्सूनुः सोऽनुप्राप्तः पितुरवस्थां मदुपलभ्य बुद्धिबलादित्थमाचरिष्यति । त्वया तु मुक्तत्रासया राज्ञे प्रेषणीयम्—'एष खलु

---

अर्थोत । 'अथ स्वस्त्रीमुखात्तारावलीकामपालयोर्वियोगश्रवणोत्तरम्' इति भूषणा । असौ राजा । धैर्येण स्तम्भितान्यश्रूणि तैः पर्याकुलेन । अनतिपेशलाभिरनतिकोमलाभिः । पूर्वसंकेतितैः प्रागेव मन्त्रितैः । अभिग्राह्य ग्राहयित्वा । उद्घोष्योद्घाष्य । उद्धरणीये निष्कासनीये । मोक्तुकामस्त्यक्तुकामः । 'लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि । समो वा हिततयोर्मांसस्य पचियुज्वञोः ॥' इति मकारलोपः । पर्यश्रुणा कृतरोदनेन । हस्तन्यासो हस्तनिक्षेपः । उदायुधानामुद्यतशस्त्राणाम् । संकुले संबाधे । तदङ्गे पितुरङ्गे । अनवसितवचनेऽसमाप्तवचने । आशीविषः सर्पः । आशिषि विषमस्य । पृषोदरादित्वाद्दीर्घसलोपौ । उदैरयत् । ऊर्ध्वमकरोदित्यर्थः । समीहितं वाञ्छितम् । यदृच्छया दैवेन । स्तम्भयेयं स्तम्भितं करिष्ये । त्वया पूर्णभद्रेण । मुक्तसाध्वसेन त्यक्तभयेन । मदुपलभ्य मत्तो ज्ञात्वा । निग्राह्यो निग्रहीतव्यः ।

---

१ निर्भरोद्यात्प्रिय॰. २ स्थानस्थानेषु. ३ दोषम्. ४ हस्ते न्यासः. ५ अपविध्येत; उत्सृजेत. ६ मुक्तसाध्वसया.

क्षत्रधर्मो यद्बन्धुरबन्धुर्वा दुष्टः स निरपेक्षं निग्राह्य इति । स्त्रीधर्मश्चैष यददुष्टस्य दुष्टस्य वा भर्तुर्गतिर्गन्तव्येति । तदहममुनैव सह चिताग्निमारोक्ष्यामि । युवतिजनानुकूलः पश्चिमो विधिरनुज्ञातव्यः' इति । स एवं निवेदितो नियतमनुज्ञास्यति । ततः स्वमेवागारमानीय काण्डपटीपरिक्षिप्ते विविक्तोद्देशे दर्भसंस्तरणमधिशाय्य स्वयं कृतानुमरणमण्डनया त्वया च तत्र संनिधेयम् । अहं च बाह्यकक्षागतस्त्वया प्रवेशयिष्ये । ततः पितरमुज्जीव्य तदभिरुचितेनाभ्युपायेन चेष्टिष्यामहे' इति । स 'तथा' इति हृष्टतरस्तूर्णमगमत् ।

अहं तु घोषणास्थाने चिञ्चावृक्षं घनतरविपुलशाखमारुह्य गूढतनुरतिष्ठम् । आरूढश्च लोको यथायथमुच्चैःस्थानानि । उच्चावचप्रलापाः प्रस्तुताः । तावन्मे पितरं तस्करमिव पश्चाद्बद्धभुजमुद्धुरध्वनिमहाजनानुयातमानीय मदभ्यास एव स्थापयित्वा मातङ्गस्त्रिरघोषयत्—'एष मन्त्री कामपालो राज्यलोभाद्भर्तारं चण्डसिंहं, युवराजं चण्डघोषं च विषान्नेनोपांशु हत्वा पुनर्देवोऽपि सिंहघोषः पूर्णयौवन इत्यमुष्मिन्पापमाचरिष्यन्विश्वासाद्रहस्यभूमौ पुनरमात्यं शिवनागमाहूय स्थूणमङ्गारवर्षं च राजवधायोपजप्य तैः स्वामिभक्त्या विवृतगुह्यो राज्यकामुकस्य ब्राह्मणस्यान्धतमसप्रवेशो न्याय्य इति प्राड्विवाकवाक्यादक्ष्युद्धरणाय नीयते । पुनरन्योऽपि यदि स्यादन्याय-

युवतिजनानुकूलः स्त्रीलोकानुगुणः । 'अभिजनानुरूपः' इति पाठे वंशानुरूप इत्यर्थः । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः । पश्चिमश्चरमः । काण्डपटीपरिक्षिप्ते तिरस्करिणीपरिवृते । 'अपटी काण्डपटः स्यात्प्रतिसीरा जवन्यपि । तिरस्करिणी' इति हैमः । दर्भसंस्तरणं दर्भास्तरणम् । बाह्यकक्षा बहिःप्रकोष्ठः । तदभिरुचितेन पितुरभिमतेन । स पूर्णभद्रः । तूर्णं सत्वरम् । अहमिति । घोषणास्थाने डिण्डिमस्थले । गूढतनुर्गुप्तशरीरः । उच्चावचप्रलापा उच्चनीचवचनानि । उद्धुरध्वनीति क्रियाविशेषणं महाजनविशेषणं वा । मदभ्यासे मत्समीपे । मातङ्गश्चण्डालः । उपांशु रहसि । अमुष्मिन्सिंहघोषे । शिवनागं तन्नामानम् । स्थूणमङ्गारवर्षं चेति द्वावप्यमात्यौ । उपजप्य भेदं कृत्वा । तैर्मन्त्रिभिः । विवृतगुह्यः प्रकटीकृतमन्त्रः । अन्धं च तत्तमश्चान्धतमसम् । 'अवसमन्धेभ्यस्तमसः' इत्यच् । प्राड्विवाको व्यवहारनिर्णायकः । 'द्रष्टरि व्यवहाराणां प्राड्विवाकाक्षदर्शकौ' इत्यमरः । अक्ष्युद्धरणाय

१ अभिजनानुरूपः. २ पट. ३ लम्बघनतर. ४ उच्चस्था०. ५ प्रलापः प्रास्थितः ६ अभ्याशे. ७ त्रिरेण.

वृत्तिस्तमप्येवमेव यथार्हेण दण्डेन योजयिष्यति देवः ' इति । श्रुत्वै-तद्धद्धकलकले महाजनें पितुरङ्के प्रदीप्तशिरसमाशीविषं न्यक्षिपम् । अहं च भीतो नामावप्लुत्य तत्रैव जनानुलीनः क्रुद्धव्यालदष्टस्य तातस्य विहितजीवरक्षो विषं क्षणादस्तम्भयम् । अपतच्च सं भूमौ मृतकल्पः । प्रालपं च—' सत्यमिदं राजावमानिनं दैवो दण्ड एव स्पृशतीति । यदयमक्षिभ्यामवनिपेन विनाचिकीर्षितः प्राणैरेव वियोजितो विधिना ' इति । मदुक्तं च केचिदन्वमन्यन्त, अपरे पुनर्निन्दुः । दर्वीकरस्तु तमपि चण्डालं दष्ट्वाऽऽरूढत्रासद्रुतलोकदत्तमार्गः प्राद्रवत् ।

अथ मदम्बा पूर्णभद्रबोधितार्था तादृशेऽपि व्यसने नातिविह्वला कुलपरिजनानुयाता पद्भ्यामेव धीरमागत्य मत्पितुरुत्तमाङ्गमुत्सङ्गे धारयन्त्यासित्वा राज्ञे समादिशत्—' एष मे पतिस्तवापकर्ता न वेति दैवमेव जानाति । न मेऽनयाऽस्ति चिन्तया फलम् । अस्य तु पाणिग्राहकस्य गतिमननुप्रपद्यमाना भवत्कुलं कलङ्कयेयम् । अतोऽनुमन्तुमर्हसि भर्त्रा सह चिताधिरोहणाय माम् ' इति । श्रुत्वा चैतत्प्रीतियुक्तः समादिक्षत्क्षितीश्वरः—' क्रियतां कुलोचितः संस्कारः । उत्सवोत्तरं च पश्चिमं विधिसंस्कारमनुभवतु स भागिनीपतिः ' इति । चण्डाले तु मत्प्रतिषिद्धसकलमन्त्रवादिप्रयासे संस्थिते ' कामपालोऽपि कालदष्ट एव ' इति स्वभवनोपनयनममुष्य स्वमाहात्म्यप्रकाशनाय महीपतिरन्वमंस्त । आनीतश्च

नेत्रोत्पाटनाय । अन्यायवृत्तिरन्यायकर्ता । आशीविष सर्पम् । भीतो नाम मिथ्यैव भयं प्राप्त इति । अवप्लुत्योड्डीय । जनादनुलीनो लोकाद्गुप्तः । ' अन्तर्धौ येनादर्शनमिच्छति ' इत्यपादानम् । अस्तम्भयं स्तम्भितवान् । देवानामयं दैवः । अवनिपेन राज्ञा । अक्षिभ्यां विना हृतनयन इत्यर्थः चिकीर्षितः कर्तुमिष्टः । दर्वीकारः फणा एव करो यस्य प्रहारसाधनत्वात् । दर्वीं फणां करोतीति वा दर्वीकरः सर्पः । रूढो जातस्त्रासो भयं तेन द्रुतः पलायितो यो लोकस्तेन दत्तो मार्गो यस्येति स तथा । **अथेति** । व्यसने दुःखे । नातिविह्वला नातिव्याकुला । उत्तमाङ्गं शिरः । अननुप्रपद्यमानाऽप्राप्तवती । कलङ्कयेयं कलङ्कितं कारयिष्यामि । समादिक्षत् । आज्ञापयामासेत्यर्थः । मन्त्रवादिनां गारुडिकानाम् । संस्थिते मरणं प्राप्ते । कालदष्टो मृत इति यावत् । अमुष्य कामपालस्य । स्वमाहात्म्यप्रकाशनाय स्वधार्मिकत्वकीर्तिप्राकट्यार्थम् ।

१ शिरसम्. २ न्यक्षि°. ३ जनादनुलीनः, जनद्रुपलीनः. ४ एष. ५ अल्पपरिजना°. ६ सधीरम्. ७ समदिशत. ८ दैवो जानाति. ९ प्रतिसमादिशत. १० उत्सवान्तरम्. ११ नीतश्च.

पिता मे विविक्तायां भूमौ दर्भशय्यामधिशय्य स्थितोऽभूत्। अथ मदम्बा मरणमण्डनमनुष्ठाय सकरुणं सखीरामन्त्र्य मुहुरभिप्रणम्य भवनदेवतां यत्नैनिवारितपरिजनाक्रन्दिता पितुर्मे शयनस्थानमेकाकिनी प्राविक्षत्। तत्र च पूर्वमेव पूर्णभद्रोपस्थापितेन च मया वैनतेयतां गतेन निर्विषीकृतं भर्तारमैक्षत। हृष्टतमा पत्युः पादयोः पर्यश्रुमुखी प्रणिपत्य मां च मुहुर्मुहुः प्रस्नुतस्तनी परिष्वज्य सहर्षबाष्पगद्गदमगदत्—'पुत्र योऽसि जातमात्रः पापया मया परित्यक्तः स किमर्थमेवं मामतिनिर्घृणामनुगृह्णासि। अथ वैष निरपराध एव ते जनयिता। युक्तमस्य प्रत्यानयनमन्तकाननात्। क्रूरा खलु तारावली या त्वामुपलभ्यापि तत्त्वतः कुबेराद् असमर्प्य मह्यमर्पितवती देव्यै वसुमत्यै। सैव वा सदृशकारिणी। न हि तादृशाद्भाग्यराशेर्विना मादृशो जनोऽल्पपुण्यस्तवार्हति कलप्रलापामृतानि कर्णाभ्यां पातुम्। एहि परिष्वजस्व' इति भूयो भूयः शिरसि जिघ्रन्त्यङ्कमारोपयन्ती तारावलीं गर्हयन्ती आलिङ्गयन्त्यश्रुभिरभिषिञ्चन्ती चोत्कम्पिताङ्गयष्टिरन्यादृश्येव क्षणमजनिष्ट। जनयिताऽपि मे नरकादिव स्वर्गम्, तादृशाद्व्यसनात्तथाभूतमभ्युदयमारूढः पूर्णभद्रेण विस्तरेण यथावृत्तान्तमावेदितो भगवतो मघवतोऽपि भाग्यवन्तमात्मानमजीगणत्। मनागिवै च मत्संबन्धमाख्याय हर्षविस्मितात्मनोः पित्रोरकथयम्—'आज्ञापयतं काऽद्य नः प्रतिपत्तिः।' पिता मे प्राब्रवीत्—'वत्स

---

अन्वमंस्तानुमोदितवान्। विविक्तायां विजनायाम्। अथेति। मरणमण्डनं मरणकालोचितभूषणम्। वैनतेयतां गरुडताम्। प्रस्नुतस्तनी स्रवत्पयःस्तनी। जात उत्पन्न एव जातमात्रः। निर्घृणां निष्कृपाम्। प्रत्यानयनं परावृत्यानयनम्। अन्तकाननाद्यममुखात्। क्रूरा कठिना। सदृशकारिणी युक्तकारिणी। कलो मञ्जुलो यः प्रलापः शिशुशब्दः स एवामृतम्। गर्हयन्ती निन्दन्ती। उत्कम्पिताङ्गयष्टिर्जातोत्कम्पशरीरा। अन्यादृश्येवान्यसमा। 'त्यदादिषु दृशोऽनालोचने कञ्च' इति सूत्रे 'समान्ययोश्च' इति वक्तव्यात् दृशेः कञ्। 'आ सर्वनाम्नः' इत्यात्वम्। तादृशाद्व्यसनान्नेत्रोत्पाटनादिरूपाद् दुःखात्। तथाभूतं पुनर्जीवनपुत्रमिलनरूपम्। मघवत इन्द्रादपि भाग्यवन्तम्। मनागल्पम्। हर्षेण विस्मित आत्मा ययोः। प्रतिपत्तिः कर्तव्यता।

---

१ संस्तरमधिशयानः. २ यत्नेन निवार्य परिजनाक्रन्दितानि. ३ अस्मादृशः. ४ अन्यादृशीव. ५ एव.

गृहमेवेदमस्मदीयमतिविशालप्राकारवलयमक्षय्यायुधस्थानम् । अलङ्घ्यतमा च गुप्तिः । उपकृताश्च मयाऽतिबहवः सन्ति सामन्ताः । प्रकृतयश्च भूयस्यो न मे व्यसनमनुरुध्यन्ते । सुभटानां चानेकसहस्रमस्त्येव ससुहृत्पुत्रदारम् । अतोऽत्रैव कतिपयान्यहानि स्थित्वा बाह्याभ्यन्तरङ्गान्कोपानुत्पादयिष्यामः । कुपितांश्च संगृह्य प्रोत्साह्यास्य प्रकृत्यमित्रानुत्थाप्य सहजांश्च द्विषः दुर्दान्तमेनमुच्छेत्स्यामः ' इति । ' को दोषः । तथाऽस्तु ' इति तातस्य मतमन्वमंसि ।

तथाऽस्मासु प्रतिविधाय तिष्ठत्सु राजाऽपि विज्ञापितोदन्तो जातानुतापः पारग्रामिकान्प्रयोगान्प्रायः प्रायुङ्क्त । ते चास्माभिः प्रत्यहमहन्यन्त । अस्मिन्नेवावकाशे पूर्णभद्रमुखाच्च राज्ञः शय्यास्थानमवगम्य तदैव स्वोदवसितभित्तिकोणादारभ्योरगास्येन सुरङ्गामकार्षम् । गता च सा भूमिस्वर्गकल्पमनल्पकन्यकाजनं कमप्युद्देशम् । अभ्यषिष्ट च दृष्ट्वैव स मां नारीजनः । तत्र काचिदिन्दुकलेव स्वलावण्येन रसातलान्धकारं निर्धुनाना विग्रहिणीव देवी विश्वंभरा हरगृहिणीवासुरविजयायावतीर्णा पातालमागता गृहिणीव भगवतः कुसुमधन्वनः राजलक्ष्मीरिवानेकदुर्नृपदर्शनपरिहाराय महीविवरं प्रविष्टा निष्टप्तकनकपुत्रिकेवावदातकान्तिः कन्यका चन्दनलतेव मलयमारुतेन मद्दर्शनेनोदकम्पत । तथाभूते च तस्मिन्नङ्गना-

---

अतिविशालप्राकारवलयमतिविस्तीर्णवरणभित्तिमण्डलम् । अक्षय्यायुधस्थानमपरिमितायुधगृहम् । गुप्तिर्गोपनम् । प्रकृतयः प्रजाः । सुभटानां वीराणाम् । सुहृदः संबन्धिनः दाराः स्त्रियस्तैः सह वर्तमानम् । बाह्याभ्यन्तरङ्गान्बहिरङ्गानन्तरङ्गांश्च । प्रोत्साह्य प्रोत्साहवतो विधाय । दुर्दान्तं दुःखेन दमनीयम् । तथेति । प्रतिविधाय प्रतिविधानं कृत्वा । उदन्तो वार्ता । पारग्रामिकान्परग्रामे भवान् । प्रयोगान् कटकप्रेषणादिरूपान् । अत्र मिताक्षरायां विज्ञानेश्वरः—' उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् । दूषयेच्चास्य सततं यवसान्नोदकेन्धनम् ॥ ' इति । प्रायो बहुलान् । ' बहुलं प्रयुक्तवानित्यर्थः ' इति भूषणा । अवकाशेऽवसरे । स्वोदवसितं स्वगृहम् । भूम्यां स्वर्गः भूमिस्वर्गः तस्मादीषन्न्यूनः भूमिस्वर्गकल्पः तम् । अनल्पः कन्यकाजनः यस्मिन् तम् । उद्देशं प्रदेशम् । रसातलान्धकारं पातालान्धकारम् । ' निर्धुनाना अतितरां निरस्यन्ती ' इति भूषणा । विग्रहिणी शरीरधारिणी । विश्वंभरा पृथ्वी । हरगृहिणीव दुर्गेव । दुर्नृपदर्शनपरिहाराय दुष्टराजावलोकनपरिहाराय । निष्टप्ता संतापिता । कनकपुत्रिका सुवर्णपुत्तलिका । अङ्गनासमाजे स्त्रीसमूहे । ' पशूनां समजोऽन्येषु

---

१ शाल. २ आयुधग्रामम्. ३ प्राक्तनानमि०. ४ आत्मना०. ५ निधुन्वाना. ६ वसुंधरा.

समाजे कुसुमितेव काशयष्टिः पाण्डुशिरसिजा स्थविरा काचिच्चरणयोर्मे निपत्य त्रासदीनमब्रूत—'दीयतामभयदानमस्मा अनन्यशरणाय स्त्रीजनाय । किमसि देवकुमारो दनुजयुद्धतृष्णया रसातलं विविक्षुः । आज्ञापय कोऽसि कस्य हेतोरागतोऽसि' इति । सा तु मया प्रत्यवादि—'सुदत्यः मा स्म भवत्यो भैषुः । अहमस्मि द्विजातिवृषात्कामपालाद्देव्यां कान्तिमत्यामुत्पन्नोऽर्थपालो नाम । सत्यर्थे निजगृहान्नृपगृहं सुरङ्गयोपसरन्निहान्तरे वो दृष्टवान् । कथयत काः स्थ यूयं, कथमिह निवसथ' इति । सोदञ्जलिरुदीरितवती—'भर्तृदारक भाग्यवत्यो वयं यास्त्वामेभिरेव चक्षुर्भिरनघमद्राक्ष्म । श्रूयताम् । यस्तव मातामहश्चण्डसिंहः तेनास्यां देव्यां लीलावत्यां चण्डघोषः कान्तिमतीत्यपत्यद्वयमुदपादि । चण्डघोषस्तु युवराजोऽत्यासङ्गादङ्गनासु राजयक्ष्मणा सुरक्षयमगादन्तर्वत्न्यां देव्यामाचारवत्याम् । अमुया चेयं मणिकर्णिका नाम कन्या प्रसूता । अथ प्रसववेदनया मुक्तजीविताऽऽचारवती पत्युरन्तिकमगमत् । अथ देवश्चण्डसिंहो मामाहूयोपह्वरे समाज्ञापयत्—'ऋद्धिमति कन्यकेयं कल्याणलक्षणा । तामिमां मालवेन्द्रनन्दनाय दर्पसाराय विधिवद्वर्धयित्वा दित्सामि । बिभेमि च कान्तिमतीवृत्तान्तादारभ्य कन्यकानां प्रकाशावस्थापनात् । अत इयमरातिव्यसनाय कारिते महति भूमिगृहे कृत्रिमशैलगर्भोत्कीर्णनानामण्डपप्रेक्षागृहे प्रचुरपरिबर्हया भवत्या

समाजोऽथ सधर्मिणाम् ।' इत्यमरः । कुसुमिता संजातकुसुमा । काशयष्टिः 'सरस' इति प्रसिद्धा । पाण्डुशिरसिजा श्वेतकेशा । अनन्यशरणाय त्वदेकशरणायेत्यर्थः । दनुजा दैत्याः । विविक्षुः प्रवेष्टुमिच्छुः । कस्य हेतोः किमर्थमित्यर्थः । सुदत्य इति सर्वाभिप्रायेण संबोधनम् । शोभना दन्ता यस्याः सा सुदती । 'वयसि दन्तस्य दतृ' इति दत्रादेशः समासान्तः । द्विजातिवृषात् ब्राह्मणश्रेष्ठात् । सत्यर्थे कार्यवस्तुनि सतीत्यर्थः । सुरङ्गया भूम्यन्तर्मार्गेण । सा वृद्धा । उदञ्जलिः बद्धाञ्जलिः । उदीरितवत्युक्तवती । अनघं निष्पापम् । अद्राक्ष्म दृष्टवत्यः । उदपादि उत्पादितवान् । 'चिण् ते पदः' इति कर्तरि चिण् । राजयक्ष्मा क्षयरोगः । सुरक्षयं देवगृहम् । स्वर्गमित्यर्थः । अन्तर्वत्न्यां गर्भिण्याम् । अन्तरस्त्यस्यां गर्भः । 'अन्तर्वत्पतिवतोर्नुक्' इति साधुः । अथेति । उपह्वरे रहसि । विधिवद्विध्युक्तमार्गेण । दित्सामि दातुमिच्छामि । अरातिव्यसनाय । वैरिकृतदुःखायेत्यर्थः । कृत्रिमः शैलः पर्वतः तस्य गर्भो मध्यं तत्रोत्कीर्णा नाना मण्डपा यत्र तादृक् प्रेक्षागृहं नृत्यप्रेक्षणगृहम् । प्रचुरपरिबर्हया प्रचुरपरिवारया ।

१ विभयुः. २ वृषभात्. ३ इति प्राब्रवम्. ४ भट्टारक. ५ असुक्षयम्.

संवर्ध्यताम्। अस्त्यत्र भोग्यवस्तु वर्षशतोपभोगेनाप्यक्षय्यम्' इति। स तथोक्त्वा निजवासगृहस्य द्व्यङ्गुलभित्तावर्धपादं किष्कुविष्कम्भमुद्धृत्य तेनैव द्वारेण स्थानमिदमस्मानवीविशत्। इह च नो वसन्तीनां द्वादश समाः समत्ययुः। इयं च वत्सा तरुणीभूता। न चाद्यापि स्मरति राजा। काममियं पितामहेन दर्पसाराय संकल्पिता। त्वदन्वया कान्तिमत्या चेयं गर्भस्थैव द्यूतजिता स्वमात्रा तवैव जायात्वेन समकल्प्यत। तदत्र प्राप्तरूपं चिन्त्यतां कुमारेणैव' इति। तां पुनरवोचम्—'अद्यैव राजगृहे किमपि कार्यं साधयित्वा प्रतिनिवृत्तो युष्मासु यथार्हं प्रतिपत्स्ये' इति। तेनैव दीपदर्शितबिलपथेन गत्वा स्थितेऽर्धरात्रे तदर्धपादं प्रत्युद्धृत्य वासगृहं प्रविष्टो विश्रब्धसुप्तं सिंहघोषं जीवग्राहमग्रहीषम्। आकृष्य च तमहिमिवाहिशत्रुः स्फुरन्तममुनैव भित्तिरन्ध्रपथेन स्त्रैणसंनिधिमनैषम्। आनीय च स्वभवनमायसनिगडसंदितचरणयुगलम्, अवनमितमलिनवदनम्, अश्रुबहलरक्तचक्षुषमेकान्ते जनयित्रोर्ममादर्शयम्। अकथयं च बिलकथाम्। अथ पितरौ प्रहृष्टतरौ तं निकृष्टाशयं निशाम्य बन्धने नियम्य तस्या दारिकाया यथार्हेण कर्मणा मां पाणिमग्राहयेताम्। अनाथकं च तद्राज्यमस्मदायत्तमेव जातम्। प्रकृतिकोपभयात्तु मन्मात्रा मुमुक्षितोऽपि न मुक्त एव सिंहघोषः। तथास्थिताश्च वयमङ्गराजः

---

अस्तीति। भोग्यं वस्तु। भोगार्हमित्यर्थः। अक्षय्यमशक्यक्षयम्। 'क्षय्यजय्यौ शक्यार्थे' इति निपातः। द्व्यङ्गुलभित्तावङ्गुलद्वयपरिमाणायां भित्तौ। अर्धपादं प्रस्तरपिधानम्। किष्कुविष्कम्भं हस्तपरिणाहम्। वितस्तिपरिणाहं वा। 'किष्कुर्हस्ते वितस्तौ च' इत्यमरः। 'परिणाहस्तु विष्कम्भः' इति वैजयन्ती। अवीविशत् प्रवेशं कारयति स्मेत्यर्थः। समत्ययुरतिक्रान्ताः। प्राप्तरूपं प्रशस्ते प्राप्तं कर्तव्यम्। 'प्रशंसाया रूपप्'। यथार्हं यथायोग्यम्। प्रतिपत्स्ये वर्तिष्ये। जीवग्राहं जीवं गृहीत्वेति तथा। 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल्। अहिशत्रुर्गरुडः। स्त्रैणं स्त्रीणां समूहः। 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति समूहार्थे नञ्। अयः लोहं तस्येदमायसम्। निगडं शृङ्खला। संदितं बद्धम्। 'बद्धं निगडितं दितम्' इति वैजयन्ती। निकृष्टाशयं नीचचित्तम्। आयत्तमधीनम्। प्रकृतयः प्रजाः। मुमुक्षितोऽपि मोक्तुमिष्टोऽपि।

---

१ वर्षशतेन. २ तथोक्तम्. ३ अङ्गनभित्ता०. ४ ०प्रसुप्तम्. ५ संदानित. ६ नितरां हृष्टौ. ७ अनायकम्.

सिंहवर्मा देवपादानां भक्तिमान्कृतकर्मा चेत्यमित्राभियुक्तमेनमभ्यसराम। अमुं च भवत्पादपङ्कजरजोनुग्राह्यः। स चेदानीं भवच्चरणप्रणाम-प्रायश्चित्तमनुतिष्ठतु सर्वदुश्चरितक्षालनमनार्यः सिंहघोषः' इत्यर्थपालः प्राञ्जलिः प्रणनाम। देवोऽपि राजवाहनः 'बहु पराक्रान्तम्, बहूपयुक्ता च बुद्धिः मुक्तबन्धस्ते श्वशुरः पश्यतु माम्' इत्यभिधाय भूयः प्रमतिमेव पश्यन्प्रीतिस्मेरः 'प्रस्तूयतां तावदात्मीयं चरितम्' इत्याज्ञापयत्।

इति श्रीदण्डिनः कृतौ दशकुमारचरितेऽर्थपालचरितं नाम चतुर्थ उच्छ्वासः।

## पञ्चमोच्छ्वासः।

सोऽपि प्रणम्य विज्ञापयामास—'देव देवस्यान्वेषणाथ दिक्षु भ्रमन्नभ्रंकषस्यापि विन्ध्यपार्श्वरूढस्य[1] वनस्पतेरधः, परिणतपतङ्ग-बालपल्लवावतंसिते पश्चिमदिगङ्गनामुखे पल्वलाम्भस्युपस्पृश्योपास्य संध्यां तमःसमीकृतेषु निम्नोन्नतेषु गन्तुमक्षमः क्षमातले किसलयै-रुपरचय्य शय्यां शिशयिषमाणः शिरसि कुर्वन्नञ्जलिम् 'याऽस्मि-न्वनस्पतौ वसति देवता सैव मे शरणमस्तु शरारुचक्रचारभीषणायां शर्वगलश्यामशार्वरान्धकारपूराध्मातगभीरगह्वरायामस्यां महाटव्या-

---

भक्तिमान् भक्तियुक्तः। राजवाहनसंतोषार्थेयमुक्तिः। श्वशुरः पितृव्यश्वशुरः। 'कान्तिमतीसंबन्धान्मातुलः' इति भूषणा। प्रस्तूयतामुपक्रम्यताम्।

इति श्रीदशकुमारचरितटीकायां चतुर्थ उच्छ्वासः।

इदानीं प्रमतिः स्वचरितं वक्तुमुपक्रमते—सोऽपीति। अभ्रंकषस्याभ्रंलिहस्य। 'व्योमस्पृशो मेघस्पृशो वा' इति भूषणा। 'अभ्रं मेघो वारिवाहः' इति, 'द्योदिवौ द्वे स्त्रियामभ्रम्' इति चामरः। 'सर्वकूलाभ्रकरीषेषु कषः' इति खच्। 'अरुर्द्विषद-जन्तस्य मुम्' इति मुमागमश्च। वनस्पतेरपुष्पवृक्षस्य। 'तैरपुष्पाद्वनस्पतिः' इत्यमरः। परिणतः अस्ताभिमुख इत्यर्थः। पतङ्गः सूर्यः। स एव बालपल्लवः सोऽवतंसो यस्येति स तस्मिन्। पल्वलमल्पसरः। 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः। उपस्पृश्य आचम्येत्यर्थः। 'उपस्पर्शस्त्वाचमनम्' इत्यमरः। तमःसमीकृतेषु अन्धकारपूर्णीकृते-ष्वित्यर्थः। किसलयैः पल्लवैः। शिशयिषमाणः शयितुकामः। शरारुर्घातुकः। हिंसकः प्राणीति यावत्। शरारूणां चक्रं समूहस्तस्य चारस्तेन भीषणायाम्। शर्वगलो महादेवकण्ठः। शर्वर्या इदं शार्वरम्। आध्मातं पूरितम्। शर्वगलवत्

---

[1] विन्ध्यपादपपार्श्वरूढवन०.

मेकैकस्य मे प्रसुप्तस्य' इत्युपधाय वामभुजमशायिषि। ततः क्षणा-देवावनिदुर्लभेन स्पर्शेनासुखायिषत किमपि गात्राणि आह्लादयिषते-न्द्रियाणि अभ्यमनायिष्ट चान्तरात्मा विशेषतश्च हृषितास्तनूरुहाः पर्यस्फुरन्मे दक्षिणभुजः। 'कथं न्विदम्' इति मन्दमन्दमुन्मिषन्नुपर्यच्छ-चन्द्रातपच्छेदकल्पं शुक्लांशुकवितानमैक्षिषि। वामतो वैलितदृष्टिः समया सौधभित्तिं चित्रास्तरणशायिनमतिविश्रब्धप्रसुप्तमङ्गनाजन-मलक्षयम्। दक्षिणतो दत्तचक्षुरागलितस्तनांशुकाम्, अमृतफेनपटल-पाण्डुरशयनशायिनीम्, आदिवराहदंष्ट्रांशुजाललग्नामंसस्रस्तदुग्धसागर-दुकूलोत्तरीयां भयसाध्वसमूर्छितामिव धरणिम्, अरुणाधर-किरणबालकिसलयलास्यहेतुभिराननारविन्दपरिमलोद्वाहिभिर्निःश्वासमात-रिश्वभिरीश्वरेक्षणदहनदग्धं स्फुलिङ्गशेषमनङ्गमिव संधुक्षयन्तीम्, अन्तःसुप्तषट्पदमम्बुजमिव जातनिद्रं सरसमामीलितलोचनेन्दीवरमाननं दधानाम्, ऐरावतमदावलेपलूनापविद्धामिव नन्दनवनकल्पवृक्षरत्नवल्लरीं,

---

श्यामो यः शार्वरः अन्धकारस्तस्य पूरेणाध्मातानि गभीराणि गह्वराणि यस्याम्। एककस्यैकाकिनः। उपधाय उपधानीकृत्वेत्यर्थः। असुखायिषत। सुखानि जाता-नीत्यर्थः। 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ्। लुङि सिच इट्। आह्लाद-यिषत। आह्लादं प्रापुरित्यर्थः। हृषिता उदञ्चिताः। हृषेरुदञ्चनेऽर्थे 'हृषेर्लोमसु' इती-डागमः। तनूरुहा लोमानि। दक्षिणभुजस्पन्द इष्टसमागमसूचकः। वर्णितं च कालिदासेन—'तस्यां रघोः सूनुरुपस्थितायां वृणीत मां नेति समाकुलोऽभूत्। वामेतरः संशयमस्य बाहुः केयूरबन्धोच्छ्वसितैर्नुनोद॥' इति। अच्छो निर्मलः' चन्द्रातपश्चन्द्रालोकः। छेदकल्पं भङ्गादीषन्न्यूनम्। तत्सदृशमित्यर्थः। वितानमुल्लोचम्। ऐक्षिषि दृष्टवान्। समया सौधभित्तिं सौधभित्तेः समीपे। 'समयेत्यन्तिकमध्ययोः।' इति सामीप्यार्थेऽव्ययम्। 'अभितःपरितःसमयानिकषा—' इति द्वितीया। विश्रब्धो विश्वस्तः। दक्षिणत इति। पाण्डुरं श्वेतम्। अंसः स्कन्धः तस्मात्स्रस्तं दुग्धसागर एव दुकूलोत्तरीयं यस्यास्ताम्। भयमनुरागस्तेन साध्वसमूर्छिता-मिव। 'घोरसाध्वसमूर्छिताम्' इति भूषणा। अरुणस्ताम्रो यः अधरस्तस्य किरणास्त एव बालकिसलयानि तेषां लास्यं नृत्यं तद्धेतुभिः कारणभूतैः। परिमलमुद्वहन्ति ते परिमलोद्वाहिनस्तैः। मातरिश्वभिर्वायुभिः। ईश्वरेक्षणं महादेव-तृतीयनेत्रम्। संधुक्षयन्तीं वर्धयन्तीम्। अन्तः सुप्ताः षट्पदा भ्रमरा यस्मिंस्तत्। ऐरावतस्य यो मदजनितोऽवलेपस्तेनादौ लूनां पश्चाद् अपविद्धां त्यक्ताम्। कल्पवृक्षस्य

---

१ एकाकिनः. २ आह्लादिषत. ३ चलित. ४ क्षीरसागर.

कामपि तरुणीमालोकयम्। अतर्कयं च—'क्व गता सा महाटवी कुत इदमूर्ध्वाण्डकपालसंपुटोदरोल्लेखि शक्तिध्वजशिखरशूलोत्सेधं सौधमागतं, क्व च तदरण्यस्थलीसमास्तीर्णं पल्लवशयनम्, कुतस्त्यं चेदमिन्दुगभस्तिसंभारभासुरं हंसतूलदुकूलशयनम्। एष च को नु शीतरश्मिकिरणरज्जुदोलापरिभ्रष्टमूर्छित इवाप्सरोगणः स्वैरसुप्तः सुन्दरीजनः का चेयं देवीवारविन्दहस्ता शारदशशाङ्कमण्डलामलदुकूलोत्तरच्छदमधिशेते शयनतलम्। न तावदेषा देवयोषा यतो मन्दमन्दमिन्दुकिरणैः संवाह्यमाना कमलिनीव संकुचति। भग्नवृन्तच्युतरसबिन्दुशबलितं पाकपाण्डुचूतफलमिवोद्भिन्नस्वेदरेखमालक्ष्यते गण्डस्थलम्। अभिनवयौवनविदाहनिर्भरोष्मणि कुचतटे वैवर्ण्यमुपैति वर्णकम्। वाससी च परिभोगानुरूपं धूसरिमाणमादर्शयतः। तदेषा मानुष्येव। दिष्ट्या चानुच्छिष्टयौवना यतः सौकुमार्यमागताः संहता इवावयवाः प्रस्निग्धतमाऽपि पाण्डुतानुविद्धेव देहच्छविः दन्तपीडानभिज्ञतया नातिविशदरागो मुखे, विद्रुमद्युतिरधरमणिः अनत्यापूर्णमारक्तमूलं चम्पककुड्मलदलमिव कठोरं कपोल-

रत्नमयी वल्लरी मञ्जरी। 'वल्लरी मञ्जरी स्त्रियौ' इत्यमरः। ऊर्ध्वाण्डकपालम्। आकाशमित्यर्थः। 'अप एव ससर्जादौ तासु वीर्यमथासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्॥ तस्मिञ्जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः। न्यवात्सीत्स्वयं ..॥ हिरण्यगर्भः स तदण्डं बिभिदे सभम्॥ ताभ्यां स शकलाभ्यां च दिवं भूमिं च निर्ममे।' इति मनुः। शक्तिध्वजः सेनानीः। 'शक्तिध्वजः कुमारस्तस्य शिखरं तदालयाग्रं तत्र शूलं तद्वदुत्सेध उच्छ्रायो यस्य सः।' इति भूषणा। 'सेनानीः क्रौञ्चशत्रुश्च कुमारः शक्तिकेतनः' इत्यजयः। 'शिखरं मण्डपतलमग्रिमं वृक्षशैलयोः' इत्युत्पलः। उत्सेध उन्नतिः। शक्तिध्वजो मण्डपतले शूलमग्रे च यस्य। 'अस्त्राण्यारोपयेदग्रे कुमारं स्थापयेत्तले। नन्द्यावर्त इति ख्यातः प्रासादो देवभूभुजाम्॥'—इति लघुदीपिका। कुतस्त्यं कुत आगतम्। इन्दुगभस्तयश्चन्द्रकिरणाः। दोला हिन्दोलिका। शरदि भवं शारदं शशाङ्कमण्डलमिवामलं दुकूलमुत्तरच्छदो यस्य तत्। देवयोषा देवस्त्री। संवाह्यमानाऽऽवर्ध्यमाणा। 'संवाहनं मर्दनं स्यात्' इति कोशः। 'यतो निद्राति न देवयोषा। देवानामस्वप्नत्वात्' इति भूषणा। कमलिनीवेन्दुकिरणैः संकुचति। भग्नवृन्तं नष्टप्रसवबन्धनम्। शबलितं नानावर्णम्। अभिनवं यद्यौवनं तस्य विशिष्टो यो दहस्तेन निर्भरेऽतिशयितः ऊष्मा यस्मिन्। वर्णकमङ्गरागः। धूसरिमाणं मलिनत्वम्। संहता मिलिताः। पाण्डुतयामनुविद्धेव स्यूतेव। विद्रुमं प्रवालं तद्द्युतिस्तत्कान्तिः। अनत्यापूर्णमीषत्पूर्णम्। कुड्मलदलं मुकुलपत्रम्।

१ ०ण्डसंपुटो०; ०कपालोल्लेखि. २ किरणरजतरज्जु. ३ ०ण्डलं पर्यङ्कतलमेतत्स्व-मल...च्छदमधिशेते. ४ निद्राति. ५ दुर्लभोष्मणि. ६ वर्णकः. ७ परीभोग.

तल्पम्, अनङ्गबाणपातमुक्ताशङ्कं च विश्रब्धमधुरं सुप्यते न चैतद्वक्षः-स्थलं निर्दयविमर्दविस्तारितमुखस्तनयुगलम्. अस्ति चानतिक्रान्त-शिष्टमर्यादचेतसो ममास्यामासक्तिः। असत्त्यनुरूपं पुनराश्लिष्टा यदि स्पष्टमार्तरवेणैव सह निद्रां मोक्ष्यति। अथाहं न शक्ष्यामि चानुपश्लिष्य शयितुम्। अतो यद्भावि तद्भवतु। भाग्यमत्र परीक्षिष्ये।' इति स्पृष्टास्पृष्टमेव किमप्याविद्धरागसाध्वसं लक्ष्यसुप्तः स्थितोऽस्मि। साऽपि किमप्युत्कम्पिना रोमोद्भेदवता वामपार्श्वेन सुखायमानेन मन्द-मन्दजृम्भिकारम्भमन्थराङ्गी त्वङ्गदग्रपक्ष्मणोश्चक्षुषोरलसतान्ततारकेणा-नतिपक्वनिद्राकषायितापाङ्गपरभागेण युगलेनेषदुन्मिषन्ती त्रासविस्मय-हर्षरागशङ्काविलासविभ्रमव्यवहितानि व्रीडान्तराणि कानि कान्यपि कामेनाद्भुतानुभावेनावस्थान्तराणि कार्यमाणा परिजनप्रबोधनोद्यता गिरं कामावेगपरवशं हृदयमङ्गानि च साध्वसायाससंबध्यमानस्वेदपुलकानि

अनङ्गः कामस्तस्य बाणपातानां मुक्ता आशङ्का यस्मिन् कर्मणि तद्यथा तथा। विश्रब्ध-मधुरं विश्वाससुन्दरम्। निर्दयं यः विमर्दस्तेन विस्तारितं मुखं यस्य तादृक् स्तन-युगलं यत्र तत्। अनतिक्रान्ता अदूरीकृता शिष्टमर्यादा येनैवंविधं चेतो यस्येति तस्य। 'अनतिक्रान्तशिष्टमर्यादचेतसो धर्मात्मनोऽस्यामासक्तिरत इयं मदुपभोग-योग्येति व्यङ्ग्यम्। तथा च कालिदासः—'असंशयं क्षत्रपरिग्रहक्षमा यदार्य-मस्यामभिलाषि मे मनः' इत्या –इति भूषणा। अथेति। अनुपश्लिष्यानालिङ्ग्य। स्पृष्टास्पृष्टम्। अल्पस्पर्शमित्यर्थः। राग आसक्तिः। 'आविद्धे रागसाध्वसे यस्यां क्रियायाम्। अनुपमस्त्रीलाभाद्रागः। यथेष्टं स्पृष्टं चेत्तदार्तरवं भविष्यतीति साध्वसम्।' इति भूषणा। लक्ष्यसुप्तः सुप्त इवेत्यर्थः। उत्कम्पिनोत्क-म्पनशीलेन। मन्थराङ्गी सुन्दराङ्गी। 'मन्थरौ नम्रसुन्दरौ' इति वैजयन्ती। 'सालसाङ्गी' इति तु भूषणा। त्वङ्गच्चलत्। 'त्वगि कम्पने' इति धातुः। त्वङ्गदग्रपक्ष्म ययोरिति त्वङ्गदग्रपक्ष्मणोः। अनतिपक्वा नातिपूर्णा मध्ये विच्छेदाद्या निद्रा तया कषायितः आरक्तीकृतः अपाङ्गयोः परभागो गुणोत्कर्षः यस्य तेन। "अपूर्व-पुरुषदर्शनात् त्रासः। आगमप्रकारानवबोधाद्विस्मयः। तदङ्गसङ्गसुखानुभवाद्धर्षः। तत एव रागः। ततो यद्ययं मां बलात्कारेण करिष्यति स्यात् ततः किं भवेदिति शङ्का। ततो भूषणादीनामस्थाने विन्यासः। अस्रस्तमपि वस्त्रं भूषणं वा स्रस्तमिति पुनस्तद्देशे स्थाप्यते यथास्थितमपि तद्देशाच्चाल्यते शङ्कापराधीनचित्तेन जनेन। 'अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः।' इति रसरत्नहारः। व्रीडा अन्तरा मध्ये येषां तानि।" इति भूषणा। कामावेगपरवशं मदनवेगपराधीनम्। "साध्वसेनाप-रिचितपुरुषदर्शनेनायासेन तदङ्गसङ्गानङ्गपीडया संबध्यमानस्वेदपुलकानि। सात्त्विक-भावाविर्भावादिति भावः।" इति भूषणा। साध्वसं भयम्। आयासः खेदः। अथ वा

१ शङ्कामुक्ततया. २ युगमुकुलम्. ३ उत्कम्पिता. ४ कषायदर्शितरागोपाङ्गपरभागेण. ५ विन्यास. ६ संवर्ध्यमान.

कथं कथमपि निगृह्य सस्पृहेण मधुरकूणितत्रिभागेण मन्दमन्दप्रचारितेन चक्षुषा मदङ्गानि निर्वर्ण्य दूरोत्सर्पितपूर्वकायाऽपि तस्मिन्नेव शयने सचकितमशयिष्ट। अजनिष्ट मे रागाविष्टचेतसोऽपि किमपि निद्रा। पुनरननुकूलस्पर्शदुःखायत्तगात्रः प्राबुध्ये। प्रबुद्धस्य च मे सैव महाटवी तदेव तरुतलं स एव पत्रास्तरोऽभूत्। विभावरी च व्यभासीत्। अभूच्च मे मनसि—'किमयं स्वप्नः किं विप्रलम्भो वा किमियमासुरी दैवी वा काऽपि माया। यद्भावि तद्भवतु। नाहमिदं तत्त्वतो नावबुध्य मोक्ष्यामि भूमिशय्याम्। यावदायुरत्रत्यायै देवतायै प्रतिशयितो भवामि' इति निश्चितमतिरतिष्ठम्।

अथाविर्भूय काऽपि रविकराभितप्तकुवलयदामतान्ताङ्गयष्टिः क्लिष्टनिवसनोत्तरीया निरलक्तकरूक्षपाटलेन निःश्वासोष्मजर्जरितत्विषा दन्तच्छदेन वमन्तीव कपिलधूमधूम्रं विरहानलम्, अनवरतसलिलधाराविसर्जनाद्रुधिरावशेषमिव लोहिततरं द्वितयमक्ष्णोरुद्वहन्ती कुलचारित्रबन्धनपाशविभ्रमेणैकवेणीभूतेन केशपाशेन नीलांशुकचीरचूडिकापरिवृता पतिव्रतापताकेव संचरन्ती क्षामक्षामाऽपि देवतानुभावादनतिक्षीणवर्णावकाशा सीमन्तिनी प्रणिपतन्तं मां प्रहर्षोत्कम्पितेन भुजलताद्वयेनोत्थाप्य पुत्रवत्परिष्वज्य शिरस्युपाघ्राय वात्सल्यमिव स्तनयुगलेन स्तन्यच्छलात्प्रक्षरन्ती शिशिरेणाश्रुणा निरुद्धकण्ठी स्नेह-

---

साध्वसमेवायासः। संबध्यमानाः स्वेदपुलका येषु तानि। कूणितः संकुचितः। त्रिभागः। नेत्रप्रान्त इत्यर्थः। 'संकोचितास्त्रयो भागाः अपाङ्गो मध्यो नासिकासमीपश्च यस्येत्यर्थः' इति भूषणा। उत्सर्पित ऊर्ध्वीकृतः। विभावरी रात्रिः। व्यभासीद्विभाताऽभूत्। असुरस्येयमासुरी। देवस्येयं दैवी। तत्त्वतः सत्यत्वेन। यावदायुर्यावदायुष्यम्। प्रतिशयितः कृतशय्यः। **अथेति**। रविकरैः सूर्यकिरणैः अभितप्तं यत्कुवलयदाम तद्वत्तान्ता क्रान्ता अङ्गयष्टिः शरीरयष्टिः यस्याः। क्लिष्टं जीर्णं निवसनोत्तरीयं यस्याः सा। दन्तच्छदेनौष्ठेन। कपिलः पिङ्गलः। धूम्रं किंचिदारक्तश्यामम्। अनवरतं निरन्तरम्। लोहिततरमत्यारक्तम्। एकवेणीभूतेनाद्वितीयेन। केशपाशः केशकलापः। चूडिका कूर्पासः। 'चीरचूडिका सुवासिनीभिर्हस्तेषु ध्रियमाणः खड्गशृङ्गनिर्मितो वलयाकृतिः भूषणविशेषः' इति भूषणा। क्षामक्षामाऽतिक्षीणा। देवतानुभावाद्देवतासामर्थ्यात्। अनतिक्षीणवर्णो नातिक्षीणो वर्णो यस्याः सा तथा। प्रणिपतन्तं नमस्कारं कुर्वन्तम्। वात्सल्यं पुत्रस्नेहम्। स्तने भवं स्तन्यं तस्य छलान्मिषात्। प्रक्षरन्ती स्रवन्ती।

---

१ दुःखायमान. २ व्ययासीत्. ३ अनवबुध्य. ४ प्रतिशयितोऽस्मि. ५ क्लिन्न. ६ कलापेन. ७ अंशुकराचितचीरचूलिका. ८ मुखेन.

गेद्गर्दं व्याहार्षीत्—'वत्स यदि वः कथितवती मगधराजमहिषी वसुमती मम हस्ते बालमर्थपालं निधाय कथां च काचिदात्मभर्तृपुत्रसखीजनानुबद्धां राजराजप्रवर्तितां कृत्वाऽन्तर्धानमगादात्मजा मणिभद्रस्येति साऽहमस्मि वो जननी। पितुर्वो धर्मपालसूनोः सुमित्रानुजस्य कामपालस्य पादमूलान्निष्कारणकोपकलुषिताशया प्रोष्यानुशयविधुरा स्वप्ने केनापि रक्षोरूपेणोपेत्य शप्ताऽस्मि—'चण्डिकायां त्वयि वर्षमात्रं वसामि प्रवासदुःखाय' इति ब्रुवतैवाहमाविष्टा प्राबुध्ये। गतं च तद्वर्षं वर्षसहस्रदीर्घम्। अतीतायां तु यामिन्यां देवदेवस्य त्र्यम्बकस्य श्रावस्त्यामुत्सवसमाजमनुभूय बन्धुजनं च स्थानस्थानेभ्यः संनिपतितमभिसमीक्ष्य मुक्तशापा पत्युः पार्श्वमभिसरामीति प्रस्थितायामेव मयि त्वमत्राभ्युपेत्य 'प्रपन्नोऽस्मि शरणमिहत्यां देवताम्' इति प्रसुप्तोऽसि। एवं शापदुःखाविष्टया तु मया तदा न तत्त्वतः परिच्छिन्नो भवान्। अपि तु शरणागतमविरलप्रमादायामस्यां महाटव्यामयुक्तं परित्यज्य गन्तुमिति मया त्वमपि स्वपन्नेवासि नीतः। प्रत्यासन्ने च तस्मिन्देवगृहे पुनरचिन्तयम्—'कथमिह तरुणेनानेन सह समाजं गमिष्यामि' इति। अथ राज्ञः श्रावस्तीश्वरस्य यथार्थनाम्नो धर्मवर्धनस्य कन्यां नवमालिकां घर्मकालसुभगे कन्यापुरविमानहर्म्यतले विशालकोमलं शय्यातलमधिशयानां यदृच्छयोपलभ्य 'दिष्ट्येयं सुप्ता परिजनश्च गाढनिद्रः। शेतामयमत्र मुहूर्तमात्रं ब्राह्मणकुमारो यावत्कृतकृत्या निवर्तेय' इति त्वां तत्र शाययित्वा तमुद्देशमगमम्। दृष्ट्वा चोत्सवश्रियम् निर्विश्य च स्वजनदर्शनसुखम् अभिवाद्य च त्रिभुवनेश्वरमा-

व्याहार्षीत्। अवोचदित्यर्थः। 'वो जननी भवत्पित्रपेक्षया कनिष्ठस्य पितृव्यस्य पत्नी' इति भूषणा। 'कृताभिषेका महिषी' इत्यमरः। कलुषिताशया मलिनचित्ता। प्रोष्य प्रवासं कृत्वा। आविष्टा आवेशं प्राप्ता। दीर्घमतिमहत्। यामिन्यां रात्रौ। श्रावस्त्यामेतन्नामनगर्याम्। संनिपतितमागतम्। तत्त्वतः सत्यतः। अविरलप्रमादायां बहुतरप्रमादायाम्। प्रत्यासन्ने समीपवर्तिनि। समाजं सधर्मिणां समूहम्। अथोत्ते। यदृच्छया दैवयोगेन। दिष्ट्याऽदृष्टेन। उद्देशं

१ गर्भम्. २ यद्. ३ परिदाय. ४ अनुविद्धाम्. ५ समापतितम्. ६ प्रतिपन्नः. ७ अविरल. ८ गाढसुप्तः. ९ अमुत्र.

त्मालीकप्रत्याकलनोपारूढसाध्वसं च नमस्कृत्य भक्तिप्रणतहृदया भगवतीमम्बिकाम् तया गिरिदुहित्रा देव्या सस्मितम् 'अयि भद्रे मा भैषीः । भवेदानीं भर्तृपार्श्वगामिनी । गतस्ते शापः' इत्यनुगृहीता सद्य एव प्रत्यापन्नमहिमा प्रतिनिवृत्य दृष्ट्वैव त्वां यथावदभ्यजानाम्—'कथं मत्सुत एवायं वत्सस्यार्थपालस्य प्राणभूतः सखा प्रमतिरिति । पापया मयाऽस्मिन्नज्ञानादौदासीन्यमाचरितम् । अपि चायमस्यामासक्तभावः । कन्या चैनं कामयते युवानम् । उभौ चेमौ लब्धसुप्तौ त्रपया साध्वसेन वाऽन्योन्यमात्मानं न विवृण्वाते । गन्तव्यं च मया । कामाघ्रातयाऽप्यनया कन्यया रहस्यरक्षणाय न समाभाषितः सखीजनः परिजनो वा । नयामि तावत्कुमारम् । पुनरपीममर्थं लब्धलक्षो यथोपपन्नैरुपायैः साधयिष्यति' इति मत्प्रभावप्रस्वापितं भवन्तमेतदेव पत्रशयनं प्रत्यनैषम् । एवमिदं वृत्तम् । एषा चाहं पितुस्ते पादमूलं प्रत्युपसर्पेयम्' इति प्राञ्जलिं मां भूयो भूयः परिष्वज्य शिरस्युपाघ्राय कपोलयोश्चुम्बित्वा स्नेहविह्वला गताऽऽसीत् ।

अहं च पञ्चबाणवश्यः श्रावस्तीमभ्यवर्तिषि । मार्गे च महति निगमे नैगमानां ताम्रचूडयुद्धकोलाहलो महानासीत् । अहं च तत्र संनिहितः किंचिदस्मेषि । संनिधिनिषण्णस्तु मे वृद्धविटः कोऽपि ब्राह्मणः शनैः स्मितहेतुमपृच्छत् । अब्रवं च—'कथमिव नारिकेलजातेः प्राच्यवाटकुक्कुटस्य प्रतीच्यवाटः पुरुषैरसमीक्ष्य बलाकाजातिस्ताम्रचूडो बलप्रमाणाधिकस्यैवं प्रतिविसृष्टः' इति । सोऽपि तज्ज्ञः

---

प्रदेशम् । अलीकमपराधः । 'अलीकमपराधः स्यादसत्याप्रिययोरपि ।' इति सज्जनः । प्रत्याकलनं साक्षात्करणम् । उपारूढं जातं साध्वसं यथेति क्रियाविशेषणम् । गिरिदुहित्रा पार्वत्या । प्रत्यापन्नमहिमा प्राप्तमहिमा । उदासीनस्य भाव औदासीन्यम् । कामाघ्रातया । मदनस्पृष्टयेत्यर्थः । लब्धलक्षो लब्धावसरः । अहमिति । निगमो वणिग्ग्रामः 'निगमः पुरे । वेदे वणिक्पथे मार्गे ।' इति महीपः । तत्र भवा नैगमास्तेषां नैगमानां वणिजाम् । ताम्रचूडः कुक्कुटः । 'कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः ।' इत्यमरः । अस्मेषि हास्यमकरवम् । संनिधिनिषण्णः समीपस्थितः । नारिकेलजातिरेकः कुक्कुटः । द्वितीयः कुक्कुटो बलाकाजातीयः । 'दीर्घग्रीवः सितवपुर्महाप्राणः स्रवन्मदः । बलाकाजातिरित्युक्तस्तदन्यो नारिकेलजः ॥' इति वैजयन्ती ।

---

१ गुप्त०. २ लब्धक्षणः; लब्धलक्षणः. ३ वाटपुरुषैः.

'किमङ्गैरेभिर्व्युत्पादितैः । तूष्णीमास्स्व' इत्युपहस्तिकायास्ताम्बूलं कर्पूरसहितमुद्धृत्य ,मह्यं दत्त्वा चित्राः कथाः कथयन्क्षणमतिष्ठत् । प्रायुध्यत चातिसंरब्धमनुप्रहारप्रवृत्तस्वपक्षमुक्तकण्ठीरवरवं विहंगमद्वयम् । जितश्चासौ प्रतीच्यवाटकुक्कुटः । सोऽपि विटब्राह्मणः स्ववाटकुक्कुटविजयहृष्टो मयि वयोविरुद्धं सख्यमुपेत्य तदहः स्वगृह एव स्नानभोजनादि कारयित्वोत्तरेद्युः श्रावस्तीं प्रति यान्तं मामनुगम्य 'स्मर्तव्योऽस्मि सत्यर्थे' इति मित्रवद्विसृज्य प्रत्ययासीत् ।

अहं च गत्वा श्रावस्तीमध्वश्रान्तो बाह्योद्याने लतामण्डपे शयितोऽस्मि । हंसकरवप्रबोधितश्चोत्थाय कामपि क्वणितनूपुरमुखराभ्यां चरणाभ्यां मदन्तिकमुपसरन्तीं युवतिमद्राक्षम् । सा त्वागत्य स्वहस्तवर्तिनि चित्रपटे लिखितं मत्सदृशं किमपि पुंरूपं मां च पर्यायेण निर्वर्णयन्ती सविस्मयं सवितर्कं सहर्षं च क्षणमवातिष्ठत । मयाऽपि तत्र चित्रपटे मत्सादृश्यं पश्यता तद्दृष्टिचेष्टितमनाकस्मिकं मन्यमानेन 'ननु सर्वसाधारणोऽयं रमणीयः पुण्यारामभूमिभागः । किमिति चिरस्थितिक्लेशोऽनुभूयते । ननूपवेष्टव्यम्' इत्यभिहिता सा सस्मितम् 'अनुगृहीताऽस्मि' इति न्यषीदत् । संकथा च देशवार्तानुबद्धा काचनावयोरभूत् । कथासंश्रिता च सा 'देशातिथिरसि । दृश्यन्ते च तेऽध्वश्रान्तानीव गात्राणि । यदि न दोषो मद्गृहेऽद्य विश्रमितुमनुग्रहः क्रियताम्' इत्यशंसत् । अहं च 'अयि मुग्धे नैष दोषो गुण एव' इति तदनुमार्गगामी तद्गृहगतो राजार्हेण स्नानभोजनादिनोपचरितः सुखं निषण्णो रहसि पर्यपृच्छ्ये—'महाभाग दिगन्तराणि भ्रमता कच्चिदस्ति किंचिदद्भुतं

---

उपहस्तिका ताम्बूलस्थापनाय चर्म (वस्त्र) पेशी । 'पूगाद्यावपनी चर्म (वस्त्र) भस्त्रिका चोपहस्तिका' इति वैजयन्ती । भाषया 'चंची' इति प्रसिद्धा । 'उपदस्तिका' इति पाठे स एवार्थः । अनुप्रहारे प्रवृत्तः यः स्वपक्षः कुक्कुटान्यतरपक्षस्तेन मुक्तः कण्ठीरवरवः सिंहनादः यस्य । वाटः श्रेणिः । 'वाटः पुमान्पथि श्रेणौ' इति वररुचिः । वयोविरुद्धं 'समवयसोर्मैत्री' इति वचनात्तद्विरुद्धम् । नूपुरं पादभूषणम् । मुखरं वाचालम् । मदन्तिकं मत्समीपम् । पुंरूपं पुरुषरूपम् । संकथा मिथोभाषणम् । देशवार्ता लौकिकगोष्ठी । काचन वचनातीता । सा चाहं चावां तयोः । अनुग्रहः कृपा । राजार्हेण राजयोग्येन । कच्चिदिति प्रश्ने । आशास्पदमाशास्थानम् । संबाधः संघः ।

---

१ स्वकुक्कुट. २ मण्डले. ३ हंसरव. ४ कमपि पुरुषम्. ५ अनुविद्धा.

भवतोपलब्धम्' इति । ममाभवन्मनसि—' महदिदमाशास्पदम् । एषा खलु निखिलपरिजनसंबाधसंलक्षितायाः सखी राजदारिकायाः चित्रपटे चास्मिन्नपि तदुपरिविरचितसितवितानं हर्म्यतलम्, तद्गतं च प्रकाम-शरदभ्रपटलपाण्डुरं शयनम्, तदधिशायिना च निद्रालीढ-लोचना ममैवेयं प्रतिकृतिः । अतो नूनमनङ्गेन साऽपि राजकन्या तावतीं भूमिमारोपिता यस्यामसह्यमदनज्वर[1]व्यथितोन्मादिता सती सखीनिर्बन्ध-पृष्टविक्रियानिमित्ता चातुर्येणैतद्रूपनिर्माणेनैव समर्थमुत्तरं दत्तवती । रूपसंवादाच्च संश[2]यानयाऽनया पृष्टो[3] भिन्द्या[4]मस्याः संशयं यथानुभव-कथनेन' इति जातनिश्चयोऽब्रवम्—' भद्रे देहि चित्रपटम्' इति । सा त्वर्पितवती मद्धस्ते । पुनस्तमादाय तामपि व्याजसुप्तामुल्लसन्मदनराग-विह्वलां वल्लभामेक[5]त्रैवाभिलिख्य ' काचिदेवंभूता युवतिरीदृशस्य पुंसः पार्श्वशायिन्यरण्यानीप्रसुप्तेन मयोपलब्धा । किमेष स्वप्नः ' इत्यालपं च । हृष्टया तु तया विस्तरतः पृष्टः सर्वमेव वृत्तान्तमकथयम् । असौ च सख्या मन्नि[6]मित्तान्यवस्थान्तराण्यवर्णयत् । तदाकर्ण्य च ' यदि तव सख्या मदनुग्रहोन्मुखं मानसम्, गमय कानिचिदहानि । कमपि कन्या-पुरे निराशङ्कनिवासकरणमुपायमारचय्यागमिष्यामि ' इति कथंचिदेना-मभ्युपगमय्य गत्वा तदेव खर्वटं वृद्धविटेन समगंसि ।

सोऽपि ससंभ्रमं विश्रमय्य तथैव स्नानभोजनादि कारयित्वा रहस्यपृच्छत्—' आर्य, कस्य हेतोरचिरेणैव प्रत्यागतोऽसि । ' प्रत्य-वादिषमेनम्—'स्थान एवाहमार्येणास्मि पृष्टः । श्रूयताम् । अस्ति

उपरि विरचितं सितवितानं सितोल्लोचो यस्य । शरदभ्रं शरत्कालमेघस्तस्य पटलं तद्वत्पाण्डुरं शुभ्रम् । आलीढे व्याप्ते लोचने यस्याः सा । प्रतिकृतिरा-लेख्यम् । तावतीं भूमिं मदनपरवशतारूपां मर्यादाम् । असह्यश्चासौ मदनज्वरश्च तेन व्यथिता चासौ उन्मादिता च । सखीभिर्निर्बन्धेन आग्रहेण पृष्टं विक्रियाया निमित्तं यस्याः । रूपस्य लिखितपुरुषस्यास्य च संवादात्सादृश्यात् । ' रूपसंवादाद्रूपदर्शनात् ' इति भूषणा । व्याजेन मिषेण । उल्लसन्स्फुरन् यो मदनरागस्तेन विह्वलाम् । एकत्रैक-स्मिन्प्रदेशे । अरण्यानी । ' महारण्यमरण्यानी ' इत्यमरः । उपलब्धा प्राप्ता । मदनुग्रहो-न्मुखं मयि योऽनुग्रहस्तत्रोन्मुखमुत्कण्ठितम् । खर्वटो ग्रामः । स्थाने युक्तमित्यर्थः ।

१ कामज्वरोन्माथिता. २ संशयादनया. ३ आपृच्छ्यै. ४ भिन्द्यानि. ५ तत्रैव. ६ कारणम्

हि श्रावस्ती नाम नगरी। तस्याः पतिरपर इव धर्मपुत्रो धर्मवर्धनो नाम राजा। तस्य दुहिता प्रत्यादेश इव श्रियः प्राणा इव कुसुमधन्वनः सौकुमार्यविडम्बितनवमालिका नवमालिका नाम कन्यका। सा मया समापत्तिदृष्टा कामनाराचपङ्क्तिमिव कटाक्षमालां मम मर्मणि व्यकिरत्। तच्छल्योद्धरणक्षमश्च धन्वन्तरिसदृशस्त्वदृते नेतरोऽस्ति वैद्य इति प्रत्यागतोऽस्मि। तत्प्रसीद कंचिदुपायमाचरितुम्। अयमहं परिवर्तितस्त्रीवेषस्ते कन्या नाम भवेयम्। अनुगतश्च मया त्वमुपगम्य धर्मासनगतं धर्मवर्धनं वक्ष्यसि— 'ममेयमेकैव दुहिता। जातमात्रायां त्वस्यां जनन्यस्याः संस्थिता। माता च पिता च भूत्वाऽहमेव व्यवर्धयम्। एतदर्थमेव विद्यामयं शुल्कमर्जितुं गतोऽभूदवन्तिनगरीमुज्जयिनीमस्मद्वैवाह्यकुलजः कोऽपि विप्रदारकः। तस्मै चेयमनुमता दातुमितरस्मै न योग्या। तरुणीभूता चेयम्। स च विलम्बितः। तेन तमानीय पाणिमस्या ग्राहयित्वा तस्मिन्न्यस्तभारः संन्यसिष्ये। दुरभिरक्षतया तु दुहितॄणां मुक्तशैशवानां विशेषतश्चामातृकाणाम्, इह देवं मातृपितृस्थानीयं प्रजानामापन्नशरणमागतोऽस्मि। यदि वृद्धं ब्राह्मणमधीतिनमगतिमतिथिं च मामनुग्राह्यपक्षे गणयत्यादिराजचरितधुर्यो देवः,

---

प्रत्यादेशो निरसनम्। 'प्रत्याख्यानं निरसनं प्रत्यादेशो निराकृतिः।' इत्यमरः। सौकुमार्येण विडम्बिता कदर्थिता नवमालिका ययेति तथा। समापत्तिर्यदृच्छासंगतिः। नाराचा बाणाः। मर्मणि जीवस्थाने। 'जीवस्थानं भवेन्मर्म' इति हलायुधः। तच्छल्योद्धरणं तच्छल्यदूरीकरणं तत्र क्षमः समर्थः। धन्वतरिर्देववैद्यः। संस्थिता मरणं प्राप्ता। व्यवर्धयं वर्धितवान्। शुल्कं जामात्रा देयं वस्तु। विवाहाय योग्यं वैवाह्यं यत्कुलं वंशस्तत्र जातः। संन्यसिष्ये संन्यासमाश्रयिष्ये। दुरभिरक्षतया दुःखेन रक्षणयोग्यतया। मुक्तशैशवानाम्। प्राप्ततारुण्यानामित्यर्थः। आपन्नशरणमापन्नानामापत्प्राप्तानां शरणं रक्षकम्। 'शरणं गृहरक्षित्रोः' इत्यमरः। अधीतिनम्। 'योऽधीतकृत्स्नवेदः स्यात्सोऽधीतीत्युच्यते बुधैः' इति कोशः। 'इष्टादिभ्यश्च' इति कर्तरि इनिः। अगतिं निराश्रयम्। अनुग्राह्यपक्षे कृपास्थानीये। आदिराजो मनुस्तस्येव चरितं येषां ते आदिराजचरितास्तेषां धुर्यः श्रेष्ठः। 'धुरो यड्ढकौ' इति यत्।

१ आचरयितुमर्हसि. २ अतिथिमिति नास्ति क्वचित्.

सैषा भवद्दुर्जेच्छायामखण्डितचारित्रा तावदध्यास्तां यावदस्याः पाणिग्राहकमानयेयम् ' इति । स एवमुक्तो' नियतमभिमनायमानः स्वदुहितृसंनिधौ मां वासयिष्यति । गतस्तु भवानागामिनि मासि फाल्गुने फल्गुनीषूत्तरासु भाविनि राजान्तःपुरजनस्य तीर्थयात्रोत्सवे तीर्थस्थानात्प्राच्यां दिशि गोरुतान्तरमतिक्रम्य वानीरवलयमध्यवर्तिनि कार्त्तिकेयगृहे करतलगतेन शुक्लाम्बरयुगलेन स्थास्यसि । स खल्वहमनभिशङ्क एवैतावन्तं कालं सहाभिविहृत्य राजकन्यया भूयस्तस्मिन्नुत्सवे गङ्गाम्भसि विहरन्विहारव्याकुले कन्यकासमाजे मग्नोपसृतस्त्वदभ्यास एवोन्मङ्क्ष्यामि । पुनस्त्वदुपहृते वाससी परिधायापनीतदारिकावेषो जामाता नाम भूत्वा त्वामेवानुगच्छेयम् । नृपात्मजा तु मामितस्ततोऽन्विष्यानासादयन्ती ' तया विना न भोक्ष्ये ' इति रुदत्येवावरोधने स्थास्यति । तन्मूले च महति कोलाहले, क्रन्दत्सु परिजनेषु, रुदत्सु सखीजनेषु, शोचत्सु पौरजनेषु, किंकर्तव्यतामूढे सामात्ये पार्थिवे, त्वमास्थानीमेत्य मां स्थापयित्वा वक्ष्यसि—' देव स एष मे जामाता तवार्हति श्रीभुजाराधनम् । अधीती चतुर्ष्वाम्नायेषु, गृहीती षट्स्वङ्गेषु, आन्वीक्षिकीविचक्षणः, चतुःषष्टिकलागमप्रयोगचतुरः, विशेषेण गजरथतुरङ्गतन्त्रवित्, इष्वसनास्त्रकर्मणि गदायुद्धे च निरुपमः, पुराणेतिहासकुशलः, कर्ता काव्यनाटकाख्यायिकानाम्, वेत्ता सोपनिषदोऽर्थशास्त्रस्य, निर्मत्सरो गुणेषु, विश्रम्भी

अखण्डितं चारित्रं यस्याः सा अखण्डितचारित्रा अदूषितकन्यावस्था । पाणिग्राहकं पाणिग्रहणकर्तारम् । फल्गुनीषूत्तरासु । उत्तराफल्गुनीष्वित्यर्थः । अनभिशङ्को निःशङ्कः । मग्नोपसृतो मग्नः सन्नुपसृतः । त्वदभ्यासे त्वत्समीपे । उन्मङ्क्ष्यामि प्रादुर्भविष्यामि । अवरोधनं राजान्तःपुरम् । ' अधीती चतुर्ष्वाम्नायेषु ' इत्यत्र ' क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् ' इति सप्तमी । आन्वीक्षिकी तर्कविद्या तस्यां विचक्षणः कुशलः । ' इतिहासः पुरावृत्तम् ' इत्यमरः । आख्यायिका प्रबन्धविशेषः कादम्बरीहर्षचरित्रादिः । ' प्रस्तुतानाकुलश्रव्यशब्दार्थपदवर्तिना । गद्येन युक्तोदात्तार्था सोच्छ्वासाऽऽख्यायिका मता ॥ ' इति श्रीमः । " वृत्तं व्याख्यायते तस्या नामकेनाथ चेष्टितम् । वक्त्रं चापरवक्त्रं च काले भाव्यर्थशंसि च ॥ कवेरभिप्रायकृतैरङ्कनैः कैश्चिदाननैः ॥ " इत्यधिकं भूषणायाम् । सोपनिषदोऽर्थशास्त्रस्य कर्मज्ञानमीमांसयोः । निर्मत्सरो मात्सर्यरहितः ।

१ भुजतरु. २ आपास०. ३ ०रासु राजा०...त्सवो भविष्यति. ४ रुदत्यवस्थास्यते. ५ अवरोध.

सुहृत्सु, शक्यः संविभागशीलः श्रुतधरो गतस्मयश्च । नास्य दोषमणीयांसमप्युपलभे । न च गुणेष्वविद्यमानम् । तन्मादृशस्य ब्राह्मणमात्रस्य न लभ्य एष संबन्धी । दुहितरमस्मै समर्प्य वार्द्धकोचितमन्त्यमाश्रमं संक्रमेयं यदि देवः साधु मन्यते ' इति । स इदमाकर्ण्य वैवर्ण्याक्रान्तवक्त्रः परमुपेतो वैलक्ष्यमारप्स्यतेऽनुनेतुमनित्यतादिसंकीर्तनेनात्रभवन्तं मन्त्रिभिः सह । त्वं तु तेषामदत्तश्रोत्रो मुक्तकण्ठं रुदित्वा चिरस्य बाष्पकुण्ठकण्ठः काष्ठान्याहृत्याग्निं संधुक्ष्य राजमन्दिरद्वारे चिताधिरोहणायोपक्रमिष्यसे । स तावदेव त्वत्पादयोर्निपत्य सामात्यो नरपतिरनूनैरर्थैस्त्वामुपच्छन्द्य दुहितरं मह्यं दत्त्वा मद्योग्यतासमाराधितः समस्तमेव राज्यभारं मयि समर्पयिष्यति । सोऽयमभ्युपायोऽनुष्ठेयः, यदि तुभ्यं रोचते ' इति । सोऽपि पटुविटानामग्रणीरसकृदभ्यस्तकपटप्रपञ्चः पाञ्चालशर्मा यथोक्तमभ्यधिकं च निपुणमुपक्रान्तवान् । आसीच्च मम समीहितानामहीनकालसिद्धिः । अन्वभवं च मधुकर इव नवमालिकामार्द्रसुमनसम् । अस्य राज्ञः सिंहवर्मणः साहाय्यदानं सुहृत्संकेतभूमिगमनमित्युभयमपेक्ष्य सर्वबलसंदोहेन चम्पामिमामुपगतो दैवाद्देवदर्शनसुखमनुभवामि ' इति ।

श्रुत्वैतत्प्रमतिचरितं स्मितमुकुलितमुखनलिनः ' विलासप्रायमूर्जितम्, मृदुप्रायं चेष्टितम्, इष्ट एष मार्गः प्रज्ञावताम् । अथेदानीमत्रभवान्प्रविशतु ' इति मित्रगुप्तमैक्षत क्षितीशपुत्रः ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते प्रमतिचरितं नाम पञ्चम उच्छ्वासः ।

---

विश्रम्भी विश्वासवान् । ' शक्यः प्रियंवदः प्रोक्तः' इति हलायुधः । गतस्मयो गर्वरहितः । अविद्यमानम् । उपलभे इति शेषः । अन्त्यमाश्रमं संन्यासम् । विवर्णस्य भावो वैवर्ण्यम् । वैलक्ष्यं परं वैक्लव्यमुपेत इत्यन्वयः । ' समनुनेतुं खेदं दूरीकर्तुम् ' इति भूषणा । संधुक्ष्य प्रज्वाल्येत्यर्थः । अनूनैः महामूल्यैरित्यर्थः । कपटप्रपञ्चश्छलरचना । उपक्रान्तवान्संपादितवान् । अहीनकालसिद्धिरत्युचकालसिद्धिः । नवमालिकाम् । मालतीमित्यर्थः । आर्द्रसुमनसं सरसपुष्पम् । मधुकर आर्द्रसुमनसमिव नवमालिकां राजकन्यामन्वभवमित्यन्वयः । संदोहेन समूहेन । मुकुलितं हास्यसंकुचितम् । मुखनलिनं मुखकमलम् । विलासप्रायं विलासबहुलम् । प्रज्ञावतां बुद्धिमताम् ।

**इति श्रीदशकुमारचरितटीकायां पञ्चम उच्छ्वासः ।**

---

१ शक्तः. २ समनुनेतुम्. ३ विरुद्य बाष्प०. ४ राजद्वारे. ५ रभिमतैः. ६ सोऽनिपटुविटग्रामणीः. ७ अचिरकालः काल-फल. ८ मुकुलितनयनः.

## षष्ठ उच्छ्वासः ।

सोऽप्याचचक्षे—'देव सोऽहमपि सुहृत्साधारणभ्रमणकारणः सुह्मेषु दामलिप्ताह्वयस्य नगरस्य बाह्योद्याने महान्तमुत्सवसमाजमालोकयम् । तत्र कचिदतिमुक्तलतामण्डपे कमपि वीणावादेनात्मानं विनोदयन्तमुत्कण्ठितं युवानमद्राक्षम् । अप्राक्षं च—'भद्र को नामायमुत्सवः किमर्थं वा समारब्धः केन वा निमित्तेनोत्सवमनादृत्यैकान्ते भवानुत्कण्ठित इव परिवादिनीद्वितीयस्तिष्ठति' इति । सोऽभ्यधत्त—'सौम्य, सुह्मपतिस्तुङ्गधन्वा नामानपत्यः प्रार्थितवानमुष्मिन्नायतने विस्मृतविन्ध्यवासरागं वसन्त्या विन्ध्यवासिन्याः पादमूलादपत्यद्वयम् । अनया च किलास्मै प्रतिशयिताय स्वप्ने समादिष्टम्—'समुत्पत्स्यते तवैकः पुत्रः, जनिष्यते चैका दुहिता । स तु तस्याः पाणिग्राहकमनुजीविष्यति । सा तु सप्तमाद्वर्षादारभ्या परिणयनात्प्रतिमासं कृत्तिकासु कन्दुकनृत्येन गुणवद्भर्तृलाभाय मां समाराधयतु । यं चाभिलषेत्साऽमुष्मै देया । स चोत्सवः कन्दुकोत्सवनामाऽस्तु' इति । ततोऽल्पीयसा कालेन राज्ञः प्रियमहिषी मेदिनी नामैकं पुत्रमसूत । समुत्पन्ना चैका दुहिता । साऽद्य कन्या कन्दुकावती नाम सोमापीडां देवीं कन्दुकविहारेणाराधयितुमागमिष्यति । तस्यास्तु सखी चन्द्रसेना नाम धात्रेयिका मम प्रियाऽऽसीत् । सा चैषु दिवसेषु राजपुत्रेण

---

सोऽपि मित्रगुप्तोऽपि। सुह्मेषु देशविशेषेषु । 'अग्निकोणादिक्स्थेषु' इति भूषणा । दामलिप्ताह्वयस्य दामलिप्तनाम्ना ख्यातस्य । 'अतिमुक्तः पुण्ड्रकः स्यात्' इत्यमरः । उत्कण्ठितं जातोत्कण्ठम् । भद्रेति कल्याणवत्संबोधनम् । अनादृत्य उपेक्ष्येत्यर्थः । परिवादिनीद्वितीयः वीणासहायः । 'विपञ्ची सा तु तन्त्रीभिः सप्तभिः परिवादिनी' इत्यमरः । अभ्यधत्त प्रत्युत्तरं दत्तवान् । सौम्येत्याप्ततया संबोधनम् । आयतनं देवस्थानम् । विन्ध्यवासिन्याः दुर्गायाः । प्रतिशयिताय निद्रिताय । प्रायोपवेशनास्थितायेत्यर्थः । आ परिणयनाद्विवाहकालं यावत् । कृत्तिकासु तन्नामनक्षत्रेषु । कन्दुकनृत्येन कन्दुकवन्नृत्यं तेन । कन्दुकावतीत्यत्र 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घः संज्ञायाम्—इति भूषणा । सोमापीडां देवीं चन्द्रशेखराम् । 'आपीडः शेखरः समौ' इति वैजयन्ती । धात्र्युपमाता

---

१ दामलिप्ताह्वस्य. २ अतिमुक्तक. ३ साऽभिलषेत्. ४ कन्दुकनामा. ५ आराधयिष्याति.

भीमधन्वना बलवदनुरुद्धा । तदहमुत्कण्ठितो मन्मथशरशल्यदुःखोद्विग्नचेताः कलेन वीणारवेणात्मानं किंचिदाश्वासयन्विविक्तमध्यासे ' इति ।

अस्मिन्नेव च क्षणे किमपि नूपुरक्वणितमुपातिष्ठत् । आगता च काचिदङ्गना । दृष्ट्वैव स एनामुत्फुल्लदृष्टिरुत्थायोप[1]गूह्य गाढमुपगूढकण्ठश्च तया तत्रैवोपाविशत् । अशंसच्च—' सैषा मे प्राणसमा यद्विरहो दहन इव दहति माम् । इदं च मे जीवितमपहरता राजपुत्रेण मृत्युनेव निरुष्मतां नीतः । न च शक्ष्यामि राजसूनुरित्यमुष्मिन्पापमाचरितुम् । अतोऽनयाऽऽत्मानं सुदृष्टं कारयित्वा त्यक्ष्यामि निष्प्रतिक्रियान्प्राणान् ' इति । सा तु पर्यश्रुमुखी समभ्यधात्—' मा स्म नाथ मत्कृतेऽध्यवस्यः साहसम् । यस्त्वमुत्तमात्सार्थवाहादर्थदासादुत्पद्य कोशदास इति गुरुभिरभिहितनामधेयः पुनर्मदत्यासङ्गाद्वेशदास इति द्विषद्भिः प्रख्यापितोऽसि तस्मिंस्त्वय्युपरते यद्यहं जीवेयं नृशंसो वेशो[2] इति समर्थयेयं लोकवादम् । अतोऽद्यैव नय मामीप्सितं देशम् ' इति । स तु मामभ्यधत्त—' भद्र भवदृष्टेषु राष्ट्रेषु कतमत्समृद्धं संपन्नसस्यं सत्पुरुषभूयिष्ठं च ' इति । तमहमीषद्विहस्याब्रवम् —' भद्र विस्तीर्णेयमर्णवाम्बरा । न पर्यन्तोऽस्ति स्थानस्थानेषु रम्याणां जनपदानाम् । अपि तु न चेदिह युवयोः सुखनिवासकारणं कमप्युपायमुत्पादयितुं शक्नुयां ततोऽहमेव भवेयमध्वदर्शी ' इति । तावतोदैरत राणितानि मणिनूपुराणाम् । अथासौ जातसंभ्रमा ' प्राप्तैवेयं भर्तृदारिका कन्दुकावती कन्दुकक्रीडितेन देवीं विन्ध्यवासिनीमाराधयितुम् । अनिषिद्धदर्शना चेयमस्मिन्कन्दुकोत्सवे । सफलमस्तु युष्मच्चक्षुः ।

---

तस्याः कन्या धात्रेयिका । ' स्त्रीभ्यो ढक् ' । शरशल्यं बाणाग्रम् । शल्येभ्यो दुःखं तेनोद्विग्नं चेतो यस्य । कलेन गम्भीरेण । ' कलो मन्द्रस्तु गम्भीरे ' इत्यमरः । विविक्तं विजनम् । उपगूह्यालिङ्ग्य । उपगूढकण्ठ आश्लिष्टकण्ठः । निरुष्मतां निस्तेजस्त्वम् । निष्प्रतिक्रियान्निष्प्रतीकारान् । सा त्विति । पर्यश्रुमुखी परिगतान्यश्रूणि यस्मिन्निति । उपरते मृते । नृशंसो घातुकः । ईप्सितमिष्टम् । संपन्नसस्यं प्रचुरधान्यम् । अर्णवाम्बरा समुद्रवसना पृथ्वी । पर्यन्तः समाप्तिः । जनपदानां देशानाम् । ' नीवृज्जनपदो देशः ' इत्यमरः । अध्वदर्शी मार्गोपदेष्टा । तावता तत्कालेनेत्यर्थः । उदैरत उत्पन्नानीत्यर्थः । राणितानि शब्दितानि । अथेति । अनिषिद्ध-

---

१ उपगूह्य गाढमिति नास्ति क्वचित्. २ वेशजनः.

आगच्छतं द्रष्टुम्। अहमस्याः सकाशवर्तिनी भवेयम्' इत्ययासीत्। तामन्वयाव चावाम्। महति रत्नरङ्गपीठे स्थितां प्रथमं ताम्रोष्ठीमपश्यम्। अतिष्ठच्च सा सद्य एव मम हृदये। न मयाऽन्येन वाऽन्तराले दृष्टा। चित्रीयाविष्टचित्तश्चाचिन्तयम्—'किमियं लक्ष्मीः। न हि न हि। तस्याः किल हस्ते विन्यस्तं कमलम्, अस्यास्तु हस्त एव कमलम्। भुक्तपूर्वा च सा पुरातनेन पुंसा पूर्वराजैश्च, अस्याः पुनरनवद्यमयातयामं च यौवनम्' इति चिन्तयत्येव मयि साऽनर्घ्यसर्वगात्री व्यत्यस्तहस्तपल्लवाग्रस्पृष्टभूमिरालोलनीलकुटिलालका सविभ्रमं भर्गवतीमभिवन्द्य कन्दुकममन्दरागरूषिताक्षमनङ्गमिवालम्बत। लीलाशिथिलं च भूमौ मुक्तवती। मन्दोत्थितं च किंचित्कुञ्चिताङ्गुष्ठेन प्रसृतकोमलाङ्गुलिना पाणिपल्लवेन समाहत्य हस्तपृष्ठेन चोन्नीय, चटुलदृष्टिलाञ्छितं स्तबकमिव भ्रमरमालानुविद्धमवपतन्तमाकाश एवाग्रहीत्। अमुञ्चच्च। मध्येविलम्बितलये द्रुतलये मृद्गमृदु च प्रहरन्ती तत्क्षणं चूर्णपदमदर्शयत्। प्रशान्तं च तं निर्दयप्रहारैरुदपातयत्। विपर्ययेण च प्राशमयत्। पक्षमृज्वागतं च वामदक्षिणाभ्यां कराभ्यां पर्यायेणाभिघ्नती शकुन्तमिवोदस्थापयत्। दूरोत्थितं च प्रपतन्तमाहत्य गीतमार्गमारचयत्।

दर्शना अप्रतिहतदर्शना। चित्रीयाविष्टचित्तः विस्मयाविष्टचित्तः। 'चित्रीया विस्मयोऽद्भुतम्' इति कोशः। 'चित्रीया। नमोवरिवश्चित्रङः क्यच्—इति क्यजन्तादप्रत्ययः स्त्रियाम्। किमियमित्याद्याक्षेपालंकारः। आक्षेपः स्वयमुक्तस्य प्रतिषेधो विचारणात्—इति लक्षणात्' इति भूषणा। अयातयाममपरिभुक्तमिति यावत्। 'जीर्णं च परिभुक्तं च यातयाममिदं द्वयम्।' इति कोशः। अनघं निर्दोषम्। व्यत्यस्तौ परावर्तितौ हस्तपल्लवौ तयोरग्राभ्यां स्पृष्टा भूमिर्यया। कुटिला वक्राः। अलक चूर्णकुन्तलाः। अमन्देन बहलेन रागेण रूषितानि रञ्जितानि अक्षीणि यस्य। पक्षे अमन्देन रागेणानुरागेण रूषिते अक्षिणी येन तम्। शिथिलं श्लथम्। मन्दं निश्चलम्। कुञ्चितो वक्रितः। चटुलश्चञ्चलः। स्तबको गुच्छः। आकाश एव मध्य एव। मध्यविलम्बितं मध्ये विलम्बितम्। द्रुतं लयः पतनं यत्रेति तस्मिन्सतीति सतिसप्तमी। 'विलम्बितं द्रुतं मध्यं तत्त्वमोघो घनं क्रमात्। ताल. कालक्रियामानम्' इत्यमरः। चूर्णपदम्। 'गत्यागत्योरानुलोम्येन न्यूनाधिक्यक्षेपणं तच्चूर्णपदम्' इति कन्दुकतन्त्रे। उदपातयदुत्थितमकरोत्। पक्षं पार्श्वतः। शकुन्तः पक्षी। गीतमार्गम्। 'दशपदचंक्रमणं गीतमार्गं विदुः'

१ अभुक्तपूर्वा चासौ. २ अनवद्य. ३ ससंभ्रमम्. ४ भगवतीं भवानीम्. ५ विलम्बितद्रुतमध्यलये. ६ च मृदुमृदु. ७ आचरत्.

प्रतिदिशं च गमयित्वा प्रत्यागमयत्। एवमनेककरणमधुरं विहरन्ती रङ्गगतस्य रक्तचेतसो जनस्य प्रतिक्षणमुच्चावचाः प्रशंसावाचः प्रतिगृह्णती, तत्क्षणारूढविश्रम्भं कोशदासमंसेऽवलम्ब्य कण्टकितगण्डमुत्फुल्लेक्षणं च मय्यभिमुखीभूय तिष्ठति तत्प्रथमावतीर्णकन्दर्पकारितकटाक्षदृष्टिस्तदनुमार्गविलसितलीलाञ्चितभ्रूलता, श्वासानिलवेगान्दोलितैर्दन्तच्छदरश्मिजालैर्लीलापल्लवैरिव मुखकमलपरिमलग्रहणलोलानालिनस्ताडयन्ती, मण्डलभ्रमणेषु कन्दुकस्यातिशीघ्रप्रचारितया विशन्तीव मद्दर्शनलज्जया पुष्पमयं पञ्जरम्, पञ्चबिन्दुप्रसृतेषु पञ्चापि पञ्चबाणबाणान्युगपदिवाभिपततस्त्रासेनावघट्टयन्ती, गोमूत्रिकाप्रचारेषु घनदर्शितरागविभ्रमा विद्युल्लतामिव विडम्बयन्ती, भूषणमणिरणितदत्तलयसंवादिपादचारम्, अपदेशस्मितप्रभानिषिक्तबिम्बाधरम्, असस्रंसितप्रतिसमाहितशिखण्डभारम्, समाघट्टितक्वणितरत्नमेखलागुणम्, अञ्चितोत्थितपृथुनितम्बलम्बिविचलदंशुकोज्ज्वलम्, आकुञ्चितप्रसृतवेल्लितभुजलताभिहतललितकन्दुकम्, आवर्जितबाहुपाशम्, परिवर्तितत्रिकाविलग्नलोलकुन्तलम्, अवगलितकर्णपूरकनकपत्रप्रतिसमाधानशीघ्रतानतिक्रमितप्रकृतक्रीडम्, असकृदु-

इति कन्दुकतन्त्रे। अनेककरणमधुरमनेकव्यापाररम्यम्। उच्चावचाः स्थूलसूक्ष्माः। तत्क्षणे आरूढो विश्रम्भो विश्वासो यस्मिंस्तम्। प्रतिक्षणारूढविभ्रममिति पाठे प्रतिक्षणमारूढ उत्पन्नो विभ्रमो विलासो यस्येति तथा। कण्टकितौ रोमाञ्चितौ गण्डौ यस्मिन्कर्मणि तद्यथा स्यात्तथा। तिष्ठति सतीति सतिसप्तमी। तत्प्रथमं तदेव प्रथममवतीर्ण आगतो यः कन्दर्पः कामस्तेन कारिता कटाक्षदृष्टिर्यस्याः सेति तथा। तदनुमार्गे कन्दुकानुमार्गे विलसितस्य खेलनस्य लीला तयाऽञ्चिते भ्रूलते यस्याः। अनिलवेगो वायुवगः। पञ्चबिन्दुप्रसृतेषु। 'पञ्चावर्तप्रहारस्तु पञ्चबिन्दुरुदाहृतः' इति। अवघट्टयन्त्यालोडयन्ती। गोमूत्रिकाप्रचारेषु। 'गोमूत्रिकेति विद्वद्भिश्चारः शातह्रदो मतः' इति च। घनं दर्शितोऽतिमात्रदर्शितः। मेघे दर्शितश्च। विभ्रमः स्फुरणम्। विडम्बयन्त्यनुकुर्वती। रणितं शब्दितम्। लयसंवादि लयानुरोधि। समाघट्टितः समीकृतः क्वणितः शब्दवान्मेखलागुणो यत्र। अञ्चितं सम्यग्यथा तथोत्थित उन्नतः पृथुर्महान् नितम्बस्तत्र लम्बि विचलच्च यदंशुकं तेनोज्ज्वलं यथा तथा। वेल्लिता भ्रामिता। परिवर्तितं यत् त्रिकम्। 'त्रिकं त्रिकाटिकायां च पृष्ठवंशाधरेऽपि च' इति वैजयन्ती। तत्र विलग्ना लोला कुन्तला यथा स्युस्तथा। अवगलितं स्रस्तं कर्णपूरभूतं कनकपत्रं तस्य प्रतिसमाधानं स्वस्थाने पुनर्निवेशनं तत्र या शीघ्रता तयाऽनतिक्रमिता प्रकृता क्रीडा

१ प्रत्यागमत्. २ उच्चावचम्. ३ प्रतिक्षणारूढविभ्रमम्. ४ आघातकृतक्वणितमेखलागुणम्. ५ लम्बितचेलम्; नितम्बविलम्बित. ६ अंशुकाञ्चलम्. ७ आवर्तित. ८ पाशानुविद्धपरि०. ९ उपरि परि०,

त्क्षिप्यमाणहस्तपादबाह्याभ्यन्तरभ्रान्तकन्दुकम्, अवनमनोन्नमननैरन्तर्य-नष्टदृष्टमध्ययष्टिकम्, अवपतनोत्पतनविपर्यस्तमुक्ताहारम्, अङ्कुरित-घर्मसलिलदूषितकपोलपत्रभङ्गशोषणाधिकृतश्रवणपल्लवानिलम्, आगलित-स्तनतटांशुकनियमनव्यापृतैकपाणिपल्लवं च निषद्योत्थाय निमी-ल्योन्मील्य स्थित्वा गत्वा चैवातिचित्रं पर्यक्रीडत राजकन्या। अभिहृत्य भूतलाकाशयोरपि क्रीडान्तराणि दर्शनीयान्येकेनैवानेकेनेव कन्दुकेनादर्शयत् । चन्द्रसेनादिभिश्च प्रियसखीभिः सह विहृत्य विहृतान्ते चाभिवन्द्य देवीं मनसा मे सानुरागेणेव परिजनेन चानु-गम्यमाना, कुवलयशरमिव कुसुमशरस्य मय्यपाङ्गं समर्पयन्ती, साप-देशमसकृदावर्त्यमानवदनचन्द्रमण्डलतया स्वहृदयमिव मत्समीपे प्रेरितं प्रतिनिवृत्तं न वेत्यालोकयन्ती, सह सखीभिः कुमारीपुरमगमत् ।

अहं चानङ्गविह्वलः स्ववेश्म गत्वा कोशदासेन यत्नवदत्युदारं स्नानभोजनादिकमनुभावितोऽस्मि । सायं चोपसृत्य चन्द्रसेना रहसि मां प्रणिपत्य पत्युरंसमंसेन प्रणयपेशलमाघट्टयन्त्युपाविशत् । आचष्ट च हृष्टः कोशदासः—'भूयासमेवं यावदायुरायताक्षि त्वत्प्रसादस्य पात्रम्' इति । मया तु सस्मितमभिहितम्—'सखे किमेतदाशा-स्यम् । अस्ति किंचिदञ्जनम् । अनया तदक्तनेत्रया राजसूनुरुप-स्थितो वानरीमिवैनां द्रक्ष्यति विरक्तश्चैनां पुनस्त्यक्ष्यति' इति ।

---

तया युक्तं यथा तथा । असकृदिति । हस्तौ पादौ च तेषां बाह्याभ्यन्तरे भ्रान्तः कन्दुकः यस्मिन्कर्मणि तद्यथा तथा । 'बनेटी' इति लोकप्रसिद्धं क्रीडनकम् इति भूषणा । अवनमनोन्नमनयोर्नैरन्तर्यान्नष्टा च दृष्टा च मध्ययष्टिः शरीरमध्यभागो यथा तथा । अङ्कुरितमीषत्प्रादुर्भूतं यद् घर्मसलिलं स्वेदजलं तेन दूषितो यः कपोलयोः पत्रभङ्गः तस्य शोषणे अधिकृतोऽधिकारी कृतः श्रवणपल्लवः कर्णावतंसपल्लवस्तस्या-निलो यत्र । स्तनतटांशुकनियमनं कुचतटोपरिगतवस्त्रसमीकरणं तत्र व्यापृतो व्यासक्तः । अतिचित्रमनेकप्रकारम् । विहृतान्ते खेलनान्ते । अपाङ्गं नेत्रप्रान्तम् । सापदेशं सव्याजम् । 'अपदेशः स्मृतो लक्ष्ये निमित्तव्याजयोरपि' इति विश्वः । अहमिति । अनङ्गविह्वलो मदनव्याकुलः । अनुभावितोऽस्मि । अनुभवविषयीकृत इत्यर्थः । प्रणयपेशलं प्रीतिसुन्दरम् । भूयासं भविष्य इत्यर्थः । तदक्तनेत्रयाऽञ्जनाक्तनेत्रया ।

---

१ निर्व्यवस्थ. २ एकेनैव वाऽनेकेनैव. ३ मन्मनसा मानु०. ४ विद्धः. ५ यदक्त.

तया तु स्मेरयाऽस्मि कथितः— 'सोऽयमार्येणाज्ञाकरो जनोऽत्यर्थमनुगृहीतः यदस्मिन्नेव जन्मनि मानुषं वपुरपनीय वानरीकरिष्यते। तदास्तामिदम्। अन्यथाऽपि सिद्धं नः समीहितम्। अद्य खलु कन्दुकोत्सवे भवन्तमेवहसितमनोभवाकारमभिलषन्ती रोषादिव शम्बरद्विषाऽतिमात्रमायास्यते राजपुत्री। सोऽयमर्थो विदितभावया मया स्वमात्रे तया च तन्मात्रे महिष्या च मनुजेन्द्राय निवेदयिष्यते। विदितार्थस्तु पार्थिवस्त्वया दुहितुः पाणिं ग्राहयिष्यति। ततश्च त्वदनुजीविना राजपुत्रेण भवितव्यम्। एष हि देवताममादिष्टो विधिः। त्वदायत्ते च राज्ये नालमेवं त्वामतिक्रम्य मामवरोद्धुं भीमधन्वा। तत्सह्यतामयं त्रिचतुराणि दिनानि।' इति मामामन्त्र्य प्रियं चोपगूह्य प्रत्ययासीत्। मम कोशदासस्य च तदुक्तानुसारेण बहु विकल्पयतोः कथंचिदक्षीयत क्षपा। क्षपान्ते च कृतयथोचितनियमस्तमेव प्रियादर्शनसुभगमुद्यानोद्देशमुपगतोऽस्मि। तत्रैव चोपसृत्य राजपुत्रो निरभिमानमनुकूलाभिः कथाभिर्मामनुवर्तमानो मुहूर्तमास्त। नीत्वा चोपकार्यामात्मसमेन स्नानभोजनशयनादिव्यतिकरेणोपाचरत्। तल्पगतं च स्वप्नेनानुभूयमानप्रियादर्शनालिङ्गनसुखमायसेन निगडेनातिबलवद्बहुपुरुषैः पीवरभुजदण्डोपरुद्धमबन्धयन्माम्। प्रतिबुद्धं च सहसा समभ्यधात्—'अयि दुर्मते श्रुतमालपितं हतायाश्चन्द्रसेनाया जालरन्ध्रनिःसृतं तच्चेष्टावबोधप्रयुक्तयाऽनया कुब्जया। त्वं किलाभिलषितो वराक्या कन्दुकावत्या, तव किलानुजीविना मया स्थेयं, त्वद्वचः किलानतिक्रमता मया चन्द्र-

---

आज्ञाकरः सेवकजनः। अन्यथाऽपि मनुष्यस्य वानरीकरणं विनाऽपि। अद्येति। अवहसित उपहासं प्रापितो मनोभवाकारो मदनशरीरं येनेति। शम्बरद्विषा कामेन। अतिमात्रं निर्भरम्। 'अतिमात्रोद्गाढनिर्भरम्' इत्यमरः। आयास्यते आयासं प्राप्यते। त्वामनुजीवतीति तथा। विधिरदृष्टम्। सह्यतामयं कोशदासः। कथंचिन्महता प्रयासेन। क्षपा रात्रिः। अनुकूलाभिः स्वेष्टाभिः। उपकार्या राजगृहम्। आयसन लोहमयेन। पीवरौ मांसलौ भुजदण्डौ बाहुदण्डौ ताभ्यामुपरुद्धं यथा तथा। जालरन्ध्रं गवाक्षच्छिद्रम्। किलेति असंभाव्यार्थे। 'वार्तासंभाव्ययोः किल' इत्यमरः।

---

१ अपहसित. २ हरद्विषा. ३ एष. ४ अतिबलपुरुषैः.

सेना कोशदासाय दास्यते ' इत्युक्त्वा पार्श्वचरं पुरुषमेकमालोक्याकथयत्—' प्रक्षिपैनं सागरे ' इति । स तु लब्धराज्य इवातिहृष्टः ' देव यदाज्ञापयसि ' इति यथादिष्टमकरोत् । अहं तु निरालम्बनो भुजाभ्यामितस्ततः स्पन्दमानः किमपि काष्ठं दैवदत्तमुरसोपाश्लिष्य तावदप्लोषि यावदपासरद्वासरः शर्वरी च सर्वा । प्रत्युषस्यदृश्यत किमपि वहित्रम् । अमुत्रासन्यवनाः । ते मामुद्धृत्य रामेषुनाम्ने नाविकनायकाय कथितवन्तः—' कोऽप्ययमायसनिगडबद्ध एव जले लब्धः पुरुषः । सोऽयमपि सिञ्चेत्सहस्रं द्राक्षाणां क्षणेनैकेन ' इति । अस्मिन्नेव क्षणे नैकनौकापरिवृतः कोऽपि मद्गुरभ्यधावत् । [1]अबिभयुर्यवनाः । तावदतिजवा नौकाः श्वान इव वराहमस्मत्पोतं पर्यरुत्सत । प्रावर्तत च संप्रहारः । पराजायिषत यवनाः । तानहमगतीनवसीदतः समाश्वास्यालपिषम्—' अपनयत मे निगडबन्धनम् । अयमहमवसादयामि वः सपत्नान् ' इति । अमी तथाऽकुर्वन् । सर्वांश्च तान्प्रातिभटान्भल्लवर्षिणा भीमटंकृतेन शार्ङ्गेण लवलवीकृताङ्गानकार्षम् । अवप्लुत्य हतविध्वस्तयोधमस्मत्पोतसंसक्तपोतममुत्र नाविकनायकमनभिसरमभिपत्य जीवग्राहमग्रहीषम् । असौ चासीत्स एव भीमधन्वा । तं चाहमवबुध्य जातव्रीडमब्रवम्—' तात किं दृष्टानि कृतान्तविलसितानि ' इति । ते तु सांयात्रिका मदीयेनैव शृङ्खलेन तमतिगाढं बद्ध्वा हर्षकिलकिलारवमकुर्वन्मां चापूजयन् ।

---

स्पन्दमानः चेष्टमानः । उपश्लिष्य आलिङ्ग्य । अपासरदतिक्रान्तः । शर्वरी रात्रिः । वहित्रं वहनम् । अपि सिञ्चेत् । अपिशब्दः संभावनायाम् । ' गर्हासमुच्चयप्रश्नशङ्कासंभावनास्वपि । ' इत्यमरः । मद्गुः पोतविशेषः । अतिजवा अतिवेगवत्यः । पर्यरुत्सत परितो रुरुधुरित्यर्थः । पराजायिषत पराजयं प्राप्ता इत्यर्थः । आलपिषमवदम् । अवसादयामि । नाशयिष्यामीत्यर्थः । सपत्नान्वैरिणः । भल्लवर्षिणा बाणवर्षिणेत्यर्थः । टंकृतेन टंकारेण । ' नपुंसके भावे क्तः ' । शार्ङ्गेण चापेन । लवलवीकृताङ्गान् लेशलेशीकृताङ्गान् । " लवो भागस्तस्य लवस्तथाकृतान् । चूर्णिताङ्गानित्यर्थः । " इति भूषणा । अनभिसरमसहायम् । ' अनुप्लवः सहायश्चानुचरोऽभिसरः समाः । ' इत्यमरः । जीवग्राहं जीवं गृहीत्वेति णमुल् । जातव्रीडं जातलज्जम् । कृतान्तो यमः । सांयात्रिकाः पोतवणिजः । ' सांयात्रिकः पोतवणिक् ' इत्यमरः । किलकिलारवमित्यनुकरणम् ।

---

1 पराजयिषत, पराजेषत.

दुर्वारा तु सा नौरननुकूलवातनुन्ना दूरमभिपत्य कमपि द्वीपं निबिडमाश्लिष्टवती। तत्र च स्वादु पानीयमेधांसि कन्दमूलफलानि च संजिघृक्षवो गाढपातिताशिलावलयमवातराम। तत्र चासीन्महाशैलः। सोऽहम्—'अहो रमणीयोऽयं पर्वतनितम्बभागः, कान्ततरेयं गन्धपाषाणवत्युपत्यका, शिशिरमिदमिन्दीवरारविन्दमकरन्दबिन्दुचन्द्रकोत्तरं गोत्रवारि, रम्योऽयमनेकवर्णकुसुममञ्जरीमञ्जुलतरस्तरुवनाभोगः' इत्यतृप्ततरया दृशा बहुबहु पश्यन्नलक्षिताध्यारूढक्षोणीधरशिखरः शोणीभूतमुत्प्रभाभिः पद्मरागसोपानशिलाभिः किमपि नालीकपरागधूसरं सरः समभ्यगमम्। तत्र स्नातश्च कांश्चिदमृतस्वादून्बिसभङ्गानास्वाद्य, अंसलग्नकह्लारस्तीरवर्तिना केनापि भीमरूपेण ब्रह्मराक्षसेनाभिपत्य 'कोऽसि, कुतस्त्योऽसि' इति निर्भर्त्सयताऽभ्यधीये। निर्भयेन च मया सोऽभ्यधीयत—'सौम्य सोऽहमस्मि द्विजन्मा। शत्रुहस्तादर्णवम्, अर्णवाद्यवननावम्, यवननावश्चित्रग्रावाणमेनं पर्वतप्रवरं गतो यदृच्छयाऽस्मिन्सरसि विश्रान्तः। भद्रं तव' इति। सोऽब्रूत—'न चेद्ब्रवीषि प्रश्नानश्नामि त्वाम्' इति। मयोक्तम्—'पृच्छा तावत् भवतु' इति। अथावयोरेकयाऽऽर्ययाऽऽसीत्संलापः—

किं क्रूरं स्त्रीहृदयं किं गृहिणः प्रियहिताय दारगुणाः।
कः कामः संकल्पः किं दुष्करसाधनं प्रज्ञा॥

---

अननुकूलेन प्रतिकूलवातेन नुन्ना प्रेरिता। एधांसि काष्ठानि। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। संजिघृक्षवो ग्रहीतुकामाः। गाढं पातितं शिलावलयं शिलामण्डलं यत्र तथा। नितम्बभागः तटप्रदेशः। गन्धपाषाणवती मनःशिलादिधातुपाषणमयीत्यर्थः। अथ वा गन्धपाषाणः शैलेयम्। 'शैलेयं गन्धपाषाणः शिलापुष्पं च कथ्यते' इति कोशः। उपत्यका पर्वतासन्नभूमिः। 'उपत्यकाऽद्रेरासन्ना भूमिः' इत्यमरः। इन्दीवरारविन्दानां मकरन्दबिन्दवः। गोत्रवारि पर्वतनिर्झरजलम्। अनेकवर्णानि नानावर्णानि यानि कुसुमानि तेषां मञ्जरीभिः मञ्जुलतरोऽतिरम्यः। तरुवनाभोगस्तरुगहनपूर्णता। अतृप्ततरया दर्शनेच्छावत्येत्यर्थः। अलक्षितमध्यारूढं क्षोणीधरस्य पर्वतस्य शिखरं येन सः। अतिदूरं गत इति यावत्। शोणीभूतमारक्तीभूतम्। नालीकं पद्मम्। 'नालीकं पद्मबाणयोः' इति वैजयन्ती। अर्णवं समुद्रम्। यवननावः। पञ्चम्यन्तमिदम्। पर्वतप्रवरं पर्वतश्रेष्ठम्। गत इति प्रत्येकं द्वितीयान्तमन्वेति। संलापो मिथोभाषणम्। किं क्रूरमिति। प्रियहिताय प्रियं च हितं च तस्मै। दारगुणा भार्याया गुणाः। संकल्पो निश्चयः।

---

१ दुर्वहा. २ पतित. ३ शैलेयवती. ४ मञ्जरीभरः. ५ स्नात्वा ततश्च.

'तत्र धूमिनीगोमिनीनिम्बवतीनितम्बवत्यः प्रमाणम् ।' इत्युपदिष्टो मया सोऽब्रूत—'कथय कीदृश्यस्ताः' इति । अत्रोदाहरम्—

'अस्ति त्रिगर्तो नाम जनपदः । तत्रासन्गृहिणस्त्रयः स्फीतसारधनाः सोदर्या धनकधान्यकधन्यकाख्याः । तेषु जीवत्सु न ववर्ष वर्षाणि द्वादश दशशताक्षः । क्षीणसारं सस्यम्, ओषध्यो वन्ध्याः, न फलवन्तो वनस्पतयः, क्लीबा मेघाः, क्षीणस्रोतसः स्रवन्त्यः, पङ्कशेषाणि पल्वलानि, निर्निस्यन्दान्युत्समण्डलानि, विरलीभूतं कन्दमूलफलम्, अवहीनाः कथाः, गलिताः कल्याणोत्सवक्रियाः, बहुलीभूतानि तस्करकुलानि, अन्योन्यमभक्षयन्प्रजाः, पर्यलुठन्नितस्ततो बलाकापाण्डुराणि नरशिरःकपालानि, पर्यहिण्डन्त शुष्काः काकमण्डल्यः, शून्यीभूतानि नगरग्रामखर्वटपुटभेदनादीनि । त एते गृहपतयः सर्वधान्यनिचयमुपयुज्याजाविकं[3] गवलगणं गवां यूथं दासीदासजनमपत्यानि ज्येष्ठमध्यमभार्ये च क्रमेण भक्षयित्वा 'कनिष्ठभार्या धूमिनी श्वो भक्षणीया' इति समकल्पयन् । अथ कनिष्ठो धन्यकः प्रियां स्वामत्तुमक्षमस्तया सह तस्यामेव निश्यपासरत् । मार्गक्लान्तां चोद्वहन्वनं जगाहे । स्वमांसासृगपनीतक्षुत्पिपासां तां नयन्नन्तरे कमपि निकृत्तपाणिपादकर्णनासिकमवनिपृष्ठे विचेष्टमानं पुरुषमद्राक्षीत् । तमप्यार्द्राशयः स्कन्धेनोद्वहन्कन्दमूलमृगबहुले गहनोद्देशे यत्नरचितपर्णशालश्चिरमवसत् । अमुं च रोपितव्रणमिङ्गुदी-

अस्तीति । स्फीतो महान्सारः स्थिरांशो धनं च येषाम् । न ववर्ष वृष्टिं न चकारेत्यर्थः । दशशताक्ष इन्द्रः । ओषध्यः फलपाकान्ताः । स्रवन्त्यो नद्यः । पल्वलान्यल्पसरांसि । उत्समण्डलानि प्रस्रवणमण्डलानि । 'उत्सः प्रस्रवणं वारिप्रवाहो निर्झरो झरः ।' इत्यमरः । बलाकाः बिसकण्ठिकाः । पर्यहिण्डन्त पर्यभ्रमन् । 'हिडि भ्रमणे' । अजाश्च अवयश्च तत्समूहोऽजाविकम् । 'अजाविकटम्' इति पाठः । 'घ्यन्तादजाद्यदन्तं विप्रतिषेधेन' इत्यजशब्दस्य पूर्वनिपातः । 'संघाते कटच्' इति सामूहिकापवादः कटच् ।—इति भूषणा । गवला महिषाः । यूथं समूहः । अक्षमोऽसमर्थः । असृग्रक्तम् । क्षुत्क्षुधा । पिपासा तृट् । निकृत्तं पाणिपादकर्णनासिकं यस्य तम् । गहनोद्देशे वनप्रदेशे । इङ्गुदी । भाषया 'हिंगणबेट' इति

१ इतीयदुक्त्वा. २ अथो०. ३ अजाविकटम्. ४ अन्तरा. ५ अरिनिकृत्त.

तैलादिभिरामिषेण शाकेनात्मनिर्विशेषं पुपोष। पुष्टं च तमुद्रिक्तधातुमेकदा मृगान्वेषणाय च प्रयाते धन्यके सा धूमिनी रिरंसयोपातिष्ठत्। भर्त्सिताऽपि तेन बलात्कारमरीरमत्। निवृत्तं च पतिमुदकाभ्यर्थिनम् 'उद्धृत्य कूपात्पिब, रुजति मे शिरः शिरोरोगः' इत्युदञ्चनं सरज्जुं पुरश्चिक्षेप। उदञ्चन्तं च तं कूपादपः क्षणात्पृष्ठतो गत्वा प्रणुनोद। तं च विकलं स्कन्धेनोदुह्य देशाद्देशान्तरं परिभ्रमन्ती पतिव्रताप्रतीतिं लेभे बहुविधाश्च पूजाः। पुनरवन्तिराजानुग्रहादतिमहत्या भूत्या न्यवसत्। अथ पानीयार्थिसार्थजनसमापत्तिदृष्टोद्धृतमवन्तिषु भ्रमन्तमाहारार्थिनं भर्तारमुपलभ्य सा धूमिनी 'येन मे पतिर्विकलीकृतः स दुरात्माऽयम्' इति तस्य साधोश्चित्रवधमज्ञेन राज्ञा समादेशयांचकार। धन्यकस्तु दत्तपश्चाद्बन्धो वध्यभूमिं नीयमानः सशेषत्वादायुषः 'यो मया विकलीकृतोऽभिमतो भिक्षुः स चेन्मे पापमाचक्षीत युक्तो मे दण्डः' इत्यदीनमभिक्रुतं जगाद। 'को दोषः' इत्युपनीय दर्शितेऽमुष्मिन्स विकलः पर्यश्रुः पादपतितस्तस्य साधोस्तत्सुकृतमसत्याश्च तस्यास्तथाभूतं दुश्चरितमार्यबुद्धिराचचक्षे। कुपितेन राज्ञा विरूपितमुखी सा दुष्कृतकारिणी कृता श्वभ्यः पाचिका। कृतश्च धन्यकः प्रसादभूमिः। तद्ब्रवीमि—'स्त्रीहृदयं क्रूरम्' इति।

---

प्रसिद्धः। 'इङ्गुदी तापसतरुः' इत्यमरः। आमिषं मांसम्। आत्मनिर्विशेषमात्मतुल्यम्। रिरंसया रन्तुमिच्छया। बलात्कारमिति क्रियाविशेषणम्। अरीरमत्क्रीडां चक्रे। निवृत्तं पराव्रृत्यागतम्। उदकाभ्यर्थिनं जलाकाङ्क्षिणम्। रुजति। 'रुज व्यथने'। व्यथां प्राप्नोतीत्यर्थः। उदञ्चनं जलनिष्कासनपात्रम्। 'उत्सेचनं सेकपात्रं तथोदञ्चनमित्यपि।' इति वैजयन्ती। भाषया 'डोल' इति। सरज्जुं सदोरकम्। पुरोऽग्रे। चिक्षेप त्यक्तवतीत्यर्थः। विकलं विह्वलम्। प्रतीतिं ख्यातिम्। भूत्या ऐश्वर्येण। अर्थेति। पानीयं जलं तदर्थी तत्प्रार्थकः। ०सार्थजनेन समापत्त्या यदृच्छया दृष्टश्चासौ उद्धृतश्च तम्। वध्यभूमिं मारणभुवम्। श्वभ्यः पाचिका पुटपाककर्त्री।

---

१ पिब जलम्. २ उदञ्चयन्तम्.

पुनरनुयुक्तो गोमिनीवृत्तान्तमाख्यातवान्—'अस्ति द्राविडेषु काञ्ची नाम नगरी। तस्यामनेककोटिसारः श्रेष्ठिपुत्रः, शक्तिकुमारो नामासीत्। सोऽष्टादशवर्षदेशीयश्चिन्तामापेदे—'नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम। तत्कथं नु गुणवद्विन्देयं कलत्रम्' इति। अथ परप्रत्ययाहृतेषु दारेषु यादृच्छिकीं संपत्तिमनभिसमीक्ष्य कार्तान्तिको नाम भूत्वा वस्त्रान्तपिनद्धशालिप्रस्थो भुवं बभ्राम। 'लक्षणज्ञोऽयम्' इत्यमुष्मै कन्याः कन्यावन्तः प्रदर्शयांबभूवुः। यां कांचिल्लक्षणवतीं सवर्णां कन्यां दृष्ट्वा स किल स्म ब्रवीति—'भद्रे शक्नोषि किमनेन शालिप्रस्थेन गुणवदन्नमस्मानभ्यवहारयितुम्' इति। स हसितावधूतो गृहाद्गृहं प्रविश्याभ्रमत्। एकदा तु शिबिषु कावेरीतीरपत्तने सह पितृभ्यामवसितमहर्द्धिमवशीर्णभवनसारां धात्र्या प्रदर्श्यमानां कांचन विरलभूषणां कुमारीं ददर्श। अस्यां संसक्तचक्षुश्चातर्कयत्—'अस्याः खलु कन्यकायाः सर्व एवावयवा नातिस्थूला नातिकृशा नातिह्रस्वा नातिदीर्घा न विकटा मृजावन्तश्च। रक्ततलाङ्गुली यवमत्स्यकमलकलशाद्यनेकपुण्यलेखालाञ्छितौ करौ, समगुल्फसंधी मांसलावशिरालौ चाङ्घ्री, जङ्घे चानुपूर्ववृत्ते, पीवरोरुग्रस्ते इव दुरुपलक्ष्ये जानुनी, सकृद्विभक्तश्चतु-

---

प्रसादभूमिः प्रसादास्पदम्। अष्टादशवर्षदेशीयः किंचिन्न्यूनाष्टादशवर्षः। 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः'। यादृच्छिकं मभीष्टम्। संपत्तिमर्थाद्गुणानाम्। 'कार्तान्तिको लक्षणज्ञः' इति वैजयन्ती। शालिस्तण्डुलविशेषः। 'कण्डनेन विना श्वेतं हैमन्तं शालि संस्मृतम्' इति भावमिश्रः। प्रस्थं मानाविशेषः। 'माषटङ्काक्षबिल्वानि कुडवः प्रस्थमाढकम्। राशिर्गोणी खारिकेति यथोत्तरचतुर्गुणम्॥' इति शार्ङ्गधरोक्तेः। शेरचतुष्कपरिमाणमिति यावत्। कन्यावन्तः कन्यापितरः। शिबिषु कावेरीदक्षिणतीरेषु। 'शिबिर्मद्ध्यायास्तु दक्षिणं तीर (वर्ष) मिष्यते।' इति वैजयन्ती। अवसिता नष्टा महती ऋद्धिर्भूतिर्यस्यास्ताम्। मृजा शुद्धिः तद्वन्तः। यवोऽङ्गुष्ठविरहं चिह्नम्। आदिशब्देनान्यानि शुभविरहाणि सूच्यन्ते। गुल्फं घुटिका। 'तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः। मांसलौ पुष्टौ। अत एव मग्नगुल्फसंधी अत एवादृश्यमानाशिरावेष्टितौ—इति भूषणा। अशिरालौ शिरारहितौ। अङ्घ्री चरणौ। पीवरौ मांसलावूरू ताभ्यां ग्रस्ते। सकृद्विभक्तः समं विभक्तः। 'एकवारे समे सकृत्'

---

१ विधेयम्. २ कावेरीदक्षिणतीरेषु. ३ मग्नगुल्फसंधी.

रस्त्रः ककुन्दरविभागशोभी रथाङ्गाकारसंस्थितश्च नितम्बभागः, तनुतरमी- षन्निम्नं गम्भीरं नाभिमण्डलम्, वलित्रयेण चालंकृतमुदरम्, उरोभागव्या- पिनावुन्मग्नचूचुकौ विशालारम्भशोभिनौ पयोधरौ, धनधान्यपुत्रभूयस्त्वचि- ह्नलेखालाञ्छिततले स्निग्धोदग्रकोमलनखमणी ऋज्वनुपूर्ववृत्तताम्राङ्गुली संनतांसदेशे सौकुमार्यवत्यौ निमग्नपर्वसंधी च बाहुलते, तन्वी कम्बुवृत्त- बन्धुरा च कन्धरा, वृत्तमध्यविभक्तरागाधरम् असंक्षिप्तचारुचिबुकम् आ- पूर्णकठिनगण्डमण्डलम् असंगतानुवक्रनीलस्निग्धभ्रूलतम् अनतिप्रौढतिल- कुसुमसदृशनासिकम् असितधवलरक्तत्रिभागभासुरमधुराधीरसंचारमन्थ- रायतेक्षणम् इन्दुशकलसुन्दरललाटम् इन्द्रनीलशिलाकाररम्यालकपङ्क्ति द्वि- गुणकुण्डलितम्लाननालीकनाललुलितलम्बश्रवणपाशयुगलमाननकमलम्, अनतिभङ्गुरो बहुलः पर्यन्तेऽप्यकपिलरुचिरायामवानेकैकनिसर्गसम- स्निग्धनीलो गन्धग्राही च मूर्धजकलापः। सेयमाकृतिर्न व्यभिचरति शीलम्।

इत्यजयः। ककुन्दरं नितम्बास्थितकूपकद्वयम्। 'कूपकौ तु नितम्बस्थौ द्वयहीने ककुन्दरे।' इत्यमरः। रथाङ्गं चक्रम्। संस्थितिर्मर्यादा। तनुतरमतिसूक्ष्मम्। चूचुकं कुचाग्रम्। 'चूचुकं तु कुचाग्रं स्यात्' इत्यमरः। पयोधरौ स्तनौ। पुत्रभूयस्त्वं पुत्रबाहुल्यम्। स्निग्धा उदग्राः कोमलाश्च नखमणयो ययोस्ते। अंसः स्कन्धः। कम्बुः शङ्खः। 'शङ्खः स्यात्कम्बुरस्त्रियौ' इत्यमरः। कन्धरा ग्रीवा। चिबुकं हनुः। त्रिभागे च भासुरे च मधुराधीरसंचारे च मन्थरे च आयते च ईक्षणे नेत्रे यस्य। इन्दुशकलमर्धचन्द्रः। नालीकं कमलम्। 'नालीकः शरशल्याङ्गेष्वब्जखण्डे नपुंसकम्' इति मेदिनी। श्रवणः कर्णः। द्वौ गुणौ यस्य तद् द्विगुणं कुण्डलितं च यन्म्लानं नालीकनालं तद्वल्लुलितौ लम्बौ च यौ प्रशस्तौ कर्णौ कर्णपाशौ तयोर्युगलं यत्र। कपिलरुचिः पिङ्गलरुचिः। न कपिलरुचिरकपिलरुचिः। 'कडारः कपिलः पिङ्गः' इत्यमरः। आयामो दैर्घ्यं तद्वान्। मूर्धजकलापः केशकलापः। ''स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्गुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेत्. मत्स्याङ्कुशाब्जयववज्रहलासिचिह्नावस्वेदनौ मृदुतलौ चरणौ प्रशस्तौ। जङ्घे च रोमरहिते विपुले सुवृत्ते जानुद्वयं सममतुल्यमसंधिदेशम्॥ ऊरू घनौ करिकरप्रतिमावरोमावश्वत्थपत्रसदृशं विपुलं च गुह्यम्॥ विस्तीर्णमांसोपचितो नितम्बो गुरुश्च धत्ते रशनाकलापम्। नाभिर्गभीरा विपुलाऽङ्गनानां प्रदक्षिणावर्तगता च शस्ता॥ मध्यं स्त्रियास्त्रिवलनान्तमरोमशं च वृत्तौ घनावविषमौ कठिनावुरःस्थौ। रोमप्रवर्जितमुरो मृदु चाङ्गनानां ग्रीवा च कम्बुनिचिता-

१ उन्मग्नानन्तचूचुकौ. २ स्निग्धोदर. ३ मृदु. ४ संगता०. ५ मधुरधीर.

आसज्जति च मे हृदयमस्यामेव। तत्परीक्ष्यैनामुद्वहेयम्। अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरंपराः' इति स्निग्धदृष्टिराचष्ट—'भद्रे, कच्चिदस्ति कौशलं शालिप्रस्थेनानेन संपन्नमाहारमस्मानभ्यवहारयितुम्' इति। ततस्तया वृद्धदासी साकूतमालोकिता। तस्य हस्तात्प्रस्थमात्रं धान्यमादाय कचिदलिन्दोद्देशे सुसिक्तसंमृष्टे दत्तपादशौचमुपावेशयत्। सा कन्या तान्गन्धशालीन्संक्षुद्य मात्रया विशोष्यातपे मुहुर्मुहुः परिवर्त्य स्थिरसमायां भूमौ नालीपृष्ठेन मृदुमृदु घट्टयन्ती तुषैरखण्डैस्तण्डुलान्पृथक्चकार। जगाद च धात्रीम्—'मातः, एभिस्तुषैरर्थिनो भूषणमृजाक्रियाक्षमैः स्वर्णकाराः। तेभ्य इमान्दत्त्वा लब्धाभिः काकिणीभिः स्थिरतराण्यनत्यार्द्राणि नातिशुष्काणि काष्ठानि मितंपचां स्थालीमुभे शरावे चाहर' इति। तथाकृते तया तांस्तण्डुलाननतिनिम्नोत्तानविस्तीर्णकुक्षौ ककुभोलूखले लोहपत्रवेष्टितमुखेन समशरीरेण विभाव्यमानमध्यतानवेन

---

ऽर्थसुखानि धत्ते॥ बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरबिम्बरूपधृक्। कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदाः॥ दाक्षिण्ययुक्तमशठं परपुष्टहंसवल्गुप्रभाषणमदीनमसौख्यं च। नासा समा समपुटा रुचिरप्रशस्ता इन्दीवरनीरजदले द्युतिहारिणी च॥ नो संगते नातिपृथू न लम्बे शस्ते भ्रुवौ बालशशाङ्कवक्रे। अर्धेन्दुसंस्थानमलोमशं च शस्तं ललाटं न तलं न तुङ्गम्॥ कर्णयुग्ममपि युक्तमांसलं शस्यते मृदु समं समाहितम्। स्निग्धनीलमृदुकुञ्चितलम्बाः मूर्धजाः शुभकराः शिरःस्थिताः॥ इति वराहमिहिरः।" इति भूषणा। आसज्जति। सक्तं भवतीत्यर्थः। उद्वहेयम्। उद्वहामीत्यर्थः। अनुशयः पश्चात्तापः। 'भवेदनुशयो द्वेषे पश्चात्तापानुबन्धयोः' इति विश्वः। अभ्यवहारयितुं भोजयितुम्। साकूतं साभिप्रायम्। 'आकूतं स्यादभिप्रायः' इति हलायुधः। अलिन्दं देहली। सेति। मात्रयाऽल्पपरिमाणेन। 'मात्रा परिच्छदे वर्णे मानेऽल्पे' इति रत्नमाला। आतपे उष्णे। मृदुमृदु शनैःशनैरित्यर्थः। तुषैरिति 'पृथग्विनानाना—' इति तृतीया। मृजा शुद्धिः। काकिणीभिः कपर्दिकाभिः। 'वराटकानां दशकद्वयं स्यात्सा काकिणी' इति भास्कराचार्यः। स्थिरतराणि सारवन्ति। मितंपचाम्। 'मितनखे च' इति खश्। शरावे मृत्पात्रे। 'शरावो वर्धमानकः' इत्यमरः। विस्तीर्णकुक्षौ बृहदुदरे। 'नातिनम्रोत्तानविस्तीर्णः कुक्षिर्यस्येत्यर्थः।' इति भूषणा। ककुभो वृक्षविशेषः। 'ककुभो भूरुहे वीणाप्रसेवे' इति महीपः। काष्ठोलूखले इति भावः। विभाव्यमानं संभाव्यमानम्। मध्यतानवं मध्ये कृशत्वम्। तनो-

---

१ अथ च. २ नातिनिम्न.

व्यायतेन गुरुणा खादिरेण मुसलेन चतुरलैलितोत्क्षेपणावक्षेपणायासितभुजमसकृदङ्गुलीभिरुद्धृत्योद्धृत्यावहत्य शूर्पशोधितकणकिंशारुकांस्तण्डुलानसकृदद्भिः प्रक्षाल्य क्वथितपञ्चगुणे जले दत्तचुल्लीपूजा प्राक्षिपत्। प्रश्लथावयवेषु प्रस्फुरत्सु तण्डुलेषु मुकुलावस्थामतिवर्तमानेषु संक्षिप्यानलमुपहितमुखपिधानया स्थाल्याऽन्नमण्डमगालयत्। दर्व्या चावघट्ट्य मात्रया परिवर्त्य समपक्केषु सिक्थेषु तां स्थालीमधोमुखीमवातिष्ठिपत्। इन्धनान्यन्तःसाराण्यम्भसा समभ्युक्ष्य प्रशमिताग्नीनि कृष्णाङ्गारीकृत्य तदर्थिभ्यः प्राहिणोत्—'एभिर्लब्धाः काकिणीर्दत्त्वा शाकं घृतं दधि तैलमामलकं चिञ्चाफलं च यथालाभमानय' इति। तथाऽनुष्ठिते च तया द्वित्रानुपदंशानुपपाद्य तदन्नमण्डमार्द्रवालुकोपहितनवशरावगतमतिमृदुना तालवृन्तानिलेन शीतलीकृत्य सलवणसंभारं दत्ताङ्गारधूपवासं च संपाद्य, तदप्यामलकं श्लक्ष्णपिष्टमुत्पलगन्धि कृत्वा धात्रीमुखेन स्नानाय तमचोदयत्। तया च स्नानशुद्धया दत्ततैलामलकः क्रमेण सस्नौ। स्नातः सिक्तमृष्टे कुट्टिमे फलकमारुह्य पाण्डुहरितस्य त्रिभागशेषलूनस्याङ्गणकदलीपलाशस्योपरि शरावद्वयं दत्तमार्द्रमभिमृशन्नतिष्ठत्। सा तु तां पेयामेवाग्रे समुपाहरत्। पीत्वा चापनीताध्वक्लमः प्रहृष्टः प्रक्लिन्नसकलगात्रः स्थितोऽभूत्। ततस्तस्य शाल्योदनस्य दर्वीद्वयं दत्त्वा सर्पिर्मात्रां सूपमुपदंशं चोपजहार। इमं च

---

भावस्तानवम्। व्यायतेन दीर्घेण। गुरुणा स्थूलेन। उत्क्षेपणमूर्ध्वीकरणम्। अवक्षेपणमधः पातनम्। किंशारुम्। 'किंशारुः सस्यशूकं स्यात्' इत्यमरः। असकृद्वारंवारम्। क्वथितेति। 'क्वथितं च तत्पञ्चगुणं चेत्यर्थः' इति भूषणा। मुकुलावस्थां कलिकावस्थाम्। अन्नमण्डं भक्तपानीयम्। अवघट्ट्य अवगाह्येत्यर्थः। अन्तःसाराण्युपर्येव दग्धानि। द्वित्रान्कतिपयान्। उपदंशाञ्शाकादीन्। अचोदयत प्रेरयामासेत्यर्थः। सिक्तमृष्ट आदौ सिक्तः पश्चान्मृष्टः। कुट्टिमं बद्धभूमिकम्। 'त्रिषु भागेषु यः शेषोऽग्रिमस्तत्र लूनस्य छिन्नस्येत्यर्थः।' इति भूषणा। अङ्गणे या कदली रम्भा तस्याः पलाशं पत्रं तस्योपरि। अभिमृशन्स्पृशन्। सा त्विति। पेया ससिक्था। 'मण्डोऽसिक्थः, ससिक्था पेया, परिसिक्था यवागूश्च, घनसिक्था विलेपी, परिस्रुतस्त्वोदनो भक्तः' इति वाग्भटोक्तेः। ओदनस्य दर्वीद्वयं दत्त्वा। दर्वीद्वयमात्रमोदनं दत्त्वेत्यर्थः। सर्पिर्मात्राम्। अल्पघृतमिति यावत्। सूपं वराान्नम्।

---

१ ललितक्षेपणोत्क्षेपणायासित. २ चावगाह्य. ३ परावृत्य. ४ निरुष्णाङ्गारीकृत्य ५ स्नापनः. ६ हरितात्रि०. ७ अद्भिः.

दध्ना च त्रिजातकावचूर्णितेन सुरभिशीतलाभ्यां च कालशेयकाञ्जिकाभ्यां शेषमन्नमभोजयत्। सशेष एवान्धस्यसावतृप्यत्। अयाचत च पानीयम्। अथ नवभृङ्गारसंभृतमगुरुधूपधूपितमभिनवपाटलाकुसुमवासितमुत्फुल्लोत्पलग्रथितसौरभं वारि नालीधारात्मना पातयांबभूव। सोऽपि मुखोपहितशरावेण हिमशिशिरकणकरालितारुणायमानाक्षिपक्ष्मा धाराखाभिनन्दितश्रवणः स्पर्शसुखोद्भिन्नरोमाञ्चकर्कशकपोलः परिमलप्रवालोत्पीडफुल्लघ्राणरन्ध्रो माधुर्यप्रकर्षावर्जितरसनेन्द्रियस्तदच्छं पानीयमाकण्ठं पपौ। शिरःकम्पसंज्ञावारिता च पुनरपरकरकेणाचमनमदत्त कन्या। वृद्धया तु तदुच्छिष्टमपोह्य हरितगोमयोपलिप्ते कुट्टिमे स्वमेवोत्तरीयकर्पटं व्यवधाय क्षणमशेत। परितुष्टश्च विधिवदुपयम्य कन्यां निन्ये। नीत्वैतदनपेक्षः कामपि गणिकामवरोधमकरोत्। तामप्यसौ प्रियसखीमिवोपाचरत्। पतिं च दैवतमिव मुक्ततन्द्रा पर्यचरत्। गृहकार्याणि चाहीनमन्वतिष्ठत्। परिजनं च दाक्षिण्यनिधिरात्माधीनमकरोत्। तद्गुणवशीकृतश्च भर्ता सर्वमेव कुटुम्बं तदायत्तमेव कृत्वा तदेकाधीनजीवितशरीरस्त्रिवर्गं निर्विवेश। तद्ब्रवीमि—'गृहिणः प्रियहिताय दारगुणाः' इति।

उपदंशं च शाकादि। त्रिजातकं त्वक्तैलं त्रिकटु वा। अवचूर्णितेन विलोडितेन। कालशेयं तक्रम्। 'दण्डाहतं कालशेयमरिष्टमपि गोरसः।' इत्यमरः। 'कलशिर्घटस्तत्र भवम्।' 'दृतिकुक्षिकलशि—' इति ढञ्।'—इति भूषणा। काञ्जिकम्। 'आरनालकसौवीरकुल्माषाभिषुतानि च। अवन्तिसोमधान्याम्लकुञ्जलानि च काञ्जिके॥' इत्यमरः। अन्धस्योदने। 'भिस्सा स्त्री भक्तमन्धोऽन्नमोदनोऽस्त्री सदीदिविः' इत्यमरः। अथेति। धारात्मना अविरलधारयेत्यर्थः। हिमशिशिरकणैः करालितानि अरुणायमानानि च अक्षिपक्ष्माणि यस्य। 'हिमशिशिरेतीन्द्रियतृप्तिरुक्ता। उक्तं च माघेऽपि—'कान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ। स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः॥'—इति भूषणा। माधुर्यस्य प्रकर्षेण आवर्जितं तर्पितं रसनेन्द्रियं घ्राणेन्द्रियं यस्य। आचमनमदत्तेति। अत्र याज्ञवल्क्यः—'स्नात्वा पीत्वा क्षुते सुप्ते भुक्त्वा रथ्योपसर्पणे। आचान्तः पुनराचामेद्वासो विपरिधाय च॥' इति। हरितगोमयम्। 'गोश्च पुरीषे' इति मयट्। कर्पटं जीर्णवस्त्रम्। मुक्ततन्द्रा त्यक्तालस्या। अहीनमत्यर्थम्। दक्षिणस्य भावः दाक्षिण्यं तस्य निधिः। तदायत्तं तदधीनम्। त्रिवर्गं धर्मार्थकामान्।

१ नालीति नास्ति क्वचित्. २ प्रवाह॰. ३ आवर्जित.

ततस्तेनानुयुक्तो निम्बवतीवृत्तमाख्यातवान्—'अस्ति सौराष्ट्रेषु वलभी नाम नगरी। तस्यां गृहगुप्तनाम्नो गुह्यकेन्द्रतुल्यविभवस्य नाविकपतेर्दुहिता रत्नवती नाम। तां किल मधुमत्याः समुपागम्य बलभद्रो नाम सार्थवाहपुत्रः पर्यणैषीत्। तयाऽपि नववध्वा रहसि रभसविघ्नितसुरतसुखो झटिति द्वेषमल्पेतरं बबन्ध। न तां पुनर्द्रष्टुमिष्टवान्। तद्गृहागमनमपि सुहृद्वाक्यशतातिवर्ती लज्जया परिजहार। तां च दुर्भगां तदाप्रभृत्येव 'नेयं रत्नवती निम्बवती चेयम्' इति स्वजनः परजनश्च परिबभूव। गते च कस्मिंश्चित्काले सा त्वनुतप्यमाना 'का मे गतिः' इति विमृशन्ती कामपि वृद्धप्रव्राजिकां मातृस्थानीयां देवशेषकुसुमैरुपास्थितामपश्यत्। तस्याः पुरो रहसि सकरुणं रुरोद। तयाऽप्युदश्रुमुख्या बहुप्रकारमनुनीय रुदितकारणं पृष्टा त्रपमाणाऽपि कार्यगौरवात्कथंचिदब्रवीत्—'अम्ब किं ब्रवीमि। दौर्भाग्यं नाम जीवन्मरणमेवाङ्गनानां, विशेषतश्च कुलवधूनाम्। तस्याहमस्म्युदाहरणभूता। मातृप्रमुखोऽपि ज्ञातिवर्गो मामवज्ञयैव पश्यति। तेन सुदृष्टां मां कुरु। न चेत्त्यजेयमद्यैव निष्प्रयोजनान्प्राणान्। आ विरामाच्च मे रहस्यं नाश्राव्यम्' इति पादयोः पपात। सैनामुत्थाप्योद्बाष्पोवाच—'वत्से मा अध्यवस्यः साहसम्। इयमस्मि त्वन्निदेशवर्तिनी। यावति ममोपयोगस्तव तावति भवाम्यनन्याधीना। यद्येवासि निर्विण्णा तपश्चर त्वं मदधिष्ठिता पारलौकिकाय कल्याणाय। नन्वयमुदर्कः प्राक्तनस्य दुष्कृतस्य यदनेनाकारणेद्दशेन

---

अस्तीति। गुह्यकेन्द्रः कुबेरः। नाविका नौभिर्जीवन्तीति तथा। मधुमत्या नगर्याः। पर्यणैषीत्परिणयनमकरोत्। अल्पेतरं बहुतरमित्यर्थः। दुर्भगां दुरदृष्टाम्। सा निम्बवती। अनुतप्यमानाऽनुतापं प्राप्तवती। प्रव्राजिका संन्यासिनी। देवशेषकुसुमैर्निर्माल्यपुष्पैः। तयाऽपि वृद्धप्रव्राजिकया। रुदितं रोदनम्। त्रपमाणा लज्जादती। गौरवात् महत्त्वात्। दौर्भाग्यं भर्तृवैमुख्यम्। निष्प्रयोजनानकिंचित्करान्। रहस्यं गोप्यम्। उद्बाष्पोद्गतबाष्पा। यावति तावतीति। प्रयोजने इत्यर्थः। परलोके भवं पारलौकिकं तस्मै पारलौकिकाय। उदर्कः भावि कर्मफलम्। 'उदर्कः फलमुत्तरम्' इत्यमरः।

---

१ परिजनश्च. २ कालान्तरं. ३ पारिव्राजिकाम्. ४ यावत्...तावत्. ५ यद्येवम्.

शीलेन जात्या चैवंभूतया समनुगता सत्यकस्मादेव भर्तृद्वेष्यतां गताऽसि । यदि कश्चिदस्त्युपायः पतिद्रोहप्रतिक्रियार्थे, दर्शयामुम् । मतिर्हि ते पटीयसी ' इति । अथासौ कथंचित्क्षणमधोमुखी ध्यात्वा दीर्घोष्णश्वासपूर्वमवोचत्—' भगवति पतिरेव दैवतं वनितानाम्, विशेषतश्च कुलजानाम् । अतस्तच्छुश्रूषणाभ्युपायहेतुभूतं किंचिदाचरणीयम् । अस्त्यस्मत्प्रातिवेश्यो वणिक् । अभिजनेन विभवेन राजान्तरङ्गभावेन च सर्वपौरानतीत्य वर्तते । तस्य कन्या कनकवती नाम मत्समानरूपावयवा ममातिस्निग्धा सखी । तया सह तद्विमानहर्म्यतले ततोऽपि द्विगुणमण्डिता विहरिष्यामि । त्वया तु तन्मातृप्रार्थनं सकरुणमभिधाय मत्पतिरेतद्गृहं कथंचनानेयः । समीपगतेषु च युष्मासु क्रीडामत्ता नाम कन्दुकं भ्रंशयेयम् । अथ तमादाय तस्य हस्ते दत्त्वा वक्ष्यसि—' पुत्र, तवेयं भार्यासखी निधिपतिदत्तस्य सर्वश्रेष्ठिमुख्यस्य कन्या कनकवती नाम । त्वामियमनवस्थो निष्करुणश्चेति रत्नवतीनिमित्तमत्यर्थं निन्दति । तदेष कन्दुको विपक्षधनं प्रत्यर्पणीयम् ' इति । स तथोक्तो नियतमुन्मुखीभूय तामेव प्रियसखीं मन्यमानो मां, बद्धाञ्जलि याचमानायै मह्यं भूयस्त्वत्प्रार्थितः साभिलाषमर्पयिष्यति । तेन रन्ध्रेणोपश्लिष्य रागमुज्ज्वलीकृत्य यथाऽसौ कृतसंकेतो देशान्तरमादाय मां गमिष्यति तथोपपादनीयम् ' इति । [2]हर्षाभ्युपेतया चानया तथैव संपादितम् । अथैतां कनकवतीति वृद्धतापसीविप्रलब्धो बलभद्रः सर[3]त्नसाराभरणामादाय निशि नीरन्ध्रे तमसि प्रावसत् । सा तु तापसी

आकारेण शरीराकृत्या । सौन्दर्येणेत्यर्थः । जात्या विशिष्टकुलेन । एवंभूतया स्पृहणीययेत्यर्थः । **यदीति** । पत्युर्द्रोहः पराङ्मुखता । पटीयस्यतिशयेन पटुः । असौ निम्बवती । शुश्रूषणं सेवा । प्रातिवेश्यः प्रतिवेशे समीपगृहे भवः । वणिग्वाणिज्यकर्ता । अभिजनेन कुलीनतया । विभवेन सामर्थ्येन । राजान्तरङ्गभावेन राज्ञो विश्रामभूमित्वेनेत्यर्थः । अतीत्यातिक्रम्य । मण्डिताऽलंकृता । **विमानहर्म्येति** । ' विमानो व्योमयाने च सप्तभूमिगृहेऽपि च । ' इति कोशः । तन्मातृप्रार्थनं कनकवतीमातृप्रार्थनमिति । मां तामेव प्रियसखीं मन्यमानः । बद्धाञ्जलि बद्धः अञ्जलिर्यस्मिन्कर्मणि तद् यथा स्यात्तथा । क्रियाविशेषणमिदम् । रन्ध्रेण मिषेण । उपाश्लिष्यालिङ्ग्य । उपेत्येत्यर्थः । रागमिच्छाम् । उज्ज्वलीकृत्य । प्रकटीकृत्येत्यर्थः । **अथेति** । नीरन्ध्रे तमसि गाढान्धकारे ।

१ एकदैव. २ सहर्षा०. ३ सरत्नाभरणाम्.

वार्तामापादयत्—'मन्देन मया निर्निमित्तमुपेक्षिता रत्नवती श्वशुरौ च परिभूतौ सुहृदश्चातिवर्तिताः। तदत्रैव संसृष्टो जीवितुं जिहेमीति बलभद्रः पूर्वेद्युर्मामकथयत्। नूनमसौ तेन नीता व्यक्तिश्चाचिराद्भविष्यति' इति। तच्छ्रुत्वा तद्बान्धवास्तदन्वेषणं प्रति शिथिलयत्नास्तस्थुः। रत्नवती तु मार्गे कांचित्पण्यदासीं संगृह्य तयोह्यमानपाथेयाद्युपस्करा खेटकपुरमगमत्। अमुत्र च व्यवहारकुशलो बलभद्रः स्वल्पेनैव मूलेन महद्धनमुपार्जयत्। पौराग्रगण्यश्चासीत्। परिजनश्च भूयानर्थवशात्समाजगाम। ततस्तां प्रथमदासीं 'न कर्म करोषि, दृष्टं मुष्णासि, अप्रियं ब्रवीषि' इति परुषमुक्त्वा बह्वताडयत्। चेटी तु प्रसादकालोपाख्यातरहस्यस्य वृत्तान्तैकदेशमात्तरोषा निर्बिभेद। तच्छ्रुत्वा तु लुब्धेन दण्डवाहिना पौरवृद्धसंनिधौ 'निधिपतिदत्तस्य कन्यां कनकवतीं मोषेणापहृत्यास्मत्पुरे निवसत्येष दुर्मतिर्बलभद्रः। तस्य सर्वस्वहरणं न भवद्भिः प्रतिबन्धनीयम्' इति नितरामभर्त्सयत। भीतं च बलभद्रमभिजगाद रत्नवती—'न भेतव्यम्। ब्रूहि—नेयं निधिपतिदत्तकन्या कनकवती। वलभ्यामेव गृहगुप्तदुहिता रत्नवती नामेयं दत्ता पितृभ्यां मया च न्यायोढा। न चेत्प्रतीथ प्राणिधिं प्रहिणुतास्या बन्धुपार्श्वम्' इति। बलभद्रस्तु तथोक्त्वा श्रेणिप्रातिभाव्येन तावदेवातिष्ठद्यावत्तत्पुरलेख्यलब्धवृत्तान्तो गृहगुप्तः खेटकपुरमागत्य सह जामात्रा दुहितरमतिप्रीतः प्रत्यनैषीत्। तथा दृष्ट्वा रत्नवती कनकवतीति भावयतस्तस्यैव बलभद्रस्यातिवल्लभा जाता। तद्ब्रवीमि—'कामो नाम संकल्पः' इति।

अतिवर्तिताः क्रान्ताः। संसृष्टः तया संगतः। दासीं चेटीम् 'चेटी चिरण्टी दासी च' इति वैजयन्ती। पाथेयं मार्गे भक्षणसामग्री। खेटकपुरमल्पनगरम्। मूलेन मूलधनेन। उपाख्यातरहस्यस्य कथितकनकवत्यपहारवृत्तान्तस्य। लुब्धेन। 'लुब्धोऽभिलाषुकस्तृष्णक्' इत्यमरः। दण्डवाहिना दण्डाधिकारिणा। न्यायोढा न्यायमार्गेणोढा। परिणीतेत्यर्थः। प्रणिधिः सेवकः। श्रेणीप्रातिभाव्येन वणिजां श्रेणीं प्रतिभूस्थाने कृत्वेत्यर्थः।

---

१ पाख्यातमस्या वृ०. २ अनर्जयत. ३ दत्तस्य. ४ प्रतीतिरस्मिन्नर्थे. ५ अतिप्रीतिः,

तदनन्तरमसौ नितम्बवतीवृत्तान्तमप्राक्षीत् । सोऽहमब्रवम्—'अस्ति शूरसेनेषु मथुरा नाम नगरी । तत्र कश्चित्कुलपुत्रः कलासु गणिकासु चातिरक्तः मित्रार्थं स्वभुजमात्रनिर्व्यूढानेककलहः कलहकण्टक इति कर्कशैरभिख्यापिताख्यः प्रत्यवात्सीत् । स चैकदा कस्यचिदागन्तोश्चित्रकरस्य हस्ते चित्रपटं ददर्श । तत्र काचिदालेख्यगता युवतिरालोकमात्रेणैव कलहकण्टकस्य कामातुरं चेतश्चकार । स च तमब्रवीत्—'भद्र विरुद्धमिवैतत्प्रतिभाति । यतः कुलजादुर्लभं वपुः, आभिजात्यशंसिनी च नम्रता, पाण्डुरा च मुखच्छविः, अनतिपरिभुक्तसुभगा च तनुः, प्रौढतानुविद्धा च दृष्टिः । न चैषा प्रोषितभर्तृका प्रवासचिह्नस्यैकवेण्यादेरदर्शनात् । लक्ष्म चैतद्दक्षिणपार्श्ववर्ति । तदियं वृद्धस्य कस्यचिद्वणिजो नातिपुंस्त्वस्य यथार्हसंभोगालाभपीडिता गृहिणी त्वयाऽतिकौशलाद्यथादृष्टमालिखिता भवितुमर्हति' इति । स तमभिप्रशस्याशंसत्—'सत्यमिदम् । अवन्तिपुर्यामुज्जयिन्यामनन्तकीर्तिनाम्नः सार्थवाहस्य भार्या यथार्थनामा नितम्बवती नामैषा सौन्दर्यविस्मितेन मयैवमालिखिता' इति । स तदेवोन्मनायमानस्तद्दर्शनाय परिव्राजोज्जयिनीम् । भार्गवो नाम भूत्वा भिक्षानिभेन तद्गृहं प्रविश्य तां ददर्श । दृष्ट्वा चात्यारूढमन्मथो निर्गत्य पौरमुख्येभ्यः श्मशानरक्षामयाचत । अलभत च ।

**अस्तीति ।** शूरसेनेषु देशेषु । कुलपुत्रः शूद्रः । 'कुलपुत्रः कुलीने च शूद्रे च' इति वैजयन्ती । कलासु चतुःषष्टिमितासु । गणिकासु वेश्यासु । स्वभुज एव स्वभुजमात्रं तेन निर्व्यूढा दृढीकृताः समाप्तिं नीताः अनेके कलहा येन । कर्कशैः परुषवादिभिः । स च कलहकण्टकः । तं चित्रकारम् । **भद्रेति ।** अभिजातस्य भाव आभिजात्यं कुलीनता । पाण्डुरा शुभ्रा । अनतिपरिभुक्ताऽलब्धातिभोगा । प्रौढतानुविद्धा प्रौढतासक्ता । वेणी कचबन्धः । 'वेणी कचस्य बन्धे स्यान्नदीनां संगमेऽपि च' इति विश्वः । 'लक्ष्म नखक्षतरूपं चिह्नम्' इति भूषणा । संभोगस्यालाभोऽप्राप्तिस्तेन पीडिता । उन्मनायमान उन्मनायतेऽसौ तथा । परिव्राज अगच्छदित्यर्थः । भार्गवो ज्यौतिषिकः । 'भार्गवो शुक्रदैवज्ञौ' इति वैजयन्ती । निभं मिषम् । 'निभो व्याजसदृक्षयोः' इति विश्वः । **दृष्ट्वा चेति ।** अत्यारूढमन्मथोऽतिप्रवृद्धकामः ।

---

१ परिवव्राज. २ नातिपरिभोगसुलभा. ३ एकत्र नास्ति क्वचित्. ४ नामधेया. ५ मिषेण.

तत्र लब्धैश्च शवावगुण्ठनपटादिभिः कामप्यर्हन्तिकां नाम श्रमणिकामुपासांचक्रे। तन्मुखेन च नितम्बवतीमुपांशु मन्त्रयामास। सा चैनां निर्भर्त्सयन्ती प्रत्याचचक्षे। श्रमणिकामुखाच्च दुष्करशीलभ्रंशां कुलस्त्रियमुपलभ्य रहसि दूतिकामशिक्षयत्—'भूयोऽप्युपतिष्ठ सार्थवाहभार्याम्। ब्रूहि चोपह्वरे, संसारदोषदर्शनात्समाधिमास्थाय मुमुक्षमाणो मादृशो जनः कुलवधूनां शीलपातने घटत इति क्व घटते। एतदपि त्वमत्युदारया समृद्ध्या रूपेणातिमानुषेण प्रथमेन वयसोपपन्नां किमितरनारीसुलभं चापलं स्पृष्टं न वेति परीक्षा कृता। तुष्टाऽस्मि तवैवमदुष्टभावतया। त्वामिदानीमुत्पन्नापत्यां द्रष्टुमिच्छामि। भर्ता तु भवत्याः केनचिद्ग्रहेणाधिष्ठितः पाण्डुरोगदुर्बलो भोगे चासमर्थः स्थितोऽभूत्। न च शक्यं तस्य विप्रमप्रतिकृत्यापत्यमस्माल्लब्धुम्। अतः प्रसीद। वृक्षवाटिकामेकाकिनी प्रविश्य मदुपनीतस्य कस्यचिन्मन्त्रवादिनश्छन्नमेव हस्ते चरणमर्पयित्वा तदभिमन्त्रितेन प्रणयकुपिता नाम भूत्वा भर्तारमुरसि प्रहर्तुमर्हसि। उपर्यसावुत्तमधातुपुष्टिमूर्जितापत्योत्पादनक्षमामासादयिष्यति। अनुवर्तिष्यते देवीमिवात्रभवतीम्। नात्र शङ्का कार्या' इति। सा तथोक्ता व्यक्तमभ्युपैष्यति। नक्तं मां वृक्षवाटिकां प्रवेश्य तामपि प्रवेशयिष्यसि। तावतैव त्वयाऽहमनुगृहीतो भवेयम्' इति। सा तथैवोपपादितवती। सोऽतिप्रीतस्तस्यामेव क्षपायां वृक्षवाटिकां गतो नितम्बवतीं निर्ग्रन्थिका-

---

पौरमुख्येभ्यः पौरश्रेष्ठेभ्यः। तत्र श्मशाने। शवावगुण्ठनपटः शववेष्टितवस्त्रम्। अर्हन्तिकां बौद्धपरिव्राजिकाम्। तन्मुखेन श्रमणिकामुखेन। उपांशु रहसि। मन्त्रयामास। भेदयामासेत्यर्थः। भ्रंशो नाशः। घटत ईहते। 'घट चेष्टायाम्'। क्व घटते क्व संगच्छते। 'घट योजने'। अतिमानुषेण मानुषमतिक्रम्य वर्तत इति तथा, तेन। प्रथमेन वयसा यौवनेन। अदुष्टभावः सुभावः। पातिव्रत्यादभ्रंश इत्यर्थः। उत्पन्नापत्यां जातापत्याम्। भोगे विषयसङ्गे। अप्रतिकृत्य। प्रतीकारमकृत्वेत्यर्थः। वृक्षवाटिकां गृहोपवनम्। ऊर्जितं च तदपत्यमूर्जितापत्यं समीचीनापत्यं तस्योत्पादने क्षमां समर्थाम्। न पतन्ति पितरोऽनेनेत्यपत्यम्। नक्तं रात्रौ। उपपादितवत्यङ्गीकृतवती।

१ उपनिमन्त्रयामास. २ अत्युदारतया. ३ स्वच्छन्दमेव. ४ उपपादितवती.

प्रयत्नेनोपनीतां पादे परामृशन्निव हेमनूपुरमेकमाक्षिप्य च्छुरिकयोरुमूले किंचिदालिख्य द्रुततरमपासरत् । सा तु सान्द्रत्रासा स्वमेव दुर्नयं गर्हमाणा जिघांसन्तीव श्रमणिकां तद्व्रणं भवनदीर्घिकायां प्रक्षाल्य दत्त्वा पटबन्धनं सामयापदेशादपरं चापनीय नूपुरं शयनपरा त्रिचतुराणि दिनान्येकान्ते निन्ये । स धूर्तः 'विक्रेष्ये' इति तेन नूपुरेण तमनन्तकीर्तिमुपाससाद । स दृष्ट्वा 'मम गृहिण्या एवैष नूपुरः कथमयमुपलब्धस्त्वया' इति तमब्रुवाणं निर्बन्धेन पप्रच्छ । स तु 'वणिग्ग्रामस्याग्रे वक्ष्यामि' इति स्थितोऽभूत् । पुनरसौ गृहिण्यै 'स्वनूपुरयुगलं प्रेषय' इति संदिदेश । सा च सलज्जं समाध्वसं च 'अद्य रात्रौ विश्रामप्रविष्टायां वृक्षवाटिकायां प्रभ्रष्टो ममैकः प्रशिथिलबन्धो नूपुरः । सोऽद्याप्यन्विष्टो न दृष्टः । स पुनरयं द्वितीयः' इत्यपरं प्राहिणोत् । अनया च वार्तयाऽमुं पुरस्कृत्य स वणिग्वणिग्जनसमाजमाजगाम । स चानुयुक्तो धूर्तः सविनयमावेदयत्—'विदितमेव खलु वो यथाऽहं युष्मदाज्ञया पितृवनमभिरक्ष्य तदुपजीवी प्रतिवसामि । लुब्धाश्च कदाचिन्मद्दर्शनभीरवो निशि दहेयुरपि शवानीति निशास्वपि श्मशानमधिशये । अपरेद्युर्दग्धादग्धं मृतकं चितायाः प्रसभमाकर्षन्तीं श्यामाकारां नारीमपश्यम् । अर्थलोभात्तु निगृह्य भयं सा संगृहीता । शस्त्रिकयोरुमूले यदृच्छया किंचिदुल्लिखितम् । एष च नूपुरश्चरणादाक्षिप्तः । तावत्येव द्रुतगतिः सा पलायिष्ट । सोऽयमस्यागमः । परं भवन्तः प्रमाणम्' इति । विमर्शे च तस्याः

---

निर्ग्रन्थिका भिक्षुकी श्रमणिका । सान्द्रत्रासा निबिडभया । पटबन्धनं वस्त्रबन्धनम् । सामयापदेशाद् रुग्णतामपदिश्य । गृहिणी स्त्री । नूपुरः पादभूषणम् । 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । वणिग्ग्रामस्य वणिजां समूहस्य । प्रशिथिलबन्धः श्लथबन्धः । न दृष्टो न लब्ध इत्यर्थः । पितृवनं श्मशानम् । तदुपजीवी श्मशानजीवी । मद्दर्शनभीरवो मद्दर्शनभयशीलाः । दहेयुरपीत्यत्र अपिः संभावनायाम् । दग्धं ज्वलितम् । मृतकं शवम् । चितायाः । चितामध्यादित्यर्थः । प्रसभं बलात् । विमर्शे

---

१ आकृष्य. २ उल्लिख्य. ३ पटेन च बद्ध्वा. ४ साध्वसं. ५ संनिगृ. ६ विमर्शेन.

शाकिनीत्वमैकमत्येन पौराणामभिमतमासीत् । भर्त्रा च परित्यक्ता तस्मिन्नेव श्मशाने बहु विलप्य पाशेनोद्बध्य मर्तुकामा तेन धूर्तेन नक्तमगृह्यत । अनुनीता च—'सुन्दरि त्वदाकारोन्मादितेन मया त्वदावर्जने बहूनुपायान्भिक्षुकीमुखेनोपन्यस्य तेष्वसिद्धेषु पुनरयमुपायो यावज्जीवमसाधारणीकृत्य रन्तुमाचरितः । तत्प्रसीदानन्यशरणायास्मै दासजनाय' इति मुहुर्मुहुश्चरणयोर्निपत्य प्रयुज्य सान्त्वशतानि तामगत्यन्तरामात्मवश्यामकरोत् । तदिदमुक्तम्—'दुष्करसाधनं प्रज्ञा' इति ।

स चेदमाकर्ण्य ब्रह्मराक्षसो मामपूपुजत् । अस्मिन्नेव क्षणे नातिप्रौढपुंनागमुकुलस्थूलानि मुक्ताफलानि सह सलिलबिन्दुभिरम्बरतलादपतन् । अहं तु 'किं न्विदम्' इत्युच्चक्षुरालोकयन्कमपि राक्षसं कांचिदङ्गनां विचेष्टमानगात्रीमाकर्षन्तमपश्यम् । कथमपहरत्यकामामपि स्त्रियमनाचारो नैर्ऋतः इति गगनगमनमन्दशक्तिरशस्त्रश्चातप्ये । स तु मत्संबन्धी ब्रह्मराक्षसः 'तिष्ठ तिष्ठ पाप, क्वापहरसि' इति भर्त्सयन्नुत्थाय राक्षसेन समसृज्यत । तां तु रोषादनपेक्षापविद्धाममरवृक्षमञ्जरीमिवान्तरिक्षादापतन्तीमुन्मुखप्रसारितोभयकरः कराभ्यामग्रहीषम् । उपगृह्य च वेपमानां संमीलिताक्षीं मदङ्गस्पर्शसुखेनोद्भिन्नरोमाञ्चां तादृशीमेव तामनवतारयन्नतिष्ठम् । तावत्तावुभावपि शैलशृङ्गैः पादपैश्च रभसोन्मूलितैर्मुष्टिपादप्रहारैश्च परस्परमक्षपयेताम् । पुनरहमतिमृदुनि पुलिनवति कुसुमलवलाञ्छिते सरस्तीरेऽवरोप्य सस्पृह

मिथो विचारे । शाकिनीत्वं पिशाचदैवतत्वम् । ऐयकत्येन विसंवादाभावेन । पौराणां नागरिकाणाम् । त्वदावर्जने त्वत्संमुखीकरणे । यावज्जीवं रन्तुमिति संबन्धः । अगत्यन्तरां न विद्यते गत्यन्तरं यस्यास्ताम् । आत्मवश्यामात्माधीनाम् । स चेदमिति । पुंनागो बकुलः । उच्चक्षुरूर्ध्वीकृतनेत्रः । विचेष्टमानगात्रीमात्ममोचनार्थं स्वाङ्गं चेष्टमानाम् । नैर्ऋतो राक्षसः । अतप्ये तापमापम् । अनपेक्षापविद्धामेवं त्यक्ता चेन्नश्येदित्यपेक्षाया अभावेन त्यक्ताम् । अमरवृक्षः कल्पद्रुमः । अन्तरिक्षादाकाशात् । वेपमानां कम्पमानाम् । उद्भिन्ना रोमाञ्चा यस्याः सा उद्भिन्नरोमाञ्चा उद्गतसात्त्विकभावा ताम् । तावुभौ राक्षसब्रह्मराक्षसौ । पुलिनं तोयोत्थितो देशः । कुसमलवलाञ्छिते पुष्पलेशचिह्निते ।

१ तम्. २ अनपेक्षया. ३ स्पर्शसुखेनेव. ४ अस्मात्परं 'जानुभिश्च' इत्य० ए० पु०.

निर्वर्णयंस्तां मत्प्राणैकवल्लभां राजकन्यां कन्दुकावतीमलक्षयम् । सा हि मया समाश्वास्यमाना तिर्यङ् मामभिनिरूप्य जातप्रत्यभिज्ञा सकरुणमरोदीत् । अवादीच्च—'नाथ त्वद्दर्शनादुपोढरागा तस्मिन्कन्दुकोत्सवे पुनः सख्या चन्द्रसेनया त्वत्कथाभिरेव समाश्वासिताऽस्मि । त्वं किल समुद्रमध्ये मज्जितः पापेन मद्भ्रात्रा भीमधन्वना इति श्रुत्वा सखीजनं परिजनं च वञ्चयित्वा जीवितं जिहासुरेकाकिनी क्रीडावनमुपागमम् । तत्र च मामचकमत कामरूप एष राक्षसाधमः । सोऽयं मया भीतयाऽवधूतप्रार्थनः स्फुरन्तीं मां निगृह्याभ्यधावत् । अत्रैवमवसितोऽभूत् अहं च दैवात्तवैव जीवितेशस्य हस्ते पतिता । भद्रं तव' इति । श्रुत्वा च तया सहावरुह्य नावमध्यारोहम् । मुक्ता च नौः प्रतिवातप्रेरिता तामेव दामलिप्तां प्रत्युपातिष्ठत् । अवरूढाश्च वयमश्रौष्म । 'तनयस्य च तनयायाश्च नाशादनन्यापत्यस्तुङ्गधन्वा सुह्मपतिर्निष्कल[1]: स्वयं सकलत्र एव निष्कलङ्कगङ्गारोधस्यनशनेनोपरन्तुं प्रतिष्ठते । सह तेन मर्तुमिच्छत्यनन्यनाथोऽनुरक्तः पौरवृद्धलोकः ।' इत्यश्रुमुखीनां प्रजानामाक्रन्दमश्रृणुम । अथाहमस्मै राज्ञे यथावृत्तमाख्याय तदपत्यद्वयं प्रत्यर्पितवान् । प्रीतेन तेन जामाता कृतोऽस्मि दामलिप्तेश्वरेण । तत्पुत्रो मदनुजीवी जातः । मद्भाज्ञप्तेन चामुना प्राणवदुज्झिता चन्द्रसेना कोशदासमभजत् । ततश्च सिंहवर्मसाहाय्यार्थमत्रागत्य भर्तुस्तव दर्शनोत्सवसुखमनुभवामि' इति ।

श्रुत्वा 'चित्रेयं दैवगतिः । अवसरेषु पुष्कलः पुरुषकारः ।' इत्यभिधाय भूयः स्मिताभिषिक्तदन्तच्छदो[3] मन्त्रगुप्ते हर्षोत्फुल्लं चक्षुः

प्रत्यभिज्ञा पूर्वदृष्टत्वम् । उपोढरागा प्ररूढमन्मथा । मामचकमत मय्यभिलाषं बबन्ध । अवसितो मृत्युं प्राप्तः । जीवितेशः प्रियः । 'जीवितेशः प्रिये यमे' इति कोशः । भद्रं कल्याणम् । निष्कलो वृद्धः । 'निष्कलः स्थविरः समौ' इति वैजयन्ती । निष्कलङ्कं पुण्यम् । उपरन्तुं मरणं संपादयितुम् । पुष्कलो महान् । पुरुषकारः पुरुषार्थः । स्मितेन हास्येन अभिषिक्तः सिञ्चितो व्याप्त इति यावत् दन्तच्छद ओष्ठो यस्य सः ।

१ विकलः २ प्रणिहिता; त्यक्ता प्राणादूर्जिता. ३ ०च्छदे.

पातयामास देवो राजवाहनः । स किल करकमलेन किंचित्संवृताननो ललितवल्लभारभसदत्तदन्तक्षतव्यसनविह्वलाधरमणिर्निरोष्ठ्यवर्णमात्मचरितमाचचक्षे—

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मित्रगुप्तचरितं नाम षष्ठ उच्छ्वासः ।

## सप्तमोच्छ्वासः ।

राजाधिराजनन्दन नगरन्ध्रगतस्य ते गतिं ज्ञास्यन्नहं च गतः कैदाचित्कलिङ्गान् । कलिङ्गनगरस्य नात्यासन्नसंस्थितजनदाहस्थानसंसक्तस्य कस्यचित्कान्तारधरणिजस्यास्तीर्णसरसकिसलयसंस्तरे तले निषद्य निद्रालीढदृष्टिरशायिषि । गलति च कालरात्रिशिखण्डजालकान्धकारे चलितरक्षसि क्षरितनीहारे निजनिलयनिलीननिःशेषजने नितान्तशीते निशीथे घनतरसालशाखान्तरालनिर्ह्रादि नेत्रनिंसिनीं निद्रां निगृह्णत् कर्णदेशं गतं 'कथं खलेनानेन दग्धसिद्धेन रिरंसाकाले निदेशं दित्सता जन एष रागेणानर्गलेनार्दित इत्थं खिलीकृतः । क्रियेतास्याणकनरेन्द्रस्य केनचिदनन्तशक्तिना सिद्ध्यन्तरायः '

ललिता या वल्लभा तया रभसेन दत्तानि दन्तक्षतानि एव व्यसनं यद्वा तेभ्यो व्यसनं तेन विह्वलः अधरमणिर्यस्य । निरोष्ठ्यवर्णमोष्ठ्यचरितवर्णरहितम् ॥

इति श्रीदशकुमारचरितटीकायां षष्ठ उच्छ्वासः ।

इदानीं मन्त्रगुप्तः स्वचरितं वक्तुमुपक्रमते—राजेति । अत्रौष्ठ्यावर्णाभावरूपं चित्रं कविना साधितम् । अत्यासन्नमतिसमीपम् । संस्थितो मृतः । 'परेतप्रेतसंस्थिताः' इत्यमरः । 'कान्तारं वर्त्म दुर्गमम्' इत्यमरः। धरणिजो वृक्षः । सरसमार्द्रम् । आलीढा व्याप्ता । शिखण्डजालकं केशसमूहः । कालरात्र्याः शिखण्डजालकमिव अन्धकारस्तस्मिन् । चलितरक्षसीत्यनेन रात्रिंचरत्वद्योतनम् । क्षरितनीहारे निःसृतहिमे । निलयं गृहम् । निलीनाः स्थिताः । साला एतदाख्या वृक्षाः । घनतराणां निबिडानां सालशाखानामन्तरालानि तेषु निर्ह्रादि इति रटितमित्यस्य विशेषणम् । 'निर्ह्रादिनि' इति पाठे निशीथे इत्यस्य विशेषणम् । नेत्रनिंसिनीं नेत्रस्पर्शिनीम् । 'णिसि चुम्बने' । दग्धसिद्धेन सिद्धकतकेन । रिरंसा रन्तुमिच्छा । अनर्गलेनाप्रतिबन्धेन । खिलीकृतः प्रतिहतः । क्रियेत कर्मणि संभावनायां लिङ् । अणकः कुत्सितः । 'पापाणके कुत्सितैः' इति । नरेन्द्रो मन्त्रज्ञः । दिदृक्षा द्रष्टुमिच्छा।

१ तदा. २ चरित. ३ निशान्त. ४ निर्ह्रादिनि. ५ निगृह्णन्. ६ नरेन्द्रेण. ७ खलीकृतः

इति किंकरस्य किंकर्याश्चातिकातरं रटितं । तदाकर्ण्य 'क एषः सिद्धः का च सिद्धिः किं चानेन किंकरेण करिष्यते' इति दिदृक्षाक्रान्तहृदयः किंकरगतया दिशा किंचिदन्तरं गतस्तरलतरनरास्थिशकलरचितालंकाराक्रान्तकायं दहनदग्धकाष्ठनिष्ठाङ्गाररजःकृताङ्गरागं तडिल्लताकारजटाधरं हिरण्यरेतस्यरण्यचक्रान्धकारराक्षसे क्षणक्षणगृहीतनानेन्धनग्रासचञ्चदर्चिषि दक्षिणेतरेण करेण तिलसिद्धार्थकादीन्निरन्तरचटचटायितानाकिरन्तं कंचिदद्राक्षं । तस्याग्रे स कृताञ्जलिः किंकरः 'किं करणीयं, दीयतां निदेशः' इत्यतिष्ठत् । आदिष्टश्चायं तेनातिनिकृष्टाशयेन— 'गच्छ कलिङ्गराजस्य कर्दनस्य कन्यां कनकलेखां कन्यागृहादिहानय' इति । स च तथाऽकार्षीत् । ततश्च तां त्रासेनालघीयसाऽस्रजर्जरेण च कण्ठेन रणरणिकागृहीतेन च हृदयेन 'हा तात हा जननि' इति क्रन्दन्तीं कीर्णश्मशानशेखरस्रजि शीर्णनहने शिरसिजानां संचये निगृह्यासिना शिलाशितेन शिरश्चिकर्तिषयाऽचेष्टत । झटिति चाच्छिद्य तस्य हस्तात्तां शस्त्रिकां तया निकृत्य तच्छिरः सजटाजालं निकटस्थस्य

तरलतराण्यत्युज्ज्वलानि । 'तरलो हाररत्ने च चञ्चले चोज्ज्वलेऽपि च ।' इति केशवः । नरास्थि मनुष्यास्थि । शकलं खण्डम् । अलंकार आभरणम् । निष्ठाङ्गाररजः । भस्मेत्यर्थः । 'निष्ठा निष्पत्तिनाशान्ताः' इति कोशः । तडिल्लता विद्युल्लता । हिरण्यरेतसि वह्नौ । 'हिरण्यरेता हुतभुक्' इत्यमरः । अरण्यचक्रे योऽन्धकारस्तस्य राक्षसे विनाशके इत्यर्थः । क्षणक्षणगृहीतानि यानि नानाविध नीन्धनानि काष्ठानि तेषां ग्रासेन चञ्चन्त्यः अर्चिषो ज्वाला यस्य तस्मिन् । दक्षिणेतरेण । वामेनेत्यर्थः । आकिरन्तं क्षिपन्तम् । अद्राक्षम् । दृष्टवानित्यर्थः । तस्येति होमकर्तुः । निदेश आज्ञा । अतिनिकृष्टो अतिनीचः आशयो मनो यस्येति तेन । कर्दन इति कलिङ्गराजनाम । अस्रजर्जरेणाश्रुक्लिन्नेन । 'अस्रः कोणे शिरसिजे चास्रमश्रुणि शोणिते ।' इति विश्वः । रणरणिकौत्सुक्यम् । 'औत्सुक्यं रणरणिका' इति महीपः । हृदयनेत्युपलक्षणे तृतीया । शीर्णनहनं श्लथबन्धने । संचयः समूहः । असिना खड्गेन । शिलाशितेन शाणतेजितेन । शिलासितेनेति पाठे शिलावदसितः श्यामस्तेन । शिरश्चिकर्तिषया शिरःकर्तनेच्छया । झटिति शीघ्रम् । आच्छिद्यापकृष्य । 'आच्छेदनं स्यादाक्षेपः' इति वररुचिः । तया शस्त्रिकया । तच्छिरः । होमकर्तुर्मस्तकमित्यर्थः । निकटस्थस्य समीपवर्तिनः ।

१ ०कारकान्तकायम्. २ शिलासितेन. ३ हस्तावसिलतां ताम्.

कस्यचिज्जीर्णसालस्य स्कन्धरन्ध्रे न्यधिषि। तन्निध्याय हृष्टतरः स राक्षसः क्षीणाधिरकथयत्—'आर्य कदर्यस्यास्य कदर्थनान्न कदाचिन्निद्राऽऽयाति नेत्रे। तर्जयति त्रासयति च अकृत्ये चाज्ञां ददाति। तदत्र कल्याणराशिना साधीयः कृतं यदेष नरकाकः कारणानां नारकीणां रसज्ञानाय नीतः शीतेतरदीधितिदेहजस्य नगरं। तदत्र दयानिधेरनन्ततेजसस्तेऽयं जनः कांचिदाज्ञां चिकीर्षति। आदिश अलं कालहरणेन' इत्यनंसीत्। आदिशं च तं—'सखे सैषा सज्जनाचरिता सरणिर्यदणीयसि कारणेऽनणीयानादरः संदृश्यते। न चेदिदं नेच्छसि सेयं संनताङ्गयष्टिरक्लेशार्हा सत्यनेनाकृत्यकारिणाऽत्यर्थं क्लेशिता तन्नयैनां निजनिलयं नान्यदितः किंचिदस्ति चित्ताराधनं नः' इति। अथ तदाकर्ण्य कर्णशेखरनीलनीरजाश्रितां धीरतरतारकां दृशं तिर्यक्किंचिदञ्चितां संचारयन्ती सलिलचरकेतनशरासनानतां चिल्लिकालता ललाटरङ्गस्थलीनर्तकीं लीलालसं लासयन्ती कण्टकितरक्तगण्डलेखा रागलज्जान्तराल-

जीर्णसालस्य जीर्णवृक्षस्य। न्यदधां निवेशितवान्। निध्याय आलोक्य। क्षीणाधिर्गतमानसव्यथः। कदर्यस्य कृपणस्य। 'कदर्ये कृपणक्षुद्रकिंपचानमितंपचाः।' इत्यमरः। कदर्थनात्क्लेशनात्। 'क्लेशनं तु कदर्थनम्' इति कोशः। अकृत्येऽपकारे। [कुत्सितकृत्ये।] साधीयोऽतिशयेन साध्विति तथा। नरकाको मनुष्यनिन्द्यः। कारणानां यातनानाम्। नारकीणां नरकसंबन्धिनीनाम्। शीतेतरदीधितिः सूर्यस्तद्देहजस्य। यमस्येत्यर्थः। अयं जनो मद्रूपः। कालहरणेन कालातिपातेन। अनंसीत् ननाम। 'णम प्रह्वत्वे'। आदिशमिति। सरणिः पद्धतिः। 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः। अणीयस्यल्पे। इदं मदुक्तम्। 'अणीयसि कारणेऽनणीयानादर इति नेच्छसीत्यर्थः' इति भूषणा। संनता नम्रा। अकृत्यकारिणाऽसमीचीनकारकेण। नय प्रापय। निजनिलयं स्वगृहम्। कर्णशेखरे कर्णोच्चप्रदेशे। निलीनं लग्नम्। नीलनीरजं नीलोत्पलम्। धीरा निश्चला। तिर्यग्वक्रम्। सलिलचरो जलचरो मत्स्यः केतनमस्येति। मदनस्येत्यर्थः। शरासनं धनुस्तद्वदानतां वक्राम्। चिल्लिकालतां भ्रूलतावल्लीम्। ललाटमेव रङ्गस्थली तत्र नर्तकीम्। लीलालसं लीलासौम्यम्। 'अलसं मन्दसौम्ययोः' इत्यजयः। लासयन्ती नर्तयन्ती। कण्टका रोमाञ्चा अस्याः संजाता इति कण्ट-

१ न्यदधाम्. २ नीतः शेते शीततर. नगरे. ३ ०निलीननील. ४ धीरतरल. ५ लालयन्ती.

चारिणी चरणाग्रेण तिरश्चीननखार्चिश्चन्द्रिकेण धरणीतलं साचीकृताननसरसिजं लिखन्ती दन्तच्छदकिसलयलङ्घिना हर्षास्रसलिलधाराशीकरकणजालक्लेदितस्य स्तनतटचन्दनस्यार्द्रतां निरस्यताऽऽस्यान्तरालेनिःसृतेन तनीयसाऽनिलेन हृदयलक्ष्यदलनदक्षरतिसहचरशरस्यदायितेन तरङ्गितदशनचन्द्रिकाणि कानिचिदेतान्यक्षराणि कलकण्ठीकलान्यसृजत्—'आर्य केन कारणेनैनं दासजनं कालहस्तादाच्छिद्यानन्तरं रागानिलचालितरणरणिकातरङ्गिण्यनङ्गसागरे किरसि । यथा ते चरणसरसिजरजःकणिका तथाऽहं चिन्तनीया । यद्यस्ति दया तेऽत्र जने अनन्यसाधारणः करणीयः स एष चरणाराधनक्रियायां । यदि च कन्यागाराध्यासने रहस्यक्षरणादनर्थं आशङ्क्येत नैतदस्ति । रक्ततरा हि नस्तत्र सख्यश्चेट्यश्च । यथा न कश्चिदेतज्ज्ञास्यति तथा यतिष्यन्ते ' इति । स चाहं देहजेनाकर्णाकृष्टसायकासनेन चेतस्यतिनिर्दयं ताडितस्तत्कटाक्षकालायसनिगडगाढसंयतः किंकराननिहितदृष्टिरगादिषं—'यथेयं रथचरणजघना कथयति तथा चेन्नाचरेयं

---

किता । गण्डलेखा गण्डपाली । राग इच्छा । लज्जा व्रीडा । तयोरन्तरालं मध्यस्तत्र चारिणी वर्तमाना । तिरश्चीनो वक्रो नखस्तस्यार्चिरेव चन्द्रिका यस्येति स तथा तेन । साचीकृतं वक्रीकृतमाननसरसिजं वक्त्रकमलं यस्मिन्कर्मणि तथा । दन्तच्छदकिसलयमोष्ठपल्लवं लङ्घयतीति लङ्घी तेन । क्लेदितं विकलीकृतम् । आस्यान्तरालं मुखमध्यः । तनीयसा मन्देन । अनिलेन वायुना । हृदयमेव लक्ष्यं वेध्यम् । दलनं भेदनम् । दक्षिणः सरलः । ' दक्षिणे सरलोदारौ ' इत्यमरः । रतिसहचरो मदनस्तस्य शरो बाणः । स्यदायितेन जवायितेन । ' स्यदो जवे ' इति निपातः । तद्वदाचरति स तथा तेन । तरङ्गिता तरङ्गं प्राप्ता । एतानि वक्ष्यमाणानि । कलकण्ठी कोकिला । कलानि मधुराणि । आर्येति । एनं दासजनम् । मद्रूपमित्यर्थः । कालहस्तायमहस्तात् । रागानिल इच्छावायुः । रणरणिका व्याकुलता सैव तरङ्गा यस्मिन्निति । अनङ्गसागरे मदनसमुद्रे । चरणसरसिजं पादपद्मम् । अत्र जने मत्स्वरूपे । नान्यसाधारणोऽनन्यसाधारणः । अत्युच्चैरित्यर्थः । रहस्यं गोप्यम् । क्षरणमन्यत्र प्रकटीभावः । स चाहमिति । मन्त्रगुप्त इत्यर्थः । देहजेन मदनेन । सायकासनं धनुः । कालायसं लोहम् । निगडं शृङ्खलादि । रथचरणं

---

१ ०लनामान्तरनिःसृतेन. २ अतनीयसा. ३ दक्षिण. ४ सहचरसायकस्य वृयितेन. ५ चलित. ६ आशङ्क्यते. ७ यतिष्ये.

नयेत नक्रकेतनः क्षणेनैकेनाकीर्तनीयां दशां । जनं चैनं सह नयानया कन्यया कन्यागृहं हरिणनयनया ’ इति । नीतश्चाहं निशाचरेण शारदजलधरजालकान्ति कन्यकानिकेतनं । तत्र च कांचित्कालकला चन्द्राननानिदेशाच्चन्द्रशालैकदेशे तद्दर्शनचलितधृतिरतिष्ठं । सा च स्वच्छन्दं शयानाः करतलालससंघट्टनापनीतनिद्राः काश्चिदधिगतार्थाः सखीरकार्षीत् । अथागत्य ताश्चरणनिहितशिरसः क्षरदस्रकरालितेक्षणा निजशेखरकेसराग्रसंलग्नषट्चरणगणरणितसंशयितकलगिरः शनैरकथयन्—‘ आर्य यदत्यादित्यतेजसस्त एषा नयनलक्ष्यतां गता ततः कृतान्तेन न गृहीता । दत्ता चेयं चित्तजेन गरीयसा साक्षीकृत्य रागानलं । तदनेनाश्चर्यरत्नेन नलिनाक्षस्य ते रत्नशैलशिलातलस्थिरं रागतरलेनालंक्रियतां हृदयं । तदस्याश्चरितार्थं स्तनतटं गाढालिङ्गनैः सहशतरस्य सहचरस्य ’ इति । ततः सखीजनेनातिदक्षिणेन दृढतरीकृतस्नेहनिगलस्तया संनताङ्ग्या संगत्यारंसि ।

अथ कदाचिदायासितजायारहितचेतसि लालसालिलङ्घनग्लानघन-

---

चक्रम् । नक्रकेतनः कामः । अकीर्तनीयामवचनीयाम् । दशामवस्थाम् । एनं जनं मद्रूपम् । हरिणनयनया मृगलोचनया । **नीतश्चेति** । शारदजलधरः शरन्मेघः । निकेतनं गृहम् । कालकलां कालस्य समयस्य कलां लेशम् । चन्द्रशालोर्ध्वगृहम् । ‘ चन्द्रशाला शिरोगृहम् ’ इत्यमरः । करतलेनालसं यत्संघट्टनं तेनापनीता निद्रा यासाम् । **अथेति** । क्षरता निःसरताऽस्रेणाश्रुणा करालितानि विकृतानीक्षणानि यासां ताः । षट्चरणा भ्रमराः । रणितं शब्दितम् । अत्यादित्यतेजसोऽतिक्रान्तमादित्यस्य तेजो येनेति । नयनलक्ष्यतां नेत्रग्राह्यताम् । ततस्तस्मात्कारणात् । कृतान्तेन यमेन । चित्तजेन कामेन । रागानल इच्छाग्निः । आश्चर्यरत्नेनाश्चर्यश्रेष्ठेन । नलिनाक्षस्य कमलनेत्रस्य । रत्नशैलो मेरुः । रागेन रक्तप्रभया तरलं विद्योतमानम् । पक्षे रागेणानुरागेण चञ्चलम् । चरितार्थं कृतार्थम् । दक्षिणेन सरलेन । संनताङ्ग्या । कुचभारादित्यर्थः । अरंसि क्रीडां कृतवान् । **अथेति** । कलिङ्गराजः कर्दननामा सागरतीरकानने क्रीडारसजातासक्तिरासीदित्यन्वयः । किंविधे कानने । आयासितानि जायारहितानाम् । विरहिणामित्यर्थः । चेतांसि यत्र । लालसा लुब्धाः अलयो भ्रमरास्तेषां लङ्घनं घट्टनं तेन ग्लानानि घनकेसराणि निबिडपुंनागकुसुमानि यस्मिन् । ‘पुंनागे पुरुषस्तुङ्गः केसरो देववल्लभः । ’ इत्यमरः । अथ वा

---

१ कीर्तनीयाम्. २ ०कदन्दतः. ३ नाथ.

केसरे राजदरण्यस्थलीललाटलीलायिततिलके ललितानङ्गराजाङ्गीकृतनिर्निद्रकर्णिकारकाञ्चनच्छत्रे दक्षिणदहनसारथिरयोद्धृतसहकारचञ्चरीककलिके कालाण्डजकण्ठरागरक्तरक्ताधराकिंनरीरणाग्रसंनाहशालिनि शालिनिकन्यकान्तःकरणसंकान्तरागलङ्घितलज्जे दर्दुरगिरितटचन्दनाश्लेषशीतलानिलाचार्यदत्तनानालतानृत्तलीले काले कलिङ्गराजः सहाङ्गनाजनेन सह च तनयया सकलेन च नगरजनेन दश त्रीणि च दिनानि दिनकरकिरणनालङ्घनीये रणदलिसंघलङ्घितनतलताग्रकिसलयालीढसैकततटे तरलतरङ्गशीकरासारसङ्गशीतले सागरतीरकानने क्रीडारसजातासक्तिरासीत्। अथ संततगीतसंगीतसंगताङ्गनासहस्रशृङ्गारहेलानिरर्गलानङ्गसंघर्षहर्षितश्च रागतृष्णैकतन्त्रस्तत्र रन्ध्रे आन्ध्रनाथेन जयसिंहेन सलिलतरणसाधनानीतनानेकसंख्येनानीकेन द्रागागत्यागृह्यत सकलत्रः। सा चानीयत त्रासतरलाक्षी दयिता

घनकेसरे निबिडबकुले। 'अथ केसरे बकुलः' इत्यमरः। लीलायिततिलके शोभायितक्षुरके। 'तिलकः क्षुरकः श्रीमान्' इत्यमरः। ललितोऽनङ्गराजो मदनराजः। निर्निद्राः विकसिताः। दक्षिणो दहनसारथिर्मलयानिलः। रयो वेगः। सहकारा आम्रवृक्षाः। चञ्चरीका भ्रमराः। कलिकाः कोरकाः। कालाण्डजः कोकिलः। 'वनप्रियः परभृतः पिकः कालाण्डजः स्मृतः।' इति वैजयन्ती। रक्तरक्ताधराः स्निग्धाः स्त्रियः। 'किंनरस्त्रियः' इति भूषणा। शालीनः अधृष्टः। 'शालीनकौपीने अधृष्टाकार्ययोः' इति निपातः। दर्दुरं ग्रामजालम्। 'दर्दुरा चण्डिकायां च ग्रामजाले तु दर्दुरम्।' इति विश्वः। अथ वा दर्दुरवद्वाद्यभाण्डवद्गिरितटम्। 'दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः।' इति मेदिनी। अलङ्घनीये दुर्लङ्घ्ये। रणन्तः शब्दं कुर्वन्तः। अलयो भ्रमराः। संघः समूहः। लताग्रकिसलयानि वल्ल्यग्रपल्लवानि। सैकतं सिकतामयम्। रणन्तो ये अलिसंघा भ्रमरसमूहास्तैर्लङ्घिता अत एव नता या लतास्तासामग्रकिसलयैः आलीढं स्पृष्टं सैकततटं यत्र। सागरतीरकानने समुद्रतटवने। अथेति। शृङ्गारहेला क्रियानादरः। 'हेला लीलेत्यमी हावाः क्रियाः शृङ्गारभावजाः।' इति भूषणा। निरर्गलोऽप्रतिहतः। अनङ्गो मदनः। तत्र रन्ध्रे तत्रावकाशे। आन्ध्रनाथेन आन्ध्रराजेन। सलिलतरणं जलतरणं तस्य यत्साधनं नौकादि। अनीकं सैन्यम्। द्राक् शीघ्रम्।

१ गलितनिद्र. २ रयाहृत. ३ चञ्चलकलिके: सहकाराङ्कलग्नचञ्चलचञ्च०. ४ कान्तराग. ५ अन्ध्र०.

नः सह सखीजनेन कनकलेखा। तदाऽहं दाहेनानङ्गदहनजनितेनान्तरिताहारचिन्ताश्चिन्तयन्दयितां गलितगात्रकान्तिरित्यतर्कयं—'गता सा कलिङ्गराजतनया जनित्रा जनयित्र्या च सहारिहस्तं। निरस्तधैर्यश्च तां स राजा नियतं संजिघृक्षेत्। तदसहा च सा सती गररसादिना सद्यः संतिष्ठेत। तस्यां च तादृशीं दशां गतायां जनस्यास्यानन्यजेन हन्येत शरीरधारणा। सा का स्याद्गतिः' इति।

अत्रान्तर [3]आन्ध्रनगरादागच्छन्नग्रजः कश्चिदैक्ष्यत। तेन चेयं कथा कथिता—'यथा किल जयसिंहेनानेकनिकारदत्तसंघर्षेण जिघांसितः स कर्दनः कनकलेखादर्शनैधितेन रागेणारक्ष्यत। सा च दारिका यक्षेण केनचिदधिष्ठिता न तिष्ठत्यग्रे नरान्तरस्य नरेन्द्रस्य च। आयस्यति च नरेन्द्रसार्थसंग्रहणेन तन्निराकरिष्यन्नरेन्द्रो न चास्ति सिद्धिः' इति। तेन चाहं दर्शिताशः शंकरनृत्तदेशजातस्य जरत्सालस्य स्कन्धरन्ध्रान्तर्जटाजालं निष्कृष्य तेन जटिलतां गतः कन्थाचीरसंचयान्तरितसकलगात्रः कांश्चिच्छिष्यानग्रहीषं। तांश्च नानाश्चर्यक्रियातिसंहिताज्जनादाकृष्टान्नचेलादित्यागान्नित्यहृष्टानकार्षं। अयासिषं च दिनैः कैश्चिदान्ध्रनगरम्। तस्य नात्यासन्ने सलिलराशिसदृशस्य कलहंसगणदलितनलिनदलसंहतिगलितकिञ्जल्कशकलशारस्य सारसश्रेणिशेखरस्य सरसस्तीरकानने कृतनिकेतनः स्थितः। शिष्यजनकथित-

अनङ्ग एव दहनः। अन्तरिता दूरं गता। आहारो भक्षणम्। तदसह्या तन्न सहते इति सा तथा। गरं विषम्। **अत्रान्तर इति**। अग्रजो ब्राह्मणः। निकारो यातना। अपकारो वा। 'अपराधोऽपकारश्च निकारोऽपि समाः।' इति वैजयन्ती। संघर्षणमभिभवेच्छा। एधितो वर्धितः। दारिका कन्यका। नरान्तरस्य राज्ञोऽन्यस्येत्यर्थः। नरेन्द्रा मन्त्रवादिनः। आयस्यति यतते। 'यसु प्रयत्ने' इति धातोः। नरेन्द्रसार्थो मान्त्रिकसमाजः। जरत्सालस्य जीर्णवृक्षस्य। नाना विविधा आश्चर्यक्रियास्ताभिः अतिसंहिताद्वञ्चितात्। आकृष्टानामन्नचेलादीनां त्यागाद्दानात्। तस्यान्ध्रनगरस्य। नात्यासन्ने किंचिद्दूरे। सलिलराशिः समुद्रः। कलहंसगणेन दलितानि भग्नानि यानि नलिनानि कमलानि तेषां दलानां संहतिर्वृन्दम्। 'स्त्रियां तु संहतिर्वृन्दम्' इत्यमरः। तस्याः गलिताः किंजल्काः केसराः तेषां शकलैः शारस्य चित्रवर्णस्य। कृतनिकेतनः कृतगृहः।

१ गत. २ धारणाशा। का स्यात्. ३ अन्ध्र० ४ नेक० ५ दत्तसंघर्षण०. ६ नृत्यरङ्ग. ७ अतिसंहितान्.

चित्रचेष्टाकृष्टसकलनागरजनोऽभिसंधानदक्षः सन् दिशि दिशीत्यकीर्त्यै जनेन—'य एष जरदरण्यस्थलीसरस्तीरे स्थण्डिलशायी यतिस्तस्य किल सकलानि सरहस्यानि सषडङ्गानि च च्छन्दांसि रसनाग्रे संनिहितानि, अन्यानि च शास्त्राणि । येन यानि न ज्ञायन्ते स तेषां तत्सकाशादर्थनिर्णयं करिष्यति । असत्येनास्य नास्यं संसृज्यते । सशरीरश्चैष दयाराशिः । एतत्संग्रहेणाद्य चिरं चरितार्था दीक्षा । तच्चरणरजःकणैः कैश्चन शिरसि कीर्णैरनेकस्यानेक आतङ्कश्चिरं चिकित्सकैरसंहार्यः संहृतः । तदङ्घ्रिक्षालनसलिलसेकैर्निष्कलङ्कशिरसां नश्यन्ति क्षणेनैकेनाखिलनरेन्द्रयन्त्रोल्लङ्घिनश्चण्डतेरा ग्रहाः । न तस्य शक्यं शक्तेरियत्ताज्ञानं । न चास्याहंकारकणिका' इति । सा चेयं कथाऽनेकजनास्यसंचारिणी तस्य कनकलेखाधिष्ठानधनदाज्ञाकरनिराक्रियासक्तचेतसः क्षत्रियस्याकर्षणायाशकत् । स चाहरहरागत्यादरेणातिगरीयसाऽर्चयन्नर्यैश्च शिष्यान्संगृह्णन्नधिगतक्षणः कदाचित्काङ्क्षितार्थसाधनाय शनैरयाचिष्ट । ध्यानधीरः स्थानदर्शितज्ञानसंनिधिश्चैनं निरीक्ष्य निचाय्याकथयं—'तात स्थान एष हि यत्नः ।

अभिसंधानं प्रतारणं तत्र दक्षः । दिशि दिशि प्रतिदिशम् । अकीर्त्यै ख्यापित इत्यर्थः । जरदरण्यं जीर्णारण्यम् । स्थण्डिलशायी । 'स्थण्डिलाच्छयितरि व्रते' इति णिनिः । षडङ्गानि शिक्षादीनि । 'निरुक्तं ज्योतिषं कल्पसूत्रं व्याकरणं तथा । छन्दोविचितिशिक्षे च वेदाङ्गानि वदन्ति षट् ॥' इति भूषणा । छन्दांसि वेदाः । रसनाग्रं जिह्वाग्रम् । आस्यं मुखम् । सशरीरः शरीरवान् । दयाराशिः कृपासमुद्रः । संग्रहेण स्वीकारेण । आतङ्को भयम् । चिकित्सकैर्मन्त्रवादिभिः । अखिलनरेन्द्रा मन्त्रवादिनः । यन्त्राणि मन्त्रविन्यासरेखाक्रमाः । इयत्ता परिमाणम् । कणिका लेशः । तस्य जयसिंहस्येत्यर्थः । धनदः कुबेरस्तस्याज्ञाकरो यक्षः । निराक्रिया दूरीकरणम् । स चेति । स जयसिंहः । अहरहः प्रतिदिनम् । क्षण उत्सवः । अथ वा अधिगतः प्राप्तः क्षण एकान्तकालो येन । 'स्थाने योग्ये काले दर्शितो ज्ञानस्य तदधिष्ठितपिशाचादिज्ञानस्य संनिधिः सांनिध्यं येन सः' इति भूषणा । निचाय्य दृष्ट्वेत्यर्थः । अधिगतिः प्राप्तिः ।

१ अतिसंधान. २ सलिलशायी. ३ एतत्सकाशादर्थग्रहेण. ४ चिकित्सनैः, ५ यत्न. ६ चण्डतरग्रहाः. ७ धिष्ठित.

तस्य हि कन्यारत्नस्य सकलकल्याणलक्षणैकराशेरधिगतिः क्षीरसागररशनालंकृतायाः गङ्गादिनदीसहस्रहारयष्टिराजिताया धराङ्गनाया एवासादनाय साधनं । न च स यक्षस्तदधिष्ठायी केनचिन्नरेन्द्रेण तस्या लीलाञ्चितनीलनीरजदर्शनाया दर्शनं सहते । तदत्र सह्यतां त्रीण्यहानि यैरहं यतिष्येऽर्थस्यास्य साधनाय ' इति । तथादिष्टे च हृष्टे क्षितीशे गते निशि निर्निशाकरार्चिषि नीरन्ध्रान्धकारकणनिकरनिगीर्णदशदिशि निद्रानिगडितनिखिलजनदृशि निर्गत्य जलतलनिलीनगाहनीयं नीरन्ध्रं कृच्छ्राच्छिद्रीकृतान्तरालं तदेकतः सरस्तटं तीर्थसंनिकृष्टं केनचित्खननसाधनेनाकार्षं । घनशिलेष्टिकाच्छन्नच्छिद्राननं तत्सरस्तीरदेशं जनैरशङ्कनीयं निश्चित्य दिनादिस्नाननिर्णिक्तगात्रश्च नक्षत्रसंतानहारियष्टिच्यप्रथितरत्नं क्षणदान्धकारगन्धहस्तिदारणैककेसरिणं कनकशैलशृङ्ग-

रशना मेखला । ' स्त्रीकट्या मेखला काञ्ची सप्तकी रशना तथा ' इत्यमरः । नदीसहस्रमेव हारयष्टिस्तया राजितायाः शोभितायाः । नीरजं कमलं तद्वद्दर्शनं नेत्रम् । ' दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु ' इति मेदिनी । निर्निशाकरार्चिषि निर्गतं निशाकरस्य चन्द्रस्यार्चिस्तेजो यस्यामिति । निशि त्यस्य विशेषणम् । नीरन्ध्रान्धकारो गाढान्धकारः । नीगीर्णदशदिशि । ' निगीर्णं खादितं ग्रस्तं क्षतमन्तःकृतं च तत् । ' इति कोशः । निगडितं बद्धम् । जलतलेति । ' जलतललीनेनान्तःप्रविष्टेनैव गम्यं कृच्छ्रमज्ञेयमन्तरालमवकाशो यस्य तथा सरस्तटं तदेकत एकत्र कृतम् । तत्तटे गुप्तं स्थानं जले कृतमिति यावत् ' इति भूषणा । सरस्तटमेकतः सरस्तटस्यान्तिके । ' एकतः क्वचिदन्तिके ' इति वैजयन्ती । ' एकतःसर्वतोयोगे शेषार्थे कर्म चेष्यते ' इति द्वितीया । घना निबिडाः शिलाः पाषाणाः इष्टिकाश्च ताभिश्छन्नमाच्छादितम् । दिनादिः प्रातःकालः । निर्णिक्तं शोधितम् । ' निर्णिक्तं शोधितं मृष्टम् ' इत्यमरः । संतानं विस्तारः । ०हारिहार० इति पाठे संतानं हरति लोपयतीति हारिणी हारयष्टिः प्रातस्तनप्रभासंतानरूपा तस्याः इत्यादि । क्षणदा रात्रिः । गन्धहस्ती मत्तद्विपः । " यस्य गन्धं समाघ्राय न तिष्ठन्ति प्रतिद्विपाः । तं गन्धहस्तिनं प्राहुर्नृपतेर्विजयावहम् ॥ " इति पालकाप्ये । दारणं विदारणम् । कनकशैलः मेरुः ।

१ निशि निशि. २ तललीन. ३ कृतान्तरम्. ४ हारिहार.

रङ्गलास्यलीलानटं गगनसागरघनतरङ्गराजिलङ्घनैकनक्रं कार्याकार्यसाक्षिणं सहस्रार्चिषं सहस्राक्षदिगङ्गनाङ्गरागरागायितकिरणजालं रक्तनीरजाञ्जलिनाऽऽराध्य निजनिकेतनं न्यशिश्रियम् ।

याते च दिनत्रये, अस्तगिरिशिखरगैरिकतटसाधारणच्छायतेजसि अचलराजकन्यकाकदर्थनयाऽन्तरिक्षाख्येन शंकरशरीरेण संसृष्टायाः संध्याङ्गनाया रक्तचन्दनचर्चितैकस्तनकलशदर्शनीये दिनाधिनाथे जनाधिनाथः स आगत्य जनस्यास्य धरणिन्यस्तचरणनखकिरणच्छादितकिरीटः कृताञ्जलिरतिष्ठत् । आदिष्टश्च—' दिष्ट्या दृष्टेष्टसिद्धिः । इह जगति हि न निरीहं देहिनं श्रियः संश्रयन्ते । श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि । यतस्ते साधीयसा सच्चरितेनानाकलितकलङ्केनार्चितेनात्यादरनिचितेनाकृष्टचेतसा जनेनानेन सर इदं तथा संस्कृतं यथेह तेऽद्य सिद्धिः स्यात् । तदेतस्यां निशि गलदर्धायां गाहनीयं । गाहनानन्तरं च सलिलतले सततगतीनन्तःसंचारिणः संनिगृह्य यथाशक्ति शय्या कार्या । ततश्च तटस्खलितजलस्थगितजलजखण्डचलितदण्डकण्टकाग्रदलितदेहराजहंसत्रासजर्जररसितसंदत्तकर्णस्य जनस्य

लास्यलीला विलासक्रिया । गगनसागरः गगनसमुद्रः । घना एव तरङ्गाः । राजिः परंपरा । लङ्घनमतिक्रम्य गमनम् । सहस्राक्ष इन्द्रस्तद्दिगङ्गना । प्राचीत्यर्थः । रागायितं रागवदाचरितम् । रक्तनीरजं रक्तोत्पलम् । निजनिकेतनं स्वगृहम् । अशिश्रियमाश्रितवान् । ' अस्तगिरिशिखरगैरिकतटसाधारणच्छायतेजसि ' इत्यग्रिमस्य 'दिनाधिनाथे' इति पदस्य विशेषणम् । अचलराजकन्यका पार्वती । कदर्थनया कुत्सितप्रार्थनया । अन्तरिक्षाख्येन । अष्टमूर्तिमध्य आकाशाभिधेयेनेत्यर्थः । संसृष्टाया मिलितायाः । संध्यैवाङ्गना । चर्चितः आलिप्तः । 'चर्चा चार्चिक्यमालेपे' इति वैजयन्ती । दिष्ट्याऽदृष्टेन । इष्टसिद्धिर्दृष्टेत्यन्वयः । निरीहं निर्गतेहा यस्येति तम् । निःस्पृहमित्यर्थः । सस्पृहमेव श्रिय आश्रयन्त इति भावः । श्रेयांसि सुकृतानि । ' स्याद्धर्ममस्त्रियां पुण्यश्रेयसी सुकृतं वृषः ' इत्यमरः । अनलसानामुद्योगिनाम् । साधीयसा अतिशयेन साध्विति साधीयस्तेन । अनाकलितं दूरीकृतम् । कलङ्को दूषणम् । तत्सरः । गाहनीयमालोडनीयम् । संनिगृह्य निग्रहं कृत्वा । स्थगितं मन्दीभूतम् । जलजखण्डं कमलसमूहः । दलितं घर्षितम् । जर्जरमतिश्लथम् । रसितं शब्दितम् । ' रस शब्दने '। "तटात्स्खलिताः पतिताश्च ते जले स्थगिताः स्थिता ये जलजसमूहस्य चचलदण्डस्य कण्टकाः

१ चाध्याशिश्रियम्.

क्षणादाकर्णनीयं जनिष्यते जलसंघातस्य किंचिदारटितं। शान्ते च तत्र सलिलरटिते क्लिन्नगात्रः किंचिदारक्तदृष्टिर्येनाकारेण निर्यास्यसि निचाय्य तं निखिलजननेत्रानन्दकारिणं न स यक्षः शक्ष्यत्यग्रतः स्थितये। स्थिरतरनिहितस्नेहशृङ्खलानिगडितं च कन्यकाहृदयं क्षणेनैकेनासहनीयदर्शनान्तरायं स्यात्। अस्याश्च वराङ्गनाया नात्यादरनिराकृतारिचक्रं चक्रं करतलगतं चिन्तनीयं। न तत्र संशयः। तच्चेदिच्छस्यनेकशास्त्रज्ञानधीरधिषणैरधिकृतैरितरैश्च हितैषिगणैराकलय्य जालिकशतं चानाय्य, अन्तरङ्गनरशतैर्यथेष्टदृष्टान्तरालं सरः क्रियेत। रक्षा च तीरात्त्रिंशद्दण्डान्तराले सैनिकजनेन सादरं रचनीया। कस्तत्र तज्जानाति यच्छिद्रेणाग्याश्चिकीर्षन्ति' इति। तत्तस्य हृदयहारि जातं। तदधिकृतैश्च तत्र कृत्ये रन्ध्रदर्शनासहैरिच्छां च राज्ञः कन्यकातिरागजनितां नितान्तनिश्चलां निश्चित्यार्थ एष न निषिद्धः। तथास्थितश्च तदासादनदृढतराशयश्च स आख्यायत—'राजन्, अत्र त जनान्ते चिरं स्थितं न चैकत्र चिरस्थानं नः शस्तं। कृतकृत्यश्च न इह द्रष्टासि। यस्य ते राष्ट्रे ग्रासाद्यासादितं तस्य ते किंचिदनाचर्य कार्यं गतिरार्यगर्ह्या' इति। अत्रैतच्चिरस्थानस्य कारणं। तच्चाद्य सिद्धं। गच्छ गृहान्। यथाहं मलेन हृद्यगन्धेन स्नातः सितस्रगङ्गरागः

तैर्दलितो देहो येषां ते तेषां राजहंसानां त्रासजर्जरं त्रासेन कठोरं रसितं शब्दस्तत्र दत्तः कर्णो येन तस्य" इति भूषणा। आरटितं पीडाशब्दितम्। क्लिन्नगात्र आर्द्रशरीरः। निचाय्य निश्चित्य। अग्रतः स्थितये पुरो वर्तितुमित्यर्थः। नात्यादरेण। 'विलासेनैवेत्यर्थः' इति भूषणा। निराकृतमरिचक्रं यस्मात्तत्। शास्त्रज्ञानेन धीरा धीषणा बुद्धिः येषां तैः। 'बुद्धिर्मनीषा धिषणा' इत्यमरः। जालिका जालवर्तिनः। दृष्टान्तरालं ज्ञातमध्यम्। दण्डः प्रकाण्डः। 'दण्डोऽस्त्री लगुडे पुमान्। व्यूहभेदे प्रकाण्डे च' इति मेदिनी। षोडशहस्त इति यावत्। 'काण्डान्तात्क्षेत्रे' इति सूत्रे काण्डशब्दस्य षोडशहस्तप्रमाणमिति व्याख्यातं वृत्तिकृता। हृदयहारि चित्तहारि। अतिरागः रागातिशयः। तदासादनं तच्छब्देन सरसस्तस्यासादनमधिष्ठानम्। अतिशयेन दृढ आशयः यस्य। एकत्रैकस्मिन्स्थाने। शस्तं प्रशस्तम्। गृहान्। 'गृहाः पुंसि च भूम्न्येव' इत्यमरः। स्रक्माला। अङ्गरागश्चर्चा। धरणि-

१ तस्य...कारिणः. २ कन्यकारत्नम्. ३ नात्यादृत. ४ नैक. ५ विचार्य. ६ अनन्तरं. ७ तिष्ठामि. ८ आतिथेयादि.

शक्तिसदृशेन दानेनाराधितधरणितलतैतिलगणस्तिलस्नेहसिक्तयष्ट्यग्रग्रथितवर्तिकाग्निशिखासहस्रग्रस्तनैशान्धकारराशिरभगत्यार्थसिद्धये यतेथाः' इति । स किल कृतज्ञतां दर्शयन्—'असिद्धिरेषा सिद्धिः, यदसंनिधिरिहार्याणां । कष्टा चेयं निःसंगता या निरागसं दासजनं त्याजयति । न च निषेधनीया गरीयसां गिरः' इति स्नानाय गृहा-नयासीत् । अहं च निर्गत्य निर्जने निशीथे सरस्तीररन्ध्रनिलीनः सन्नीषच्छिद्रदत्तकर्णः स्थितः । स्थिते चार्धरात्रे कृतयथादिष्टक्रियः स्थानस्थानरचितरक्षः स राजा जालिकजनानानीय निराकृतान्तः-शल्यं शङ्काहीनः सरःसलिलं सलीलगतिरगाहत । गतं च कीर्ण-केशं संहतकर्णनासं सरसस्तलं हास्तिनं नक्रलीलया नीराति-निलीनयायी तं तथाशयानं कंधरायां कन्थया न्यग्रहीषं । खरतरकालदण्डघट्टनातिचण्डैश्च करचरणतलाघातैर्निर्दयदत्तनिग्रहः क्षणे-

तलं पृथ्वीतलं तत्र तैतिलगणा देवगणाः । 'तैतिलौ देवकालिङ्गौ' इति कोशः । तिल-स्नेहसिक्ताश्च ता यष्ट्यग्रग्रथितवर्तिकाश्च तासामग्निशिखासहस्रेण ग्रस्तः निशायां भवो नैशः अन्धकारराशिर्येस्य । तिलस्नेहं तिलतैलम् । वर्तिका वस्त्रकृतनालिका । भाषया 'पलीता' इति ख्यातः । अस्यामग्निशिखा अग्निज्वाला । ग्रस्तो गिलितः । नैशा-न्धकारराशी रात्रितिमिरसमूहः । अर्थसिद्धयेऽर्थप्राप्त्यर्थम् । यतेथाः । 'यती प्रयत्ने' इत्यस्माल्लिङि मध्यमपुरुषैकवचनम् । असंनिधिरसंनिधानम् । आर्याणां श्रेष्ठानाम् । निरागसं निरपराधम् । गरीयसां गुरूणाम् । निराकृतं दूरीकृतम् । सरःसलिलं सरो-जलम् । अगाहत आलोडयामासेत्यर्थः । कीर्णकेशं प्रसृतकेशम् । संहतकर्णनासं कर्णौ च नासा च कर्णनासम् । प्राण्यङ्गत्वादेकवद्भावः । पश्चात्संहतपदेन समासः । नासा नासिका । हास्तिनं हस्तिप्रमाणम् । 'पुरुषहस्तिभ्यामण् च' । 'हास्तिन-लीलया 'पुरुषहस्तिभ्यामण् च' इति पक्षे अणि 'संयोगादिश्च' इति प्रकृतिभावः । हस्तिप्रमाणस्य या लीला तया । न तु ह्रस्वप्रमाणस्य लीलया । तथा सति प्रतीकारसंभवापत्तेः' इति भूषणा । अतिनिलीनतया यातीति अतिनिलीन-यायी । कन्थया प्रावरणेन । 'कन्था प्रावरणान्तरे' इति विश्वः । खरतरस्तीक्ष्णः । कालदण्डो यमदण्डः । तस्य घट्टनादतिचण्डैः सुतरां कठिनैः । निग्रहो निकारः । अजहात् तत्याजेत्यर्थः । 'ओहाक् त्यागे' । आकारान्तरग्रहणमन्याकार-

१ तलेति नास्ति क्वचित्. २ चेलाञ्चलखण्डकाग्निशिखासहस्रास्त. ३ गतः. ४ हस्तिनक्र.

नैकेनाजहात्स चेष्टां। ततश्चाकृष्य तच्छरीरं छिद्रे निधाय नीराम्निरयासिषं।

सद्यः संगतानां च सैनिकानां तदत्यचित्रीयताकारान्तरग्रहणं। गजस्कन्धगतः सितच्छत्रादिसकलराजचिह्नराजितश्चण्डतरदण्डिदण्डताडनत्रस्तजनदत्तान्तरालया राजवीथ्या यातस्तां निशां रसैनयननिरस्तनिद्रारतिरनैषं। नीते च जनाक्षिलक्ष्यतां लाक्षारसदिग्धदिग्गजशिरःसदृक्षे शक्रदिगङ्गनारत्नादर्शेऽर्कचक्रे कृतकरणीयः किरणजालकरालरत्नराजिराजितराजार्हासनाध्यासी यथासदृशाचारदर्शिनः शङ्कायन्त्रिताङ्गान्संनिधिनिषादिनः सहायानगादिषं—'दृश्यतां शक्तिरार्षी यत्तस्य यतेरजेयस्येन्द्रियाणां संस्कारेण नीरजसा नीरजसांनिध्यशालिनि सहर्षालिनि सरसि सरसिजदलसंनिकाशच्छायस्याधिकतरदर्शनीयस्याकारान्तरस्य सिद्धिरासीत्। अद्य सकलनास्तिकानां जायेत लज्जानतं शिरः। तदिदानीं चन्द्रशेखरनरकशासनसरसिजासनादीनां त्रिदशेशानां स्थानान्यत्यादररचितनृत्यगीतैाद्याराधनानि क्रियन्तां। ह्रियन्तां च गृहादितः क्लेशनिरसनसहान्यर्थिसार्थैर्धनानि' इति। आश्चर्यरसातिरेकहृष्टदृष्टयस्ते 'जय जगदीश, जयेन सातिशयं दश दिशः स्थगयन्निजेन यशसाऽऽदिराजयशांसि'

प्राप्तिः। गजस्कन्धगतो हस्तिमस्तकगतः। चण्डतरा अतिप्रचण्डाः दण्डिनो दण्डधराः तेषां दण्डास्तैस्ताडनं तस्मात् त्रस्तेन जनेन दत्तमन्तरालं यस्यां तया। अन्तरालमभ्यन्तरम्। रसः क्रीडारसः। निरस्ता त्यक्ता। निद्रारतिर्निद्रासुखम्। जनाक्षीणि लोकनेत्राणि तेषां लक्ष्यतां ग्राहकत्वम्। दिग्धं लिप्तम्। शक्रदिगङ्गना प्राची दिक्। किरणजालेन करालं च तद्रत्नराज्या राजितं च यत् राजार्हमासनं तदध्यास्तेऽसौ तथा। राजार्हं राजयोग्यम्। संनिधौ निषीदन्ति ते संनिधिनिषादिनः। आर्षी ऋषेरियं तथा। अजेयस्य जेतुमशक्यस्य। 'इन्द्रियाणामजेयस्य जितेन्द्रियस्येत्यर्थः' इति भूषणा। नीरजसा निवृत्तरजोगुणेन। नीरजानि कमलानि। अद्येति। नरकशासनो विष्णुः। सरसिजासनः ब्रह्मा। अर्थिसार्थैर्याचकसमाजैः। क्लेशानां निरसनं दूरीकरणं तत्सहानि समर्थानि। आश्चर्यरसातिरेक आश्चर्यरसाधिक्यम्। जयेन सातिशयमतिशयेन सह वर्तमानं तथा यथा। स्थगयन् व्याप्नुवन्। निजेन यशसा स्वकीर्त्या आदिराजस्य मनोः यशांसि जयेति पूर्वेणान्वयः। यद्वा आदिराजास्तात्पितृ-

१ राजरथ्यया. २ नयनरस. ३ गीतार्चनाश्रितानि. ४ जय जय जगदीश दश दिशः स्थगयन्निजनेजसाऽऽदिराज०. ५ स्वतेजसाऽतिशय्य.

इत्यसकृदाशास्यारचयन्यथादिष्टाः क्रियाः। स चाहं दयितायाः सखीं हृदयस्थानीयां शशाङ्कसेनां कन्यकां कदाचित्कार्यान्तरागतां रहस्याचक्षिषि—'कच्चिदयं जनः कदाचिदासीद्दृष्टः' इति। अथ सा हर्षकाष्ठां गतेन हृदयेनेषदालक्ष्य दशनदीधितिलतां लीलालसं लासयन्ती ललिताञ्चितकरशाखान्तरितदन्तच्छदकिसलया हर्षजलक्लेदजर्जरनिरञ्जनेक्षणा रचिताञ्जलिः 'नितरां जाने यदि न स्यादैन्द्रजालिकस्य जालं किंचिदेतादृशं। कथं चैतत्। कथय' इति स्नेहनिर्यन्त्रणं शनैरगादीत्। अहं चास्यै कार्त्स्न्येनाख्याय तदाननसंक्रान्तेन संदेशेन संजनय्य सहचर्या निरतिशयं हृदयाह्लादं ततश्चैतया दयितया निरर्गलीकृतातिसत्कृतकलिङ्गनाथन्यायदत्तया संगत्यान्ध्रकलिङ्गराज्यशासी तस्यास्यारिणा लिलङ्घयिषितस्याङ्गराजस्य साहाय्यकायालघीयसा साधनेनागत्यात्र ते सखिजनसंगतस्य यादृच्छिकदर्शनानन्दराशिलङ्घितचेता जातः' इति।

तस्य तत्कौशलं स्मितज्योत्स्नाभिषिक्तदन्तच्छदः सह सुहृद्भि-

---

पितामहादयः। असकृद्वारंवारम्। आशास्य प्रशस्य। आरचयन् चक्रुरित्यर्थः। क्रियाः कार्याणि। हृदयस्थानीयां प्राणभूताम्। अथेति। हर्षकाष्ठां हर्षमर्यादाम्। ईषदल्पम्। दशनदीधितयो दन्तमयूखाः त एव लता तां लीलयाऽलसं मन्थरं यथा तथा लासयन्ती नर्तयन्ती। कर एव शाखा। दन्तच्छद ओष्ठः। हर्षजलमानन्दाश्रु। क्लेद आर्द्रभावः तेन जर्जरं विशीर्णम्। 'इन्द्रध्वजे विशीर्णे च जर्जरं परिचक्षते' इति शाश्वतः। निरञ्जनं कज्जलरहितमीक्षणं नेत्रं यस्याः सा। स्नेहनिर्यन्त्रणं स्नेहबद्धम्। स्नेहेन निर्गता यन्त्रणा यथा स्यात्तथा। कार्त्स्न्येन कृत्स्नस्य भावस्तया। समग्रेणेत्यर्थः। तदाननसंक्रान्तेन तन्मुखोद्गतेन। संदेशेन वाचिकेन। संजनय्योत्पाद्य। सहचर्याः कनकलेखायाः। निरर्गलीकृतो मुक्तबन्धनः अतिसत्कृतश्च यः कलिङ्गनाथस्तेन न्यायेन दत्ता तया। न्यायेन विधिपूर्वकम्। आन्ध्रश्चासौ कलिङ्गराजश्चेति। तस्य राज्यं तच्छास्तीति शासी। यादृच्छिकं प्रसङ्गजातम्। आनन्दराशिः सुखसमूहः। तस्येति। स्मितज्योत्स्ना हास्यदीप्तिः तया अभिषिक्तः दन्तच्छदः यस्य। सुहृद्भिः सखिभिः। नर्म परिहासः। 'द्रवकेलिपरीहासाः क्रीडा लीला च नर्म च

---

१ अस्मात्परं 'हसन्ती' इत्य० ए० पु०. २ लीलाञ्चित. ३ अवादीत्. .

रामिनन्द्य 'चित्रमिदं महामुनेर्वृत्तम् । अत्रैव खलु फलितमतिकष्टं तपः । तिष्ठतु तावन्नर्म । हर्षप्रकर्षस्पृशोः प्रज्ञासत्त्वयोर्दृष्टमिह स्वरूपम्' इत्यभिधाय पुनः 'अवतरतु भवान्' इति बहुश्रुते विश्रुते विकचराजीवसदृशं दृशं चिक्षेप देवो राजवाहनः ।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते मन्त्रगुप्तचरितं नाम सप्तम उच्छ्वासः ।

## अष्टम उच्छ्वासः ।

अथ सोऽप्याचचक्षे—'देव मयाऽपि परिभ्रमता विन्ध्याटव्या कोऽपि कुमारः क्षुधा तृषा च क्लिश्यन्नक्लेशार्हः कचित्कूपाभ्याशेऽष्टवर्षदेशीयो दृष्टः । स च त्रासगद्गदमगदत्—'महाभाग, क्लिष्टस्य मे क्रियतामार्य साहाय्यकम् । अस्य मे प्राणापहारिणीं पिपासां प्रतिकर्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्कलो ममैकशरणभूतः पतितः । तमलमस्मि नाहमुद्धर्तुम्' इति । अथाहमभ्येत्य व्रतत्या कयाऽपि वृद्धमुत्तार्य तं च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च शरक्षेपोच्छ्रितस्य लकुचवृक्षस्य शिखरात्पाषाणपातितैः

---

इत्यमरः । प्रकर्ष आधिक्यम् । प्रज्ञा बुद्धिः । सत्त्वं बलम् । बहुश्रुते बहुनेकं श्रुतं शास्त्रादिश्रवणं यस्येति । विश्रुत एतन्नाम्नि ।

इति श्रीदशकुमारचरितटीकायां सप्तम उच्छ्वासः ।

इदानीं विश्रुतनामा कुमारः स्वचरितं वक्तुमुपक्रमते—अथेति । अथानन्तर्यार्थे । स विश्रुतनामा । अक्लेशार्हः । क्लेशं नार्हतीति स तथोक्तः । कूपो जलाशयः तस्य अभ्याशे समीपे । अष्टवर्षदेशीयः असमाप्ताष्टवर्षः । 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' इति शब्दान्न्यूनार्थे देशीयप्रत्ययः । साहाय्यकं सहायस्य भावस्तत् । पिपासा पातुमिच्छा । प्रतिकर्तुं दूरीकर्तुम् । उदञ्चन्निष्कासयन् । कोऽप्यविदितकुलनामा । निष्कलः स्थविरः । वृद्ध इति यावत् । 'निष्कलः स्थविरः समौ' इति वैजयन्ती । अथेति । व्रतत्या वल्लया । 'वल्ली तु व्रततिर्लता' इत्यमरः । रज्जुस्थानीकृत्येति भावः । वंशनाली वंशदण्डः । पञ्चषैः पञ्च षड् वा । 'संख्ययाऽव्यय—' इत्यादिना बहुव्रीहिः । 'बहुव्रीहौ संख्येये डजबहुगणात्' इति समासान्तो डच् । शरक्षेपो बाणगमनम् । ततोऽप्युच्छ्रितस्य । उन्नतस्येत्यर्थः । लकुच इति भाषया 'बडहर' इति प्रसिद्धः वृक्षः ।

---

१ भवन्नर्म. २ चतुःप०. ३ लिकुच.

प्रत्यानीतप्राणवृत्तिमापाद्य, तरुतलनिषण्णस्तं जरन्तमब्रवम्—'तात, क एष बालः, को वा भवान्, कथं चेयमापदापन्ना' इति। सोऽश्रुगद्गदमगदत्—'श्रूयतां महाभाग। विदर्भो नाम जनपदः। तस्मिन्भोजवंशभूषणम्, अंशावतार इव धर्मस्य, अतिसत्त्वः, सत्यवादी, वदान्यः, विनीतः, विनेता प्रजानाम्, रञ्जितभृत्यः, कीर्तिमान्, उदग्रो बुद्धिमूर्तिभ्याम्[1], उत्थानशीलः, शास्त्रप्रमाणः, शक्यभव्यकल्पारम्भी, संभावयिता बुधान्, प्रभावयिता सेवकान्, उद्भावयिता बन्धून, न्यग्भावयिता शत्रून्, असंबद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्यवितृष्णो गुणेषु, अतिनदीष्णः कलासु, नेदिष्ठो धर्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्ता, प्रत्यवेक्षिता[2] कोशवाहनयोः, यत्नेन परीक्षिता सर्वाध्यक्षाणाम्, उत्साहयिता कृतकर्मणामनुरूपैर्दानमानैः, सद्यः

प्रत्यानीता परावर्तिता प्राणानां वृत्तिः स्थितिर्यस्य। जरन्तं वृद्धम्। अश्रुभिर्गद्गदं यथा तथा। श्रूयतामिति। जनपदो देशः। अंशेनैकदेशेन। अत्यन्तं सत्त्वं बलं यस्येति अतिसत्त्वो महाबलः। सत्त्वं सत्त्वगुणो वा। वदान्यो बहुप्रदः। 'स्युर्वदान्यस्थूललक्ष्यदानशौण्डा बहुप्रदे।' इत्यमरः। विनीतो नम्रः। विनेता शिक्षाकर्ता। रञ्जिता अनुरागं प्रापिता भृत्याः सेवका येनेति। उदग्र उन्नतः। बुद्धिर्मतिः मूर्तिः कायः। उत्थानशीलः पौरुषस्वभावः। 'उत्थानं पौरुषे तन्त्रे' इत्यमरः। शास्त्रमेव प्रमाणं यस्येति स तथा। शक्यभव्यकल्पारम्भी। 'शक्यं तु सुकरं कर्म भव्यं तु जनलालितम्। कल्पं युक्तं न भक्तेन सदैवैष समाचरेत्॥' इति दिवाकरः। शक्यं स्वसाध्यम्। भव्यं कुशलम्। 'भावुकं भविकं भव्यं कुशलं क्षेमम्' इत्यमरः। कल्पो विधिः। 'कल्पो न्याय्ये विधौ शास्त्रे संवर्ते ब्रह्मवासरे। कल्पद्रुमे विकल्पे च' इति महीपः। तेषामारम्भस्तच्छीलः। संभावयिता संभावना मानधनादिनेति। एवं सर्वत्र। प्रभावयिता अभ्युदयं प्रापयिता। 'प्रभुत्वं कारयिता' इति भूषणा। असंबद्धाः परस्परामिलिताः। प्रलापा निरर्थकवचनानि। 'प्रलापोऽनर्थकं वचः' इत्यमरः। अवितृष्णो न विगता तृष्णा यस्येति स तथा। सर्वदा सतृष्ण एवेत्यर्थः। नदीष्णो निपुणः। 'नदीष्णाभिज्ञनिष्णात-प्रवीणनिपुणा अपि' इति कोशः। नदीपूर्वात्स्नातेरातोऽनुपसर्गे कप्रत्ययः। 'निनदीभ्यां स्नातेः कौशले' इति मूर्धन्यः। नेदिष्ठो निकटवर्ती। 'अन्तिकबाढयोर्नेदसाधौ' इति साधुः। प्रत्यवेक्षा गवेषणम्। कोशो भाण्डागारम्। वाहनान्यश्वादीनि।

1 मूर्तिबुद्धिभ्याम्. 2 प्रत्यवसिता.

प्रतिकर्ता दैवमानुषीणामापदाम्, षाड्गुण्योपयोगनिपुणः, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, पुण्यवर्मा नामासीत् । स पुण्यैः कर्मभिः प्राप्य पुरुषायुषम्, पुनरपुण्येन प्रजानामगण्यतामरेषु । तदनन्तरमनन्तवर्मा नाम तदायतिरवनिमध्यतिष्ठत् । स सर्वगुणैः समृद्धोऽपि दैवाद्दण्डनीत्यां नात्यादृतोऽभूत् । तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः, पितुरस्य बहुमतः, प्रगल्भवागभाषत— 'तात, सर्वैवात्मसंपदभिजनात्प्रभृत्यन्यूनैवात्र भवति लक्ष्यते । बुद्धिश्च निसर्गपट्वी कलासु नृत्यगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा तवेतरेभ्यः प्रतिविशिष्यते । तथाऽप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेषु, अनग्निसंशोधितेव हेमजातिर्नातिभाति बुद्धिः । बुद्धि-

प्रतिकर्ता प्रतीकारकर्ता । षाड्गुण्यं षड्गुणाः । चातुर्वर्ण्यादिपाठात्स्वार्थे ष्यञ्प्रत्ययः । 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः । षड्गुणाः शक्तयस्तिस्रः प्रभावोत्साहमन्त्रजाः' इत्यमरः । चतुर्वर्णा एव चातुवर्ण्यम् । पुण्यश्लोकः पवित्रकीर्तिः । 'पद्ये यशसि च श्लोकः' इत्यमरः । अतिसत्त्व इत्यादिनयवर्णने कामन्दकः— 'न्यायेनार्जनमर्थस्य वर्धनं रक्षणं तथा । सत्पात्रप्रतिपत्तिश्च राजवृत्तं चतुर्विधम् । नयविक्रमसंपन्नः सूत्थानश्चिन्तयेच्छ्रियम् । नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ॥ शास्त्रं प्रज्ञा धृतिर्दाक्ष्यं प्रागल्भ्यं धारयिष्णुता । उत्साहो वाग्मिता दार्ढ्यमापत्क्लेशसहिष्णुता ॥ प्रभावः शुचिता मैत्री त्यागः सत्यं कृतज्ञता । कुलं शीलं दमश्चेति गुणाः संपत्तिहेतवः ॥' इति । याज्ञवल्क्योऽपि— 'ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनो रिपौ । स्याद्राजा भृत्यवर्गे च प्रजासु च यथा पिता ॥' इति । पुण्यवर्मेति नाम राजा । स इति । प्राप्य जीवित्वेत्यर्थः । पुरुषायुषं पूर्णमायुः वर्षशतमितम् । 'अचतुर—' इति सूत्रेण निपातः । अपुण्येन पापेनेत्यर्थः । अगण्यत । 'गण संख्याने' । अमरेषु देवेषु । तदनन्तरं पुण्यवर्मोत्तरमित्यर्थः । अनन्तवर्मेति । तदायतिस्तस्मात्पुण्यवर्मण आयतिः प्रभावो यस्येति स तथा । 'स्यात्प्रभावेऽपि चायतिः' इत्यमरः । दण्डनीत्यां राजनीत्याम् । प्रगल्भा प्रौढा वाग्यस्येति स तथा । 'आत्मसंपत् पुरुषगुणाः । ते च समनन्तरमेव 'शास्त्रं प्रज्ञा—' इति श्लोकद्वयेन दर्शिताः' इति भूषणा । अभिजनात् कुलात् । अन्यूना संपूर्णेत्यर्थः । अतिशयेन पटुः पट्वी । विस्तरो विस्तृतत्वम् । इतरेभ्योऽन्येभ्यः प्रतिविशिष्यते विशिष्टा भवतीत्यर्थः । अर्थशास्त्रेष्वान्वीक्षिक्यादिषु । हेमजातिः

१ प्राप्य.

शून्यो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्तितुम् । अयथावृत्तश्च कर्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते । न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय । अतिक्रान्तशासनाश्च प्रजा यत्किंचनवादिन्यो यथाकथंचिद्वर्तिन्यः सर्वाः स्थितीः संकिरेयुः । निर्मर्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानं च भ्रंशयते । आगमदीपदृष्टेन खल्वध्वना सुखेन वर्तते लोकयात्रा । दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति । तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात् । अतो विहाय बाह्यविद्यास्वभिषङ्गमागमय दण्डनीतिं कुलविद्याम् । तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्वीम्' इति ।

सुवर्णजातिः । अत्युच्छ्रितोऽपि महानपि । परैः शत्रुभिः । अध्यारुह्यमाणमासाद्यमानम् । न चेतयते विना संज्ञानेन स्मारयत इत्यर्थः । साध्यं कार्यम् । साधनं कारणम् । साध्यं विपक्षभूतम् । साधनं सहायभूतम् । कर्मसु कार्येषु । स्वैरात्मीयैः । परिभूयते पराभवं प्राप्यते । अवज्ञातस्यावगणितस्य । योगोऽलब्धलाभः । क्षेमं लब्धसंरक्षणम् । 'अप्राप्तप्रापणं योगः क्षेमं प्राप्तस्य रक्षणम् । द्वयं च साधयेद्भूपः प्रजानां विधिवत्प्रदः ॥' इत्युक्तेः । स्थितीर्मर्यादाः । संकिरेयुः संकीर्णाः कुर्युः । इतो लोकादिहलोकात् । अमुतः परलोकात् । भ्रंशयते पातयति । तथा च याज्ञवल्क्यः—"अरक्ष्यमाणाः कुर्वन्ति यत्किंचित्किल्बिषं प्रजाः । तस्मात्तु नृपतेरर्धं यस्माद् गृह्णात्यसौ करान् ॥" इति । कामन्दकोऽपि—"अहिंसा सूनृता वाणी सत्यं शौचं दया क्षमा । वर्णिनां लिङ्गिनां चैव सामान्यो धर्म उच्यते ॥ स्वर्गानन्त्याय धर्मोऽयं सर्वेषां वर्णिलिङ्गिनाम् ॥ तस्याभावे च लोकोऽयं संकरान्नाशमाप्नुयात् ॥ सर्वस्यास्य यथान्यायं भूपतिः संप्रवर्तकः । तस्याभावे धर्मनाशस्तदभावे जगच्च्युतिः ॥' इति । चाणक्योऽपि—'राज्ञि धर्मिणि धर्मिष्ठा पापे पापाः समे समाः । लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजाः ॥' इति । आगम एव दीपस्तेन दृष्टेन । अध्वना मार्गेण । लोकयात्रा लोकस्थितिः । अप्रतिहतवृत्ति न प्रतिहता कुण्ठिता वृत्तिर्यस्येति । तेन शास्त्रचक्षुषेत्यर्थः । सतोर्विद्यमानयोः । बाह्यविद्यास्वितरविद्यासु । अभिषङ्गं सङ्गम् । आगमय प्रापयेत्यर्थः । तदर्थानुष्ठानेन । कुलविद्यानुष्ठानेनेत्यर्थः । आवर्जिता प्राप्ता शक्तीनां प्रभावोत्साहमन्त्रजानां सिद्धिर्येन । अस्खलितशासनो-

१ क्षेमसाधनाय; क्षेमयोराराधनाय.

एतदाकर्ण्य 'स्थान एव गुरुभिरनुशिष्टम्। तथा क्रियते' इत्यन्तःपुरमविशत्। तां च वार्तां पार्थिवेन प्रमदासंनिधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टश्चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्यवाद्यादिष्वबाह्यो बाह्यनारीपरायणः पटुरयन्त्रितमुखो बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्वं व्यज्ञापयत्—'देव, दैवानुग्रहेण यदि कश्चिद्राजनं भवति विभूतेस्तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्ताः। तथा हि। केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य मुण्डयित्वा शिरो बद्ध्वा दर्भरज्जुभिरजिनेनाच्छाद्य नवनीतेनोपलिप्यानशनं च शाययित्वा सर्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषाण्डिनः[1] पुत्रदारशरीरजीवितान्यपि मोचयन्ति। यदि कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत्, तमन्ये परिवार्याहुः—'एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्रादृते सर्वशत्रून्घातयेम, एक

ऽप्रतिहताज्ञः। शाधि शिक्षय। 'शासु अनुशिष्टौ'। **एतदिति**। स्थाने। युक्तमित्यर्थः। अनुशिष्टमुपदिष्टम्। चित्तानुवृत्तिर्मनोगतं तत्र कुशलः। प्रसादवित्तो राजप्रसादेन ख्यातः। 'वित्तविज्ञातविश्रुताः' इत्यमरः। विशेषेण राजप्रसादभूमिरित्यर्थः। यद्वा प्रसादेन वित्तं धनं यस्य। अबाह्योऽभिन्नः। तन्मय इति भावः। अयन्त्रितमुखोऽनियतमुखः। बहुभाषीत्यर्थः। 'भङ्गी स्याद्वक्रभाषितम्' इति वैजयन्ती। परमर्म परगोप्यम्। परिवादो निन्दा। उत्कोचो गुप्तद्रव्यादिग्रहणम्। दुर्नयानामुपाध्यायोऽध्यापकः। कामतन्त्रे कामशास्त्रे। कर्णधारो नाविकः। कुमारसेवकः कुमारावस्थायाः प्रभृति सेवकः। कदर्थयन्तो निन्दयन्तः। **तथा हीति**। प्रेत्य जन्मान्तरे। 'प्रेत्यामुत्र भवान्तरे' इत्यमरः। किलेत्यलीके। अजिनेन चर्मणा। अनशनं निराहारम्। पाषण्डिनो शास्त्रविरुद्धाचाराः। पटुजातीयः। 'प्रकारवचने जातीयर्' । काकिणी विंशद्वराटकाः। 'वराटकानां दशकद्वयं यत्सा काकिणी' इति भास्कराचार्यः। 'कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः।' इति मनुः—इति भूषणा। कार्षापणम्। 'कार्षापणः कार्षिके स्यात्पणषोडशकेऽपि च' इति विश्वः।

[1] पाखण्डिनः.

शरीरमात्रमपि मर्त्यं चक्रवर्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेणाचर्यते' इति । स पुनरिमान्प्रत्याह—'कोऽसौ मार्गः' इति । पुनरिमे ब्रुवते—'ननु चतस्रो राजविद्याः, त्रयी वार्ताऽऽन्वीक्षिकी दण्डनीतिरिति । तासु तिस्रस्त्रयीवार्तान्वीक्षिक्यो महत्यो मन्दफलाश्च । तास्तावदासताम् । अधीष्व तावद्दण्डनीतिम् । इयमिदानीमाचार्यविष्णुगुप्तेन मौर्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता । सैवेयमधीत्य सम्यगनुष्ठीयमाना यथोक्तकर्मक्षमा' इति । स 'तथा' इत्यधीते शृणोति च । तत्रैव जरां गच्छति । तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि । सर्वमेव वाङ्मयमविदित्वा न तत्त्वतोऽधिगम्यते । भवतु कालेन बहुनाऽल्पेन वा तदर्थाधिगतिः । अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यम् । आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः संपद्यते । इयत ओदनस्य पाकायैतावदिन्धनं पर्याप्तमिति मानोन्मानपूर्वकं देयम् ।

उत्थितेन च राज्ञा क्षालिताक्षालित मुखं मुष्टिमर्धमुष्टिं वाऽभ्यन्तरीकृत्य कृत्स्नमायव्ययजातमह्नः प्रथमेऽष्टमे भागे श्रोतव्यम् । शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्ताः । चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान्सहस्रधाऽऽत्मबुद्ध्यैव ते विकल्पयितारः । द्वितीयेऽन्योन्यं विवदमानानां प्रजानामाक्रोशाद्दह्यमानकर्णः कष्टं जीवति । तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः पापेनाकीर्त्या च भर्तारमात्मानं चार्थैर्योजयन्ति । तृतीये स्नातुं भोक्तुं च लभते । भुक्तस्य यावदन्धःपरिणामस्तावदस्य विषभयं न शाम्यत्येव । चतुर्थे

एकशरीरिणं एकाकिनमित्यर्थः । मर्त्यचक्रवर्तिनं मनुष्यसमूहवर्तिनम् । आचर्यते आचरतीत्यर्थः । तदुक्तं कामन्दके—'आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रय्यां स्थितौ । अर्थानर्थौ तु वार्तायां दण्डनीतौ नयानयौ ॥' इति । अधीष्व अङ्गीकुर्वित्यर्थः । मौर्यः चन्द्रगुप्तो नृपः । वाङ्मयं वाग्जालम् । समूहार्थे मयट् । 'तुलावच्छेद उन्मानो मानः प्रस्थादिभिः कृतः' इति वैजयन्ती । मुष्ट्यर्धमुष्टी परिमाणविशेषौ । 'शुक्तिभ्यां च पलं ज्ञेयं मुष्टिरष्टमिका तथा ॥' 'जनपदाव्ययशोधको मुष्टिः । ग्रामस्य शोधकोऽर्धमुष्टिः' इति भूषणा । अथ वा कृत्स्नानामायव्ययप्रदेशोऽवशिष्टमात्रगणनायुक्तोऽर्धमुष्टिः । कृत्स्नावान्तरस्थलविषय आयादिचतुर्विधगणनायुक्तो मुष्टिः ।—इति लघुदीपिका । शृण्वत एवेत्यनादरे षष्ठी । आक्रोशात् । 'यः सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् । तत्र त्वाक्षारणा यः स्यादाक्रोशो मैथुनं प्रति' इत्यमरः । प्राड्विवाकाः सभ्याः । अन्धःपरिणाम ओदनपरिपाकः । महान्तमायासं क्लेशम् ।

१ शरीरिणमपि. २ सर्वशास्त्रानुबन्धि. ३ विधादधनाः.

हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति । पञ्चमे मन्त्रचिन्तया महान्तमायासमनुभवति । तत्रापि मन्त्रिणो मध्यस्था[1] इवान्योन्यं मिथः संभूय, दोषगुणौ दूतचारवाक्यानि शक्याशक्यतां देशकाल-कार्यावस्थाश्च स्वेच्छया विपरिवर्तयन्तः स्वपरमित्रमण्डलान्युप-जीवन्ति । बाह्याभ्यन्तरांश्च कोपान्गूढमुत्पाद्य प्रकाशं प्रशमयन्त इव स्वामिनमवशमवगृह्णन्ति । षष्ठे स्वैरविहारो मन्त्रो वा सेव्यः । सोऽस्यैतावान्स्वैरविहारकालो[2] यस्य तिस्रस्त्रिपादोत्तरा नाडिकाः । सप्तमे चतुरङ्गबलप्रत्यवेक्षणप्रयासः । अष्टमेऽस्य सेना-पतिसखस्य विक्रमचिन्ताक्लेशः । पुनरुपास्यैव संध्यां प्रथमे रात्रि-भागे गूढपुरुषा द्रष्टव्याः । तन्मुखेन चातिनृशंसाः शस्त्राग्निरस[3]प्रणिधयो-ऽनुष्ठेयाः । द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभते । तृतीये तूर्यघोषेण संविष्टश्चतुर्थपञ्चमौ शयीत किल । कथमिवास्याजस्र-चिन्तायास[4]विह्वलमनसो वराकस्य निद्रासुखमुपनमेत् । पुनः षष्ठे शास्त्रचिन्ताकार्यचिन्तारम्भः । सप्तमे तु मन्त्रग्रहो दूताभिप्रेषणानि च । दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान्वीतशुल्क[5]वाधवर्त्मनि वणिज्यया वर्धयन्तः कार्यमविद्यमानमपि लेशेनो[6]त्पाद्यानवरतं भ्रमन्ति ।

---

मध्यस्थाः मध्यस्थायिनः । 'भाषया 'वकील' पदवाच्याः'—इति भूषणा । संभूय मिलित्वा । चारा गूढदूताः । स्वपरामित्राणां मण्डलम् । 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते' इति परिभाषया स्वमण्डलं परमण्डलं मित्रमण्डलं वेत्यर्थः । प्रशमयन्तः शान्तिं प्रापयन्तः । नृशंसा घातुकाः । शस्त्रप्रणिधिः शस्त्रमारकः । अग्निप्रणिधिरग्निदायकः । रसप्रणिधिर्विषदायकः । 'शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः' इत्यमरः । संविष्टः कृतशयनः । 'संवेशः शयने स्थाने' इत्यजयः । अजस्रं निरन्तरम् । 'नित्यानवरताजस्रम्' इत्यम''ः । विह्वलमनसो व्याकुलचित्तस्य । शास्त्रचिन्ता कार्यचिन्ता चेति । वीता शुल्कबाधा यत्रेति क्रियाविशेषणम् । शुल्कं वाणिज्यकर्मणि राजदेयः करविशेषः । 'घट्टादिदेयं शुल्कोऽस्त्री' इत्यमरः । 'राजकीय-मित्युक्त्वा बाधामपहरन्ति' इति भूषणा । वणिज्यया वणिक्कर्मणा । अनवरतं निरन्तरम् ।

---

१ मध्यस्थायिनः. २ स वह्यतां स्वैर०. ३ रसेति नास्ति क्वचित्. ४ चिन्तायासैर्विह्वल-मनसो वा करय. ५ वीतशुल्कं निराबाधम्. ६ क्लेशेन.

अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः—'अद्य दृष्टो दुःस्वप्नः । दुःस्था ग्रहाः । शकुनानि चाशुभानि । शान्तयः क्रियन्ताम् । सर्वमस्तु सौवर्णमेव होमसाधनम् । एवं सति कर्म गुणवद्भवति । ब्रह्मकल्पा इमे ब्राह्मणाः । कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति । ते चामी कष्टदारिद्र्या बह्वपत्या यज्वानो वीर्यवन्तश्चाद्याप्यप्राप्तप्रतिग्रहाः । दत्तं चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनं च भवति' इति बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति । तदेवमहर्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनं च नयतो नयज्ञस्यास्तां चक्रवर्तिता स्वमण्डलमात्रमपि दुरारक्ष्यं भवेत् । शास्त्रज्ञसमाज्ञातो हि यद्ददाति, यन्मानयति, यत्प्रियं ब्रवीति, तत्सर्वमतिसंधातुमित्यविश्वासः । अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः । यावता च नयेन विना याति लोकयात्रा स लोकत एव सिद्धः । नात्र शास्त्रेणार्थः । स्तनंधयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते । तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि । येऽप्युपदिशन्ति—'एवमिन्द्रियाणि जेतव्यानि, एवमरिषड्वर्गस्त्याज्यः, सामादिरुपायवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः, संधिविग्रहचिन्तयैव नेयः कालः, स्वल्पोऽपि सुखस्यावकाशो न देयः' इति, तैरप्येभिर्मन्त्रिबकैर्युष्मत्तश्चौर्यार्जितं धनं दासीगृहेष्वेव भुज्यते । के चैते वराकाः । येऽपि मन्त्रकर्कशाः शास्त्रतन्त्रकाराः शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः

---

गुणवत्सार्थकम् । ब्रह्मकल्पा ब्रह्मण ईषन्न्यूनाः । स्वस्त्ययनं क्षेमप्रापणम् । कष्टं दारिद्र्यं येषाम् । स्वर्ग्यं स्वर्गसाधनमायुष्यमायुर्वृद्धिकरमरिष्टनाशनमशुभशान्तिकरम् । उपांशु एकान्ते । अविरला कदर्थना यस्मिन् । चक्रवर्तिता राष्ट्रव्यापकता । अरिषड्वर्गः कामक्रोधलोभमदमोहमात्सर्याणि । सामादिरुपायवर्गः । 'सामदाने भेददण्डावित्युपायचतुष्टयम्' इत्यमरः । मन्त्रिबकैर्मन्त्रिकुत्सितैः । 'कुत्सितानि कुत्सनैः' इति समासः । 'अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्परः । शठो मिथ्याविनीतश्च बकव्रतिचरो द्विजः ॥' इति मनुः । मन्त्रकर्कशा मन्त्रकठिनाः । तन्त्रकाराः कर्मकर्तारः । प्रारब्धेषु कृता-

---

१ अविदित. २ दुरारक्षम्. ३ न याति लोक०: समयेन विना लोक०. ४ लोक्ति. ५ ननु बालिशोऽपि. ६ मन्त्रिक०. ७ विशालाक्ष्यवनपुत्र.

कृतं वा तैः शास्त्रानुष्ठानम् । तैरपि हि प्रारब्धेषु कार्येषु दृष्टे सिद्ध्यसिद्धी । पठन्तश्चापठद्भिरतिसंधीयमाना बहवः । नन्विदमुपपन्नं देवस्य यदुत सर्वलोकस्य वन्द्या जातिरयातयामं वयो दर्शनीयं वपुरपरिमाणा विभूतिः । तत्सर्वं सर्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्गविकल्पनात्सर्वकार्येष्वमुक्तसंशयेन तन्त्रावापेनैव मा कृथा वृथा । सन्ति हि ते दन्तिना दश सहस्राणि हयाना लक्षत्रयमनन्तं च पादातम् । अपि च पर्णान्येव हेमरत्नैः कोशगृहाणि । सर्वश्चैष जीवलोकः समग्रमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यति । किमिदमपर्याप्तं यदन्यार्जितायायासः क्रियते । जीवितं हि नाम जन्मवतां चतुःपञ्चाप्यहानि । तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम् । अपण्डिताः पुनरर्जयन्त एव ध्वंसन्ते । नार्जितस्य वस्तुनो लवमप्यास्वादयितुमीहन्ते । किं बहुना । राज्यभारं भारक्षमेष्वन्तरङ्गेषु[1] भक्तिमत्सु समर्प्य, अप्सरःप्रतिरूपाभिरन्तःपुरिकाभी रममाणो गीतसंगीतपानगोष्ठीश्च यथर्तु[2] यथार्हं कुरु शरीरलाभम् ' इति पञ्चाङ्ग[3]स्पृष्ट[4]भूमिरञ्जलिचुम्बितचूडश्चिरमशेत । प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः । जननाथश्च सस्मितम्—' उत्तिष्ठ[5] । ननु हितोपदेशाद्गुरवो भवन्तः । किमिति गुरुत्वविपरीतमनुष्ठितम् ' इति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्[6] ।

---

रब्धेषु । यातः यामः उपभोगकालो यस्य तद्यातयामं न यातयामं अयातयाममजीर्णमित्यर्थः । अपरिमाणेयत्तारहिता । विभूतिरैश्वर्यम् । तन्त्रावापेन । 'तन्त्रं स्वराष्ट्रचिन्ता स्यादावापस्त्वरिचिन्तनम् ' इति कोशः । ' तन्त्रावापो नीतिविचारः ' इति भूषणा । हीति निश्चये । पदातीनां समूहः पादातं पत्तिसंहतिः । ' भिक्षादिभ्योऽण् ' इति अण् । कोशगृहाणि भाण्डागाराणि । कोष्ठागाराणि धान्यचयगृहाणि । ' पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा ' इति कोशः । अन्यार्जितं परकीयम् । वयःखण्डमायुर्लेशम् । अपण्डिता नीचजनाः । अन्तःपुरिकाभिः स्त्रीभिः । यथार्हम् । वीप्सायां यथाशब्दः । पञ्चाङ्गी पञ्चानामङ्गानां समाहारस्तथा । ' द्विगोः ' इति ङीप् । ' जानू बाहुद्वयं मूर्धा पञ्चाङ्गम् ' इत्युत्पलिनी । अञ्जलिना चुम्बितः स्पृष्टश्चूडो मौलिर्येनेति तथा ।

---

१ अन्तरङ्गभूतेषु. २ यथार्थम्. ३ पञ्चाङ्गी. ४ मृष्ट. ५ उत्तिष्ठत. ६ क्रीडारसनिर्भरमतिः.

अथैषु दिनेषु भूयोभूयः प्रस्तुतेऽर्थे प्रेर्यमाणो मन्त्रिवृद्धेन वचसाऽभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान् । अथैवं मन्त्रिणो मनस्यभूत्—'अहो मे मोहाद्धालिश्यम् । अरुचिते[1]ऽर्थे चोदयन्नर्थीवाक्षिगतोऽहमस्य हास्यो जातः । स्पष्टमस्य चेष्टानामायथापूर्व्यम् । तथा हि । न मां स्निग्धं पश्यति, न स्मितपूर्वं भाषते, न रहस्यानि विवृणोति, न हस्ते स्पृशति, न व्यसनेष्वनुकम्पते, नोत्सवेष्वनुगृह्णाति, न विलोभनवस्तूनि प्रेषयति, न मत्सुकृतानि प्रगणयति, न मे गृहवार्तां पृच्छति, न मत्पक्ष्यान्प्रत्यवेक्षते, न मामासन्नकार्येष्वभ्यन्तरीकरोति, न मामन्तःपुरं प्रवेशयति । अपि च । मामनर्हेषु कर्मसु नियुङ्क्ते, मदासनमन्यैरवष्टभ्यमानमनुजानाति, मद्वैरिषु विश्रम्भं दर्शयति, मदुक्तस्योत्तरं न ददाति, मत्समानदोषान्विगर्हयति, मर्मणि मामुपहसति, स्वमतमपि मया वर्ण्यमानं प्रतिक्षिपति, महार्हाणि वस्तूनि मत्प्रहितानि नाभिनन्दति, नयज्ञानां स्खलितानि मत्समक्षं मूर्खैरुद्घोषयति । सत्यमाह चाणक्यः—'चित्तज्ञानानुवर्तिनोऽनर्थ्या[2] अपि प्रियाः स्युः । दक्षिणा अपि तद्भावबहिष्कृता द्वेष्या भवेयुः' इति । तथाऽपि का गतिः । अविनीतोऽपि न परित्याज्यः पितृपैतामहैरस्माद्दृशै[3]रयमधिपतिः[4] । अपरित्यजन्तोऽपि कमुपकारमश्रूयमाणवाचः कुर्मः । सर्वथा नयज्ञस्य वसन्तभानोरश्मकेन्द्रस्य हस्ते राज्यमिदं पतितम् । अपि नामापदो माविन्यः प्रकृतिस्थमेनमापादयेयुः । अनर्थेषु सुलभव्यलीकेषु[5] क्वचिदुत्पन्नोऽपि द्वेषः सद्वृत्तमस्मै न रोचयेत् । भवतु । भविता तावदनर्थः । स्तम्भितपिशुनजिह्वो यथाकथंचिदभ्रष्टपदस्तिष्ठेयम्' इति ।

---

प्रस्तुतेऽर्थे प्रवृत्ते कार्ये । अक्षिगतो द्वेष्यः । 'द्वेष्योऽक्षिगत उच्यते' इति हलायुधः । विलोभनवस्तूनि दानवस्तूनि । 'आदरणीयवस्तूनि' इति लघुदीपिका । मत्पक्ष्यान्मदीयपक्षवर्तिनः । अवष्टभ्यमानमाक्रम्यमाणम् । प्रतिक्षिपति अवगणयति । नयज्ञानां नीतिविदाम् । चाणक्यो नीतिशास्त्रकर्ता । चित्तज्ञानमनुवर्तन्ते ते तथा । दक्षिणाः सरला अपि । तस्य चित्तस्य भावस्तद्भावस्तद्बहिष्कृताः । द्वेष्या वैरिणः । अविनीतोऽप्यत्युद्धतोऽपि । अपरित्यजन्त आश्रयन्तः । कमुपकारं प्रयोजनादिकम् । कर्मचयमित्यध्याहारः । किंविधाः । अश्रूयमाणवाचः । सुलभं व्यलीकं पीडा येषु । 'पीडार्थेऽपि व्यलीकं स्यात्' इत्यमरः । स्तम्भिता स्तम्भं प्रापिता । पिशुनाः खलाः । अभ्रष्टपदोऽगताधिकारः ।

---

१ अनुचिते. २ अनर्थाः. ३ पितृपितामहानुयातैः. ४ अस्माकमुपसेवितमिदं राजकुलमीदृशश्चायमधिपतिः. ५ सुलभालीकेषु.

एवंगते मन्त्रिणि राजनि च कामवृत्ते चन्द्रपालितो नामाश्मकेन्द्रामात्यस्येन्द्रपालितस्य सूनुरसद्वृत्तः पितृनिर्वासितो नाम भूत्वा बहुभिश्चारणगणैर्बह्वीभिरनल्पकौशलाभिः शिल्पकारिणीभिरनेकच्छन्नकिंकरैश्च गूढपुरुषैः परिवृतोऽभ्येत्य विविधाभिः क्रीडाभिर्विहारभद्रमात्मसादकरोत् । अमुना चैव संक्रमेण राजन्यास्पदमलभत । लब्धरन्ध्रश्च स यद्यद्व्यसनमारभते तत्तथेत्यवर्णयत्—' देव, यथा मृगया ह्यौपकारिकी न तथाऽन्यत् । अत्र हि व्यायामोत्कर्षादापत्सूपकर्ता दीर्घाध्वलङ्घनक्षमो जङ्घाजवः, कफापचयादारोग्यैकमूलमाशयाग्निदीप्तिः, मेदोपकर्षादङ्गानां स्थैर्यकार्कश्यातिलाघवादीनि, शीतोष्णवातवर्षक्षुत्पिपासासहत्वं, सत्त्वानामवस्थान्तरेषु चित्तचेष्टितज्ञानं, हरिणगवलगवयादिवधेन सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनं, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोचनम्, आटविकवर्गविश्रम्भणम्, उत्साहशक्तिसंधुक्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः । द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यं, जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वं, पौरुषैकनिमित्तस्यामर्षस्य

चारणगणैर्गायकसमूहैः । ' चारणो गायकः समौ ' इति वैजयन्ती । शिल्पकारिणीभिश्चित्रकारिणीभिः ' आस्पद प्रतिष्ठाप्रयोजकं स्थानम् । व्यसनम् । ' यस्माद्धि व्यस्यति श्रेयस्ततो व्यसनमुच्यते ' इति कामन्दकः । ' स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यार्थदूषणे । दण्डपारुष्यमित्येतन्महाव्यसनसप्तकम् ॥ ' इति वैजयन्ती । मृगया पापर्द्धिः । औपकारिक्युपकारायालं सा तथा । व्यायामो हिण्डनम् । कफः श्लेष्मा । मेदोपकर्षात् । मेदो धातुः । ' मेदःक्षयभावादङ्गानि लघूनि भवन्ति ' इति वैद्यकम् । स्थैर्यं कर्मसहत्वम् । वर्षो वृष्टिः । सत्त्वानां प्राणिनाम् । चित्तस्य मनसः । चेष्टितस्य तत्क्रियायाश्च । गवलोऽरण्यमहिषः । गवयो गोसदृशः पशुः । ' गवयः स्याद्वनगवो गोसदृक्षोऽश्ववारणः ' इत्यभिधानचिन्तामणिः । वृक ईहामृगः । ' कोक ईहामृगो वृकः ' इत्यमरः । भाषया ' विक ' इति प्रसिद्धः । अटव्यां चरन्ति ते आटविकाः । विश्रम्भणं विश्वासोत्पादनम् । अत्र शाकुन्तलम्—' मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले मिथ्यैव व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ ' इति । द्यूतेऽपीति । आशयौदार्यं

वृद्धिः, अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम्, अध्यवसायसहचरेषु साहसेष्वतिरतिः, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता, मानावधारणम्, अकृपणं च शरीरयापनमिति। उत्तमाङ्गनोपभोगेऽप्यर्थधर्मयोः सफलीकरणं, पुष्कलः पुरुषाभिमानः, भावज्ञानकौशलम्, अक्लिष्टमाचेष्टितम्, अखिलासु कलासु वैचक्षण्यम्, अलब्धोपलब्धिलब्धानुरक्षणरक्षितोपभोगभुक्तानुसंधानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया बुद्धिवाचोः पाटवम्, उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसंभावनीयता, परं सुहृत्प्रियत्वम्, गरीयसी परिजनव्यपेक्षा, स्मितपूर्वाभिभाषित्वम्, उद्रिक्तसत्त्वता, दाक्षिण्यानुवर्तनम्, अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरोगभङ्गपटीयसामासवानामासेवनात्स्पृहणीयवयोऽवस्थापनम्, अहंकारप्रकर्षादशेषदुःखतिरस्करणम्, अङ्गरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम्, अपराधप्रमार्जनान्मनःशल्योन्मार्जनम्, अशाठ्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणं, मत्सराननुबन्धादानन्दैकतानता, शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः, संविभाग-

चित्तौदार्यम्। कूटकर्मणाम् कपटकर्मणाम्। उपलक्षणात् ज्ञानात्। अनन्तमगाधम्। एकविषयोपसंहारात्तदेकवृत्तित्वात्। ऐकाग्र्यमेकाग्रस्य भावस्तथा। अध्यवसाय उद्योगः तस्य सहचरेषु तन्निष्ठेषु। साहसमद्भुतं कर्म। अतिरतिः प्रीतिः। प्रतिसंसर्गः प्रत्यवस्थानम्। धर्षणीयताऽभिभवनीयत्वम्। 'मानावधारणमभिमाननिश्चयः' इति भूषणा। पुष्कलः श्रेयान्। 'श्रेयान्श्रेष्ठः पुष्कलः स्यात्' इत्यमरः। भावश्चित्ताभिप्रायः। तस्य ज्ञानम्। ज्ञानं ग्रन्थादिविषयम्। अलब्धोपलब्धिरप्राप्तप्राप्तिः। लब्धानुरक्षणं प्राप्तस्य पालनम्। भुक्तानुसंधानं भुक्तस्मृतिः। रुष्टस्यानुनयः क्रुद्धस्य समाधानम्। बुद्धिवाचोर्मतिवचनयोः। पाटवं पटुत्वम्। उत्कृष्टो यः शरीरसंस्कारः। **पानेऽपीति।** आसवानां मद्यानाम्। अङ्गजो मदनः। राग इच्छा। दीपनं वृद्धिः। संधुक्षणमुद्द्योतनम्। उन्मार्जनमुद्धरणम्। अनर्गला यथेष्टा ये प्रलापा अनर्थकवचनानि तैः। मत्सरस्याननुबन्धादधारणात्। एकतानता। तत्परतेत्यर्थः। 'एकतानोऽनन्यवृत्तिः' इत्यमरः। सततस्य भावः सातत्यम्। 'पानसमये आगतेभ्यो दीयन्त आसवाः'

१ अभिरतिः. २ धीरणम्. ३ नीयतया. ४ वयोव्यवस्था०. ५ मानशल्य. ६ उन्मूलनम्. ७ अश्लाघ्य.

शीलतया सुहृद्वर्गसंवर्गणम्, अनुपमानमङ्गलावण्यम्, अनुत्तराणि विलसितानि, भयार्तिहरणाच्च सांग्रामिकत्वमिति । वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारिकाणि ; न हि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलमलम्, अवलम्बितुं च लोकतन्त्रम्' इति । असावपि गुरूपदेशमिवात्यादरेण तस्य मतमन्ववर्तत । तच्छीलानुसारिण्यश्च प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि । सर्वश्च समानदोषतया न कस्यचिच्छिद्रान्वेषणायायतिष्ट । समानभर्तृप्रकृतयस्तन्त्राध्यक्षाः स्वानि कर्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि व्यशीर्यन्त । व्ययमुखानि विटविधेयतया विभोरहरहर्व्यवर्धन्त । सामन्तपौरजानपदमुख्याश्च समानशीलतयोपारूढविश्रम्भेण राज्ञा संजानयः पानगोष्ठीष्वभ्यन्तरीकृताः स्वं स्वमाचारमत्यचारिषुः । तदङ्गनासु चानेकापदेशपूर्वमपाचरन्नरेन्द्रः । तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रासा बहुसुखैरवर्तन्त । सर्वश्च कुलाङ्गनाजनः पांसुलजनभङ्गिभाषणरतो भग्नचारित्रयन्त्रणस्तृणायापि न गणयित्वा भर्तृन्धातृगणमन्त्रणान्यशृणोत् । तन्मूलाश्च कलहाः सामर्षाणामुदभवन् । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहृतपरिभूतयः प्रहताश्च पातकपथाः । हतबान्धवा हृतवित्ता वध-

इति संप्रदायवशादत्र विभागशीलता' इति भूषणा । संवर्गणं संयोजनं एकीकरणमित्यर्थः । अनुपमानमसदृशम् । संग्रामे साधु सांग्रामिकम् । औपकारिकाण्युपकारक्षमाणि । उपशमः शान्तिः । लोकतन्त्रं प्रजाशासनाधिकारम् । प्रकृतयः प्रजाः । विशृङ्खलं बन्धशून्यम् । छिद्रान्वेषणाय । दोषगवेषणायेत्यर्थः । तन्त्राध्यक्षाः सेनापतयः । कर्मफलानि तत्तत्कर्मणि लब्धानि राजधनानि । आयद्वाराण्यागमनोपायाः । व्यशीर्यन्त भग्नानि । व्ययमुखानि व्ययद्वाराणि । विटस्य षिङ्गस्य । विधेयतया विनयग्राहितया । 'विधेयो विनयग्राही' इत्यमरः । 'वैधेयतया' इति पाठे बालिशतया । 'मूर्खवैधेयबालिशाः' इत्यमरः । अहरहः प्रतिदिवसम् । सजानयः सस्त्रीकाः । 'जायाया निङ्' इति समासान्तः । पानगोष्ठी मद्यशाला । अत्यचारिषुरतिक्रमयामासुः । मन्दत्रासाः । निर्भया इत्यर्थः । भङ्गिभाषणं वक्रोक्तयः । धातृणां गणाः जारसमूहाः । 'धाता जारे विधातरि' इत्यजयः । सामर्षाणां तच्चेष्टितान्यसहमानानाम् ।

१ संवर्धनम्. २ वैधेय॰. ३ सजानपदाः. ४ संलग्नसुलभभङ्गि॰. ५ अपहृतपरिहृतयः.

बन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः। दण्डश्चायथाप्रणीतो भयक्रोधावजनयत्। कृशकुटुम्बेषु लोभः पदमधत्त। विमानिताश्च तेजस्विनो माननादह्यन्त। तेषु तेषु चाकृत्येषु प्रासरन्परोपजापाः। तदा च मृगयुवेषमृगबाहुल्यवर्णनेनाद्रिद्रोणीरनपसारमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैः, व्याघ्रादिवधे प्रोत्साह्य तन्मुखपातनैः, इष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्धनैः, तृणगुल्मगूढच्छन्नतटप्रदरपातहेतुभिर्विषममार्गप्रधावनैः, विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैः, विष्वग्विसरविच्छिन्नानुयातृतयैकाकीकृतानां यथेष्टघातनैः, मृगदेहापराद्धैर्नामेषुमोक्षणैः, सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैः, आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैः, अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैरितरेषां हिंसोत्पादनैः, गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं लब्ध्वा साक्षिषु तद्विख्याप्याकीर्तिगुप्तिहेतुभिः पराक्रमैः, परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान्भर्तृनुभयं वा प्रहृत्य तत्साहसोपन्यासैः, योगनारीहारितानां संकेतेषु प्रागुपनिलीय पश्चादभिद्रुत्याकीर्तनीयैः प्रमापणैः, उपप्रलोभ्य बिलप्रवेशेषु निधानखननेषु

---

परिभूतिः परिभ..। अश्रुकण्ठ्यः गद्गदवाचः इत्यर्थः। परोपजापाः शत्रुप्रयुक्ता भेदाः। अद्रिद्रोणी गिरिमध्यपद्धतिः। अनपसारमार्गा अनिर्याणमार्गाः। वंशगुल्मा वेणुगहनानि अग्निविसर्गैरग्निदानैः। प्रोत्साह्य प्रेरयित्वा। तट उन्नतप्रदेशे। प्रदरो निम्नगो भागः। विषममार्गः कठिनमार्गः। क्षुरिकाः शस्त्रिकाः। विसरः समुदायः। 'समूहे निवहव्यूहसंदोहविसरव्रजाः' इत्यमरः। विष्वक् सर्वतो यो विसरः प्रचारस्तेन विच्छिन्ना अनुयातारो येषां तेषां भावस्तत्ता तया। अनुयाताऽनुगामी। अपराद्धो लक्ष्यच्युतः। इषुमोक्षणैर्बाणपातनैः। सपणबन्धं सनियमम्। अटवीमटन्ति त आटविकाः। तेषां छद्मना तन्मिषेण। तत्कृतानीति ग्राहयित्वेत्यर्थः। व्यलीकं दुःखम्। 'तत्साहसं नरसाहसम्' इति भूषणा। योगा नारी। 'योगो विस्रब्धघाती स्यात्' इति कोषः। 'योगा मध्येयनं स्थिता। शतात्परं सहस्राधिगावतत्पुरुषायिता' इति वैजयन्ती। मध्येयनमिति मार्गमध्ये इत्यर्थः इति लघुदी०। प्राक्प्रथमम्। उपनिलीय लीनतां प्राप्येत्यर्थः। प्रमापणैः हिंसनैः।

१ मृगाटवीषु मृगबाहु०. २ गुल्मतृण. ३ प्रचार. ४ भर्तृभयमपहृत्य. ५ योग्य.

मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैः, मत्तगजाधिरोहणाय प्रेर्य प्रत्यपायनिवर्तनैः, व्यालहस्तिनं कोपयित्वा लक्ष्यीकृतमुख्यमण्डलेष्वपक्रमणैः, दायाद्यर्थे विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः, सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैः, योगाङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैः, वस्त्राभरणमाल्याङ्गरागादिषु रसविधानकौशलैः, चिकित्सामुखेनामयोपबृंहणैरन्यैश्चाभ्युपायैरश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरमकुर्वन्।

अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत्। तत्परामृष्टराष्ट्रपर्यन्तश्चानन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत्। सर्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत्। अपरेऽपि सामन्ताः समगंसत। गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशन्। तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्यात्मनाटकीयां क्षमातलोर्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाहूयानन्तवर्मा नृत्यमद्राक्षीत्। अतिरक्तश्च भुक्तवानिमां मधुमत्ताम्। अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त—'प्रमत्त एष राजा कलत्राणि नः परामृशति। कियत्यवज्ञा सोढव्या। मम

---

प्रेर्य प्रोत्साह्य। प्रत्यपायानां नाशप्रतिबन्धकानामुपायानां निवर्तनैर्ह्रासोत्पादनैरित्यर्थः। प्रत्यवायनिर्वर्तनैरिति पाठे प्रत्यवायो नाशस्तत्संपादनैः। व्यालहस्तिनं दुष्टदन्तिनम्। 'व्यालो दुष्टगजः प्रोक्तः' इति हलायुधः। लक्ष्यीकृतानि मुख्यानां प्रधानपुरुषाणां मण्डलानि तेष्वपक्रमणैर्मोचनैः। अक्रमपणैरितिपाठेऽक्रमग्लहैः। 'पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे' इति विश्वः। उपांशु रहसि। घोषणैर्डिण्डिमैः। अहर्निशं रात्रिंदिवम्। राजयक्ष्मा क्षयरोगः। रसविधानं विषाधानम्। आमयो रोगः। उपबृंहणं वर्धनम्। 'तीक्ष्णा मर्मणि घातकाः' इति वैजयन्ती। अथेति। वानवास्यम्। 'वानवास्यो वनप्रभुः' इति कोशः। प्रोत्साह्य रणोत्साहं वर्धयित्वा। तेन परामृष्टोऽभिद्रुतो राष्ट्रपर्यन्तो राष्ट्रप्रान्तभागो यस्य। अभियोक्तुं पराभवितुम्। समगंसत। 'गम्लृ गतौ'। समुपसर्गः। लुङ्। 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम्। मिलिता इत्यर्थः। अभ्यर्णे समीपे। आत्मनाटकीयां स्वीयनृत्याङ्गनाम्। संभूय मिलित्वा।

१ प्रत्यवायनिर्वर्तनैः. २ अक्रमपणैः. ३ योग्या. ४ नमधान. ५ उपबर्हणैः. ६ चाभ्यराति. ७ मधूत्तमाम्.

शतमस्ति हस्तिनां पञ्चशतानि च ते । तदावां संभूय मुरलेशं वीरसेन-हृषीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं च नागपाल-मुपजपाव । ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपावर्तेरन् । अयं च वानवास्यः प्रियं मे मित्रम् । अमुनैनं दुर्विनीतमग्रतो व्यतिषक्तं पृष्ठतः प्राहरेम । कोशवाहनं च विभज्य गृह्णीमः' इति । हृष्टेन चामुना-ऽभ्युपेते विंशतिं वरांशुकानां पञ्चविंशतिं काञ्चनकुङ्कुमकम्बलाना प्राभृतीकृत्याप्तमुखेन तैः सामन्तैः संमन्त्र्य तानपि स्वमतावस्थापयत् । उत्तरेद्युस्तेषां सामन्तानां वानवास्यस्य चानन्तवर्मा नयद्वेषादामिषत्व-मगमत् । वसन्तभानुश्च तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा यथाबलं च विभज्य गृह्णीत । युष्मदनुज्ञया येन केनचिदंशेनाहं तु-ष्यामि' इति शाठ्यात्सर्वानुवर्ती तेनैवामिषेण निमित्तीकृतेनोत्पादित-कलहः सर्वसामन्तानध्वंसयत् । तदीयं च सर्वस्वं स्वयमेवाग्रसत् । वान-वास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसादकरोत् ।

अस्मिंश्चान्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणमस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीमनयोश्च मातरं महादेवीं वसुंधरामादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात् । अस्मादृशैर्मित्रैस्तु नीत्वा माहिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी दर्शिताऽभूत् । तां चायामनार्योऽसावन्यथा-ऽभ्यमन्यत । निर्भर्त्सितश्च तया 'सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षति' इति नैर्घृण्यात्तमेनं बालमजिघांसीत् । इदं तु ज्ञात्वा देव्या-ऽहमाज्ञप्तः—'तात नालीजङ्घ जीवताऽनेनार्भकेण यत्र क्वचिदवधाय

व्यतिषक्तं युद्धव्यापृतम् । वरांशुकानि बहुमूल्यवस्त्राणि । प्राभृतीकृत्योपायनीकृत्य । आप्ताः विश्वस्ताः । हितैषिण इत्यर्थः । नयद्वेषान्नीतिमार्गाननुसरणात् । अवशीर्णं विध्वस्तम् । यथाबलं स्वस्वबलानुरूपम् । आमिषेण प्रलोभनद्रव्येण । **अस्मिन्निति** । मौलैः कुलक्रमागतैः प्रधानपुरुषैः । अपसर्पन्निर्गच्छन् । द्वैमातुराय सापत्नभ्रात्र इत्यर्थः । द्वयोर्मात्रोरपत्यं द्वैमातुरः । 'मातुरुत्संख्यासंभद्रपूर्वायाः' इति अणि उत्वं रपरत्वं च । अखण्डचारित्राऽभ्रष्टचारित्रा सतीत्यर्थः । राज्यार्हं राज्याधिकारिणम् ।

१ हृषीके०. २ उपजपावः. ३ परम्. ४ यथाप्रयासं यथाबलम्. ५ निमित्तीकृत्य. ६ अवसरे. ७ अस्मन्मित्रैस्तु. ८ अजिघांसत्. ९ अवस्थाय.

जीवे। जीवेयं चेदहमप्येनमनुसरिष्यामि । ज्ञापय मां क्षेमप्रवृत्तः स्ववार्ताम्' इति। अहं तु संकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि। पादचारदुःखितं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य तत्रापि राजपुरुषसंपातभीतो दूराध्वमपासरम्। तत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः। त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोः' इत्यञ्जलिमबध्नात्। 'किमीयो जात्याऽस्य माता' इत्यनुयुक्ते मयाऽमुनोक्तम्—'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोसलेन्द्रात्कुसुमधन्वनोऽस्य माता जाता' इति। 'यद्येवमेतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। वृद्धेनोक्तम्—'सिन्धुदत्तापुत्राणां कतमस्ते पिता' इति। 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत्। अहं तु 'तं नयावलिप्तमश्मकेन्द्रं नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्यैनां क्षुधं क्षपयेयम्' इत्यचिन्तयम्। तावदापतितौ च कस्यापि व्याधस्य त्रीनिषूनतीत्य द्वौ मृगौ स च व्याधः। तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डं चाक्षिप्याभिपातयम्। एकः सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत्। तं चैकं मृगं दत्त्वा मृगयवे, अन्यस्यापलोमत्वचः क्लोमापोह्य निष्कुलाकृत्य विकृत्योर्वस्थिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु तप्तेनामिषेण तयोरात्मनश्च

---

पादचारिणं चरणगामिनम्। घोषे आभीराल्पग्रामे। 'घोष आभीरपल्ली स्यात्' इत्यमरः। दूराध्वं दूरमार्गम्। पिपासा तृषा। विशरणस्य शरणरहितस्य। कस्येयं किमीया। पित्र्ये पदे पितुः स्थाने। सपत्राकृतः पत्रेण सह विद्धः। 'वाहने तु च्छदे पत्रम्' इति भागुरिः। 'सपत्रनिष्पत्रादतिव्यथने' इति डाच्। अन्यो द्वितीयो निष्पत्राकृतः। मृगयवे लुब्धकाय। अपलोम रोमशून्यम्। त्वचश्चर्मणः। क्लोम मस्तिष्कम्। 'तिलकं क्लोम मस्तिष्कम्' इत्यमरः। निष्कुलाकृत्य निष्कोष्य। 'निष्कुलान्निःकोषणे' इति डाच्। विकृत्य विच्छेद्य। शूलाकृत्य शूले कृत्वा। शूलेन पाचयित्वेत्यर्थः। 'शूलात्पाके' इति डाच्। दावाङ्गारेषु वनवह्निषु। तप्तेन भर्जितेन। आमिषेण मांसेन।

१ जीवेः. २ ०दुःस्थितं; पादचारिणं. ३ दूराध्वमपासरन्तत्रास्य. ४ किमीयोऽयमित्यनुयुक्ते. ५ वृत्त०. ६ दुर्नयाव०. ७ अवधिषम ८ [illegible].

क्षुधमत्यैतार्षम् । एतस्मिन्कर्मणि मत्सौष्ठवेनातिहृष्टं किरातमस्मि पृष्टवान्—'अपि जानासि माहिष्मतीवृत्तान्तम्' इति। असावाचष्ट—'तत्र व्याघ्रत्वचो दृतीश्च विक्रीयाद्यैवागतः। किं न जानामि। प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरी' इति। अथ कर्णे जीर्णमब्रवम्—'धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति। तत्प्रतिगत्य कुशलमस्य मद्वार्तां च देव्यै रहो निवेद्य पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशनं कार्यम्। स दुर्मतिरन्तःप्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति। पुनस्त्वया तन्मुखेन स वाच्यः—'यदपेक्षया त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात्। अद्य तु त्वदादेशकारिण्येवाहम्' इति। स तथोक्तः प्रीतिं प्रतिपद्याभिपत्स्यति। पुनरनेन वत्सनाभनाम्ना महाविषेण संनीय तोयं तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः। 'स एवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता' इति। पुनरनेनागदेन संगमितेऽम्भसि तां मालां मज्जयित्वा स्वदुहित्रे देया। मृते तु तस्मिंस्तस्यां च निर्विकारायां सत्यां सतीत्येवैनां प्रकृतयोऽनुवर्तिष्यन्ते। पुनः प्रचण्डवर्मणे संदेश्यम्—'अनायकमिदं राज्यम्। अनेनैव सह बालिकेयं स्वीकर्तव्या' इति। तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुरो

---

अत्यतार्षमतिक्रान्तवान्। व्याघ्रत्वचो व्याघ्रचर्माणि। दृतीश्चर्मपुटानि। 'दृतिभिस्त्रतनीयश्च भस्त्री चापि स्त्रियः समाः' इति कोशः। उत्सवोत्तरोत्सवपूर्णा। जीर्णं वृद्धम्। सम्यक्प्रतिपत्त्योचिताचरणेन। आक्रोशनमाक्षारणा। अभिपत्स्यत्यङ्गीकरिष्यति। वत्सनाभः। 'बचनाग' इति ख्यातः। संनीय संमिश्र्य। तया मालया। अगदेनौषधेन। तस्यां स्वदुहितरि। निर्विकारायां विकारशून्यायाम्। प्रकृतयः प्रजाः। संदेश्यम् कथनीयमित्यर्थः। कापालिको व्रतधारी। पुरो बहिः। नगराद्बहिरित्यर्थः

१ अत्यतार्प्सम्, अतक्षिषम्. २ सांत्सवा. ३ त्वदुक्तम्. ४ संमील्य.

बहिरुपश्मशानं वत्स्यावः। पुनरार्यप्रायान्पौरवृद्धानामाप्तांश्च मन्त्रिवृद्धानन्ते अब्रवीत् देवी—'स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः। अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति। पञ्चमेऽहनि रेवातटवर्तिनि मद्भवने परीक्ष्य वैजन्यं जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह कोऽपि द्विजकुमारो निर्यास्यति। स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति। स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः। सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पिता' इति। तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति। स सांप्रतमतिप्रीतः प्रयातोऽर्थश्चायं यथाचिन्तितमनुष्ठितोऽभूत्। प्रतिदिशं च लोकवादः प्रासर्पत्—'अहो माहात्म्यं पतिव्रतानाम्। असिप्रहार एव हि स मालाप्रहारस्तस्मिञ्जातः। न शक्यमुपधियुक्तमेतत्कर्मेति वक्तुं यतस्तदेव दत्तं दाम दुहित्रे स्तनमण्डनमेव तस्यै जातं, न मृत्युः। योऽस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेत्' इति।

—अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्—'भगवन्, अयमञ्जलिः। अनाथोऽयं जनोऽनुगृह्यताम्। अस्ति ममैकः स्वप्नः स किं सत्यो न वा' इति। मयोक्तम्—'फलमस्याद्यैव द्रक्ष्यसि' इति। 'यद्येवं बहु भागधेयमस्या वो दास्याः। स खल्वस्याः सानाथ्यशंसी स्वप्नः'

आर्यप्रायान्। श्रेष्ठानित्यर्थः। वैजन्यं विजनस्य भावम्। 'विगतो जनता जनसमूहो यस्मात् तस्य भावम्' इति भूषणा। तिरस्कृत्य लोकलोचनत आच्छिद्य। द्विजातिदारकस्य वणिक्पुत्रस्य। दारत्वेन स्त्रीत्वेन। स जीर्णः नालीजङ्घः। सांप्रतं तदा। प्रासर्पत्प्रसृतोऽभूत्। उपधिः कपटम्। दाम माला। स्तनमण्डनं कुचभूषणम्। शासनमाज्ञाम्। अतिवर्ततेऽतिक्रामति। व्रतमस्यास्तीति व्रती। प्रस्नुतस्तनी प्रस्रवत्पयःस्तनी। हर्षाकुलं सहर्षम्। भागधेयं भाग्यम्। अस्या वो दास्याः। मञ्जुवादिन्याः इत्यर्थः। सानाथ्यशंसी सनाथस्य भावः सानाथ्यं तच्छंसयतीति तथा।

१ पुनरार्यप्रायान्. २ मन्त्रिवृद्धानप्यानीय. ३ प्रयातः। अर्थ०. ४ हृष्टकल्पम

इति मद्दर्शनरागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य, भूयोऽपि सा हर्षगर्भमब्रूत—'तच्चेन्मिथ्या सोऽयं सुग्मर्दीयो बालकपाली श्वो मया निरोद्धव्यः' इति । मयाऽपि सस्मितं मञ्जुवादिनीरागलीनदृष्टिलीढधैर्येणाभिहितं 'एवमस्तु' इति । लब्धभैक्षो नालीजङ्घमाकार्य निर्गम्य ततश्च तं चानुयान्तं शनैरपृच्छम्—'क्वासावल्पायुः प्रथितः प्रचण्डवर्मा' इति । सोऽब्रूत—'राज्यमिदं ममेत्यपास्तशङ्को राजास्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैः' इति । 'यद्येवमुद्याने तिष्ठ' इति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे क्वचिच्छून्यमठिकायां मात्राः समवतार्य तद्रक्षणनियुक्तराजपुत्रः कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम् । अनुरञ्जितातपे तु समये जनसमाजज्ञानोपयोगीनि संहृत्य नृत्यगीतनानारुदितानि हस्तचङ्क्रमणमूर्ध्वपादालातपादापीडवृश्चिकमकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च करणानि पुनरादायादाय आ-

मद्दर्शनरागेण बद्धं साध्वसं ययेति सा ताम् । मञ्जुवादिनीम् । 'मञ्जु मञ्जुलम्' इत्यमरः । वदति सा वादिनी ताम् । प्रणमय्य । नमस्कारं कारयित्वेत्यर्थः । सस्मितं सहासमभिहितम् । रागलीना या दृष्टिस्तया लीढमास्वादितं धैर्यं यस्य तेन । लब्धभैक्षो लब्धा प्राप्ता भिक्षा येनेति । 'भिक्षादिभ्योऽण्' । नालीजङ्घमेतन्नामानम् । आकार्याहूय । अनुयान्तं पश्चादनुवर्तमानम् । आस्थानमण्डपे सभामण्डपे । कुशीलवैर्गायकैः । 'गायकास्तु कुशीलवाः' इति वैजयन्ती । जरन्तं जीर्णम् । 'प्राकारो वरणः सालः' इत्यमरः । अल्पो मठो मठिका । मात्राः परिच्छदादीन् । 'मात्रा परिच्छदे ऽल्पेंऽशे' इति वैजयन्ती । तद्रक्षणे मात्रारक्षणे । जनसमाजस्य लोकसमूहस्य ज्ञानोपयोगीनि । नृत्यं नर्तनम् । गीतं गानम् । नानारुदितानि रोदनशब्दानुकरणानि । हस्तयोश्चङ्क्रमणमितस्ततः प्रसारणम् । भ्रमणं वा । ऊर्ध्वपादमलातपादम् । 'कराभ्यामवनीं स्पृष्ट्वा मूर्धानं भ्रामयेन्मुहुः । उत्तानीकृत्य चरणावूर्ध्वपादं तदुच्यते ॥' इति नृत्याध्याये भरतः । 'उद्धृत्यैकं तु चरणमन्यं कृत्वैव कुञ्चितम् । नृत्यत्यनुमतं तिर्यक्तदालातकमेव च ॥' इत्यपि तत्रैव । वृश्चिकलङ्घनं मकरलङ्घनं चेति 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते' इति न्यायात् । मत्स्योद्वर्तनानि मीनवद्विलसितानि । आदायादायेति

१ बद्धराग. २ बाल. ३ समाजोप०. ४ रुदितादि—नि.

सन्नवर्तिनां क्षुरिकास्ताभिरुपहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन् विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्मणश्छुरिकयैकया प्रत्युरसं प्रहृत्य 'जीव्याद्वर्षसहस्रं वसन्तभानुः' इत्यभिगर्जन् मद्गात्रमुत्कर्तुमुद्यतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य तावतैव तं विचेतीकुर्वन्नाकुलं च लोकमुच्चक्षूकुर्वन् द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घयम् । अवप्लुत्य चोपवने 'मदनुपातिनामेष पन्था दृश्यते' इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतास्पष्टपादन्यासया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधावितः पुनरवाचोच्चितेष्टकचितत्वाद्दलक्ष्यपातेन प्रद्रुत्य लङ्घितप्राकारवप्रखातवलयस्तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य प्रतिमुक्तपूर्ववेषः सह कुमारेण मत्कर्मतुमुलराजद्वारि दुःखलब्धवर्त्मा श्मशानोद्देशमभ्यगाम् । प्रागेव तस्मिन्दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं मग्नपार्श्वस्थैर्यस्थूलप्रस्तरस्थगितबाह्यद्वारं बिलम् ।

विश्वासद्योतनार्थं द्विरुक्तिः । क्षुरिकाः शस्त्राणि । उपहितवर्ष्मा संयुक्तदेहः । 'आच्छिन्नशरीरः' इति भूषणा । 'वर्ष्म विग्रहः' इत्यमरः । श्येनपातः । 'परिक्रम्यान्तरिक्षेण संप्राप्योर्वैरदृश्यताम् । आकस्मिकाभिपातेन श्येनपात इतीरितः ॥' इति । उत्क्रोशपातः कुररपातः । 'उत्क्रोशकुररौ समौ' इत्यमरः । चापः । प्रसारितबाहुद्वयप्रमाणं चाप इत्युच्यते । भाषया 'वांव' इति प्रसिद्धिः । मद्गात्रं मच्छरीरम् । उत्कर्तुं त्रोटितुम् । उद्यतासेरूर्ध्वीकृतखड्गस्य । चारभटस्य चारश्चासौ भटश्चेति व्युत्पत्तिः । 'भटश्चारभटो मतः' इति हलायुधः । पीवरांसं मांसलस्कन्धम् । विचेतीकुर्वन्नित्यत्र 'अरुर्मनश्चक्षुः—' इति सलोपः । द्विपुरुषोच्छ्रितं पुरुषद्वयप्रमाणोच्चम् । अवप्लुत्योड्डीय । सैकतं सिकतामयम् । अस्पष्टपादन्यासया न स्पष्टः पादन्यासश्चरणपातो यस्यामिति । तमालवीथ्या तमालपङ्क्त्या । अवाचोच्चितेष्टका उच्चनीचबद्धेष्टकाः । प्रतिमुक्तः संबद्धः पूर्ववेषो येन । 'अमुक्तं प्रतिमुक्तं च पिनद्धं चापिनद्धवत्' इति लघुदी० । 'तुमुलो व्याकुलरवः' इति महीपः । प्रस्तरः पाषाणः । 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत् ।' इत्यमरः । अथेति । गलति । गच्छतीत्यर्थः । वर्षवरः । 'षण्डो वर्षवरः' इत्यमरः ।

---

१ उपाहित. २ जीयात्. ३ असकर्तुम्; महर्तुम्. ४ पाठेन.

अथ गलति मध्यरात्रे वर्षवरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तद्बिलमावां प्रविश्य तूष्णीमतिष्ठाव। देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं मालवाय दत्त्वा[1] प्रचण्डवर्मणे, चण्डवर्मणे च तामवस्थामश्मकेन्द्रोपाधिकृतामेव संदिश्य उत्तरेद्युः प्रत्युषस्येव पूर्वसंकेतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्चयित्वा सर्वजनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं तद्भवनं विधाय दत्तदृष्टिः[2] सह जनेन स्थित्वा पटीयांसं पटहशब्दमकारयत्। अणुतररन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतैक[3]पार्श्वमेकतो निवेश्य निरगमम्। निरगमयं च कुमारम्। अथ यथापूर्व[4]मर्पयित्वा दुर्गामुद्घाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टि स्पष्टरोमाञ्चमुद्यताञ्जलि रूढविस्मयं च प्रणि[5]पतन्तीः प्रकृतीरभ्यधाम्—'इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति—'स एष राजसूनुरापन्नो मया सकृपया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तः। तमेनमद्यप्रभृति मत्पुत्रतया[6]ऽमन्दमातृपक्ष इति परिगृह्णन्तु भवन्तः।' अपि च दुर्घटकूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकघटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारम्। रक्षानिर्वेशश्चास्य स्वत्तेयं सुभ्रूरभ्यनुज्ञाता मह्यमार्यया' इति। श्रुत्वैतत् 'अहो भाग्यवान्भोजवंशो यस्य त्वमार्यादत्तो नाथः' इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरां

तेनोपनीतानि महार्हाणि महामूल्यानि रत्नभूषणानि पट्टनिवसनानि पट्टवस्त्राणि च ययोस्तौ। पूर्वेद्युः पूर्वदिवसे। प्रत्युषसि प्रातःकाले। वैजन्यं विजनस्य भावस्तथा। पटीयांसं श्रेष्ठम्। पटहशब्दं दुन्दुभिध्वनिम्। अंसलपुरुषः मांसलपुरुषः। 'बलवान्मांसलोंऽसलः' इत्यमरः। 'वत्सांसाभ्यां कामबले' इति लच्। प्रत्ययः साक्षात्कारः। हृष्टा हर्षं प्राप्ता दृष्टिर्यत्रेति। प्रकृतीः प्रजाः। तिरस्कृत्यान्तर्धाय। अमन्दो बलवान्। मन्दो दुर्भाग्यो मातृपक्षो यस्य। दुर्घटं घटनाशक्यं यत् कूटं कपटं तस्य कोटिरग्रं संख्या वा तस्याः घटना योजना तस्या पाटवं कौशलं तेन प्रकटं सुव्यक्तं यच्छाठ्यं तेन निष्ठुरोऽश्मक एव घटस्तस्य घट्टनो चालयिता आत्मा यस्य। निर्वेशः वेतनम्। 'निर्वेशस्तु पुमान्भोगे वेतने' इति मेदिनी। अप्रीयन्त प्रीताः। अगोचरामविषयाम्।

१ अर्पयित्वा. २ दृष्टिरेव. ३ विधृतपार्श्वम्. ४ यथापुरम्. ५ प्रति०. ६ मन्द.

हर्षावस्थामस्पृशन्मे श्वश्रूः । तदहरेव च यथावदग्राहयन्मञ्जुवादिनी-पाणिपल्लवम् । प्रपन्नायां च यामिन्यां सम्यगेव बिलं प्रत्यपूरयम् । अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानो मदाज्ञां नात्यवर्तत । राजपुत्रस्यार्यापुत्र इति प्रभावहेतुः प्रसिद्धिरासीत् । तं च गुणवत्यहनि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्नीतिं राजकार्याण्यन्वतिष्ठम् । अचिन्तयं च— 'राज्यं नाम शक्तित्रयायत्तम् । शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते । मन्त्रेण हि विनिश्चयोऽर्थानां, प्रभावेण प्रारम्भः, उत्साहेन निर्वहणम् । अतः पञ्चाङ्गमन्त्रमूलो द्विरूपप्रभावस्कन्धश्चतुर्गुणोत्साहविटपो द्विसप्ततिप्रकृतिपत्रः षड्गुणकिसलयः शक्तिसिद्धिपुष्पफलश्च नयवनस्पतिर्नेतुरुपकरोति । स चायमनेकाधिकरणत्वादसहायेन दुरुपजीव्यः । यस्त्वयमार्यकेतुर्नाम मित्रवर्ममन्त्री स कोसलाभिजनत्वात्कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तः तन्मतिमवमत्यैव ध्वस्तो मित्रवर्मा, स चेल्लब्धः पेशलम्' इति । अथ नालीजङ्घं

---

दिव्यांशतां दिवि भवा दिव्यास्तेषामंशस्तस्य भावस्तत्ता ताम् । आर्यापुत्र इति भवानीपुत्र इति । भद्राकृतं कृतकल्याणश्मश्रुम् । उपनाय्योपनयनं कारयित्वा । राज्यमिति । शक्तित्रयायत्तं शक्ति याधीनम् । परस्परानुगृहीता अन्योन्यकृतसहायाः । पञ्चाङ्गमन्त्रमूलः । 'सहायाः साधनोपाया विभागो देशकालयोः । विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमुच्यते ॥' इति कामन्दकः । द्विरूपप्रभावोऽर्थानां पुरुषाणां च समृद्धिः । 'स प्रभावः प्रतापश्च यत्तेजः कोषदण्डजम्' इत्यमरः । स स्कन्धः शाखा यस्य । चतुर्गुणो य उत्साहः स एव विटपाः शाखाः यस्य । द्विसप्ततिप्रकृतयः प्रजाः पत्राणि यस्येति सः । षड्गुणाः 'संधिर्ना विग्रहो यानमासनं द्वैधमाश्रयः इत्युक्ताः ।' ते किसलयानि यस्येति सः । शक्तिसिद्धिपुष्पफलश्च । शक्तित्रयं पुष्पं सिद्धित्रयं च फलमिति । 'षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः ।' इति । नय एव वनस्पतिर्नीतितरुः । अनेकाधिकरणत्वादनेकप्रकारत्वात् । असहायेन सहायहीनेन । दुरुपजीव्यो दुःखेनोपजीवितुं शक्यः । कोसलाभिजनत्वात्कोसलवंशत्वात् । 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ ।' इत्यमरः । मन्त्रिगुणैः प्रधानगुणैः ।

---

१ त्वदाज्ञाभ्र. २ °हेतुप्रसिद्धिः. ३ °जीवः.

रहस्यशिक्षयम्—'तात आर्यमार्यकेतुमेकान्ते ब्रूहि—'को न्वेष मायापुरुषो य इमां राज्यलक्ष्मीमनुभवति। स चायमस्मद्बालो भुजङ्गेनामुना परिगृहीतः। किमुद्गार्येत ग्रस्येत वा' इति। स यद्वदिष्यति तदस्मि बोध्यः' इति। सोऽन्यदैवं मामावेदयत्—'मुहुरुपास्य प्राभृतैः प्रवर्त्य चित्राः कथाः संवाह्य पाणिपादगतिविस्रम्भदत्तक्षणं तमप्राक्षं त्वदुपदिष्टेन नयेन। सोऽप्येवमकथयत्—'भद्र मैवं वादीः। अभिजनस्य शुद्धिदर्शनमसाधारणं बुद्धिनैपुणमतिमानुषं प्राणबलमपरिमाणमौदार्यमत्याश्चर्यमस्त्रकौशलमनल्पं शिल्पज्ञानमनुप्रहार्द्रं चेतस्तेजश्चाप्यविषह्यमभ्यमित्रीणमित्यस्मिन्नेव संनिपातिनो गुणाः, येऽन्यत्रैकैकशोऽपि दुर्लभाः। द्विषतामेष चिरंबिल्वद्रुमः प्रह्वानां तु चन्दनतरुस्तमुद्धृत्य नीतिज्ञमन्यगश्मकामिमं च राजपुत्रमनेन पित्र्ये पदे प्रतिष्ठितमेव विद्धि। नात्र संशयः कार्यः' इति। तच्चापि श्रुत्वा भूयोभूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकरवम्। तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधव्यञ्जनांश्च गूढपुरुषानुदपादयम्। तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायं च प्रकृतिमण्डलमलुब्धतामभिख्यापयन्

अवमत्यावगणय्य। पेशलं सुन्दरम्। ताततेति। न्विति वितर्के। भुजङ्गेन सर्पेण। उद्गार्येत त्यज्येतेत्यर्थः। ग्रस्येत वेति भक्षयिष्यति वा। उपास्य सेवित्वा। प्राभृतैरुपायनैः। संवाह्य। 'संवाहनं पुरस्कारः' इति। विस्रम्भो विश्वासः तेन दत्तः क्षणो यस्य येन वा। भद्र कल्याणेति संबोधनम्। अभिजनस्य कुलस्य। असाधारणम्। महदित्यर्थः। अतिमानुषं मानुषमतिक्रम्य वर्तत इति। अपरिमाणं परिमाणरहितम्। अस्त्रकौशलमस्त्रकुशलता। शिल्पज्ञानं रचनाज्ञानम्। अविषह्यं सोढुमशक्यम्। अभ्यमित्रीणममित्रान् शत्रूनभिमुखमलं गच्छतीति तथा। 'अभ्यमित्राच्छ च' इति चकारात्खः। संनिपातिन एकत्रावस्थिताः। चिरबिल्वद्रुमो विषद्रुमः। प्रह्वानां नम्राणाम्। अनुरागवतामित्यर्थः। पित्र्यं पितुरिदम्। भूयोभूयो वारंवारम्। उपधाभिः। 'उपधा धर्माद्यैर्यत्परीक्षणम्' इत्यमरः। तस्य सखा तत्सखः। 'राजाहःसखिभ्यष्टच्' इति टच्। सत्यं सत्यप्रतिज्ञानम्। शौचं शुद्धिः। गूढपुरुषान्गुप्तसेवकान्। अभिख्यापयन्प्रकटीकुर्वन्। नास्तिकान्नास्तिक्ययुक्तान्। कण्टकान्रिपून्।

१ चिलिचिलि.

धार्मिकत्वमुद्भावयन् नास्तिकान्कदर्थयन् कण्टकान्विशोधयन् अमित्रोपधीरपघ्नन् चातुर्वर्ण्यं च स्वधर्मकर्मसु स्थापयन् अभिसमाहरेयमर्थान् । अर्थमूला हि दण्डविशिष्टकर्मारम्भाः । न चान्यदस्ति पापिष्ठं तत्र दौर्बल्यात् । इत्याकलय्य योगानन्वतिष्ठम् ।

इति श्रीदाण्डिनः कृतौ दशकुमारचरिते विश्रुतचरितं नामाष्टम उच्छ्वासः ।

## उत्तरपीठिका ।

व्यचिन्तयं च—'सर्वोऽप्यतिशूरः सेवकवर्गो मयि तथाऽनुरक्तो यथाऽऽज्ञया जीवितमपि तृणाय मन्यते । राज्यद्वितयसैन्यसामग्र्या च नाहमश्मकेशाद्वसन्तभानोर्न्यूनो नीत्याविष्टश्च । अतो वसन्तभानुं पराजित्य विदर्भाधिपतेरनन्तवर्मणस्तनयं भास्करवर्माणं पित्र्ये पदे स्थापयितुमलमस्मि । 'अयं च राजसूनुर्भवान्या पुत्रत्वेन परिकल्पितः । अहं चास्य साहाय्ये नियुक्तः' इति सर्वत्र किंवदन्ती संजाताऽस्ति । अद्यापि चैतन्मत्कपटकृत्यं न केनापि विदितम्, अत्रस्थाश्च अस्मिन् भास्करवर्माणि राजतनये 'अयमस्मत्स्वामिनोऽनन्तवर्मणः पुत्रो भवान्याः प्रसादादेतद्राज्यमवाप्स्यति', इति बद्धाशा वर्तन्ते । अश्मकेशसैन्यं च राजसूनोर्भवानीसाहाय्यं वि-

उपधीः कूटप्रयोगान् । चातुर्वर्ण्यं चतुर्णां वर्णानां ब्राह्मणादीनां समाहारश्चातुर्वर्ण्यम् । अर्थमूला अर्थाधीनाः । दौर्बल्याद् दुर्बलस्य भावस्तेन । आकलय्य । मनसि कृत्वेत्यर्थः । योगान्विविधोपायान् । 'योगो युक्तौ च संगत्यां कार्मणालभ्यलाभयोः । देहदार्ढ्ये प्रयोगे च विष्कम्भादौ तथाऽऽत्मनि ॥ उपाये भेषजे विद्भिर्दृष्टिसंनहने धने । विश्रब्धघातिनि ध्याने युक्तिन्याये च योजने ॥' इति महीपः ।

**इति श्रीमत्कवीन्द्राचार्यसरस्वतीकृतायां दशकुमारचरितव्याख्यायां पदचन्द्रिकाभिधायां विश्रुतचरितं नामाष्टम उच्छ्वासः ।**

तृणाय मन्यते विगणयति । स्वासुभिरपि मत्प्रियं कर्तुमिच्छतीत्यर्थः । राज्यद्वितयस्य मित्रवर्मप्रचण्डवर्मराज्ययोः । नीत्याविष्टो नीत्यनुसंधानपरः । किंवदन्ती

१ उपघ्नन्.

दित्वा 'दैव्याः शक्तेः पुरो न बलवती मानवी शक्तिः' इत्यस्माभिर्विग्रहे चलचित्तमिवोपलक्ष्यते। अत्रत्याश्च मौलाः प्रकृतयः प्रथममेव राजसुताभ्युदयाभिलाषिण्य इदानीं च पुनर्मया दानमानाद्यावर्जनेन विश्वासिता विशेषेण राजपुत्रमेवाभिकाङ्क्षन्ति । अश्मकेन्द्रान्तरङ्गाश्च भृत्या मदीयैर्विश्वास्यतमैः पुरुषैः प्रभूतां प्रीतिमुत्पाद्य मदाज्ञया रहसीत्युपजप्ताः—'यूयमस्मान्मित्राणि, अतोऽस्माकं शुभोदर्कं वचो वाच्यमेव। अत्र भवान्या राजसूनोः साहाय्यकाय विश्रुतं विश्रुतं नियुज्य तद्धस्तेनाश्मकेन्द्रस्य वसन्तभानोस्तत्पक्षे स्थित्वा ये चानेन सह योत्स्यन्ते तेषामप्यन्तकातिथिभवनम् । यावदश्मकेन्द्रेण स जन्यवृत्तिर्न जातस्तावदेनमनन्तवर्मतनयं भास्करवर्माणमनुसरिष्यथ । स वीतभयो भूयसीं प्रवृत्तिमासाद्य सपरिजनः सुखेन निवत्स्यति न चेद्भवानीत्रिशूलवश्यो भविष्यति। भवान्या च ममेत्याज्ञप्तमस्ति यदेकवारं सर्वेषां कथय । अतोऽस्माकं युष्माभिः सह मैत्रीमवबुध्यास्मन्मुखेन सर्वेभ्यो वार्तम्[1] ।' इत्याकर्ण्य तेऽश्मकेन्द्रान्तरङ्गभृत्या राजसूनोर्भवानीवरं विदित्वा पूर्वमेव भिन्नमनस आसन् । विशेषतश्च मदीयमिति वचनं श्रुत्वा ते सर्वेऽपि मद्वशे समभवन् । एतं सर्वमपि वृत्तान्तमवबुध्याश्मकेशेन व्यचिन्ति—'यद्राजसूनोर्मौलाः प्रजास्ताः सर्वा अप्येनमेव प्रभुमभिलषन्ति । मदीयश्च बाह्य आभ्यन्तरो भृत्यवर्गो भिन्नमना इव लक्ष्यते । एवं यद्यहं क्षमामवलम्ब्य गृह एव स्थास्यामि तत उत्पन्नोपजापं स्वराज्यमपि परित्रातुं न शक्ष्यामि । अतो यावता भिन्नचित्तेन मदवबोधकं प्रकटयता

जनश्रुतिः । मौला मूलाद् विदर्भनगरादित्यर्थः आगताः । आवर्जनेन दानेनाभिमुखीकरणेन वा । अन्तरङ्गा विश्वासपात्राणि । उपजप्ताः कृतोपजापाः । शुभोदर्कं कल्याणोत्तरफलम् । विश्रुतं दत्तम् । विश्रुतं तदाख्यम् । जन्यवृत्तिः युद्धव्यापारोद्यतः । स इति—युष्माकं मध्ये इति शेषः । प्रवृत्तिं गौरवं संपत्प्रवाहं वा । क्षमा उपेक्षा । उत्पन्नोपजापं जातभेदम् । मदवबोधकं मद्युद्धनिश्चयावबोधकम् ।

१ गदितव्य.

मद्बलेन सह मिथोवचनं न संजातं तावत्तैव तन साकं विग्रहं रचयामि । इत्येवं विहिते सोऽवश्यं मदग्रे क्षणमवस्थास्यति ' इति निश्चित्यान्यायेन परराज्यक्रमणपातकप्रेरितः ससैन्यो मृत्युमुखमिवास्मत्सैन्यमभ्ययात् । तमभ्यायान्तं विदित्वा राजपुत्रः पुरोऽभवत् । अतोऽश्मकेन्द्रमेव तुरगाधिरूढो यान्तमभ्यसरम् । तावत्सर्वा एव तत्सेना 'यदयमेतावतोऽपरिमितस्यास्मत्सैन्यस्योपर्येक एवाभ्यागच्छति तत्र भवानीवर एवासाधारणं कारणं, नान्यत् ' इति निश्चित्यालेख्यलिखितेवावस्थिता । ततो मयाऽभिगम्य संगराय समाहूतो वसन्तभानुः समेत्य मामसिप्रहारेण दृढमभ्यहन् । अहं च शिक्षाविशेषविफलिततदसिप्रहारः प्रतिप्रहारेण तं प्रहृत्यावकृत्तमश्मकेन्द्रशिरोऽवनौ विनिपात्य तत्सैनिकानवदम्—' अतः परमपि ये युयुत्सवो भवन्ति ते समेत्य मया युध्यन्ताम् । न चेद्राजतनयचरणप्रणामं विधाय तदीयाः सन्तः स्वस्ववृत्त्युपभोगपूर्वकं निजान्निजानधिकारान्निःशङ्कं परिपालयन्तः सुखेनावतिष्ठन्तु ' इति । मद्वचनश्रवणानन्तरं सर्वेऽप्यश्मकेन्द्रसेवकाः स्वस्ववाहनात्सहसाऽवतीर्य राजसूनुमानम्य तद्वशवर्तिनः समभवन् । ततोऽहं तदश्मकेन्द्रराज्यं राजसूनुसाद्विधाय तद्रक्षणार्थं मौलान्स्वानधिकारिणो नियुज्यात्मीभूतेनाश्मकेन्द्रसैन्येन च साकं विदर्भानभ्येत्य राजधान्यां तं राजतनयं भास्करवर्माणमभिषिच्य पित्र्ये पदे न्यवेशयम् ।

एकदा च मात्रा वसुमत्या सहावस्थितं तं राजानं व्यजिज्ञपम्—' मयैकस्य कार्यस्यारम्भश्चिकीर्षितोऽस्ति । स यावन्न सिध्यति तावन्मया न कुत्राप्येकत्रावस्थातुं शक्यम् । अत इयं मद्भार्या त्वद्भगिनी मञ्जुवादिनी कियन्त्यहानि युष्मदन्तिकमेव तिष्ठतु । अहं च यावदिष्टजनोपलम्भं कियन्तमप्यनेहसं भुवं

क्षणं न महान्तं कालम् । आलेख्यलिखिता चित्रन्यस्ता । शिक्षा अस्त्रकौशलम् । विफलितः प्रभ्रष्टलक्ष्यः कृतः । तदीयास्तदनुयायिनः । वृत्तिर्जीवनसाधनम् । तद्वशवर्तिनस्तदिच्छानुवर्तिनः । राजसूनुसात्साकल्येन तदधीनम् । चिकीर्षितः कर्तुमिष्टः । उपलम्भः प्राप्तिः । अनेहसं कालम् । ' कालो दिष्टोऽप्यनेहाऽपि' इत्यमरः ।

विश्रम्य तमासाद्य पुनरत्र समेष्यामि।' इत्याकर्ण्य मात्राऽनुमतेन राज्ञाऽहमगादि—'यदेतदस्माकमेतद्राज्योपलम्भलक्षणस्यैतावतोऽभ्युदयस्यासाधारणो हेतुर्भवानेव। भवन्तं विना क्षणमप्यस्माभिरियं राज्यधूर्न निर्वाह्या। अतः किमेवं वक्ति भवान्।' इत्याकर्ण्य मया प्रत्यवादि—'युष्माभिरयं चिन्तालवोऽपि न चित्ते चिन्तनीयः। युष्मद्गृहे यः सचिवरत्नमार्यकेतुरस्ति स ईदृग्विधानामनेकेषां राज्यानां धुरमुद्वोढुं शक्तः। ततस्तं तत्र नियुज्याहं गमिष्यामि' इत्यादिवचनसंदोहैः प्रलोभितोऽपि सजननीको नृपोऽनेकैराग्रहैर्मां कियन्तमपि कालं प्रयाणोपक्रमान्न्यवर्तयत्। उत्कलाधिपतेः प्रचण्डवर्मणो राज्यं मह्यं प्रादात्। अहं च तद्राज्यमात्मसात्कृत्वा राजानमामन्त्र्य यावत्त्वदन्वेषणाय प्रयाणोपक्रमं करोमि तावदेवाङ्गनाथेन सिंहवर्मणा स्वसाहाय्यायाकारितोऽत्र समागतः पूर्वपुण्यविपाकात्स्वामिना समगंसि।'

ततस्ते तत्र संगता अपहारवर्मोपहारवर्मार्थपालप्रमतिमित्रगुप्तमन्त्रगुप्तविश्रुताः कुमाराः पाटलिपुरे यौवराज्यमुपभुञ्जानं समाकारणे पूर्वकृतसंकेतं वामलोचनया भार्यया सह कुमारं सोमदत्तं सेवकैरानाय्य सराजवाहनाः संभूयावस्थिता मिथः सप्रमोदसंवलिताः कथा यावद्विदधति तावत्पुष्पपुराद्राज्ञो राजहंसस्याज्ञापत्रमादाय समागता राजपुरुषाः प्रणम्य राजवाहनं व्यजिज्ञपन्—'स्वामिन् एतज्जनकस्य राजहंसस्याज्ञापत्रं गृह्यताम्' इत्याकर्ण्य समुत्थाय भूयोभूयः सादरं प्रणम्य सदसि तदाज्ञापत्रमग्रहीत्। शिरसि चाधाय तत उत्तार्योत्कील्य राजा राजवाहनः सर्वेषां शृण्वतामेवावाचयत्—'स्वस्ति श्रीः पुष्पपुरराजधान्याः श्रीराजहंसभूपतिश्चम्पानगरीमधिवसतो राजवाहनप्रमुखान्कुमारानाशास्याज्ञापत्रं प्रेषयति। यथा यूयमितो मामामन्त्र्य प्रणम्य प्रस्थिताः

राज्यस्य धूः राज्यधुरा। राज्यधूरिति प्रयोगश्चिन्त्यः। संदोहः समूहः। प्रयाणोपक्रमाद्यात्रारम्भात्। आकारित आहूतः। स्वामिना त्वया राजवाहनेन। समाकारणे आह्वाने। संवलिताः संमिलिताः। उत्कील्योद्घाट्य। आशास्याशीर्भिरभिनन्द्य।

१ परिपाकात्.

पथि कस्मिंश्चिद्वनोद्देश उपशिवालयं स्कन्धावारमवस्थाप्य स्थिताः। तत्र राजवाहनं शिवपूजार्थं निशि शिवालये स्थितं प्रातरनुपलभ्यावशिष्टाः सर्वेऽपि कुमाराः 'सहैव राजवाहनेन राजहंसं प्रणंस्यामो न चेत्प्राणांस्त्यक्ष्यामः' इति प्रतिज्ञाय सैन्यं परावर्त्य राजवाहनमन्वेष्टुं पृथक्प्रस्थिताः। एतं भवद्वृत्तान्तं ततः प्रत्यावृत्तानां सैनिकानां मुखादाकर्ण्यासह्यदुःखोदन्वति मग्नमनसावुभावहं युष्मज्जननी च 'वामदेवाश्रमं गत्वैतद्वृत्तान्तं तद्विदितं विधाय प्राणपरित्यागं कुर्वः' इति निश्चित्य तदाश्रममुपगतौ तं मुनिं प्रणम्य यावत्स्थितौ तावदेव तेन त्रिकालवेदिना मुनिना विदितमेवास्मन्मनीषितम्। निश्चयमवबुद्ध्य प्रावाचि—'राजन् प्रथममेवैतत्सर्वं युष्मन्मनीषितं विज्ञानबलादज्ञायि। यदेते त्वत्कुमारा राजवाहननिमित्ते कियन्तमनेहसमापदमासाद्य भाग्योदयादसाधारणेन विक्रमेण विहितदिग्विजयाः प्रभूतानि राज्यान्युपलभ्य षोडशाब्दान्ते विजयिनं राजवाहनं पुरस्कृत्य प्रत्येत्य तव वसुमत्याश्च पादानभिवाद्य भवदाज्ञाविधायिनो भविष्यन्ति। अतस्तन्निमित्तं किमपि साहसं न विधेयम्' इति। तदाकर्ण्य तत्प्रत्ययाद्धैर्यमवलम्ब्याद्यप्रभृत्यहं देवी च प्राणानधारयाव। इदानीमासन्नवर्तिन्यवधौ वामदेवाश्रमं गत्वा विज्ञप्तिः कृता—'स्वामिन् त्वदुक्तावधिः पूर्णप्रायो भवति। तत्प्रवृत्तिस्त्वयाद्यापि विज्ञायते' इति। श्रुत्वा मुनिरवदत्—'राजन् राजवाहनप्रमुखाः सर्वेऽपि कुमारा अनेकान्दुर्जयाञ्शत्रून्विजित्य दिग्विजयं विधाय भूवलयं वशीकृत्य चम्पायामेकत्र स्थिताः। तवाज्ञापत्रमादाय तदानयनाय प्रेष्यन्ता शीघ्रमेव सेवकाः।' इति मुनिवचनमाकर्ण्य भवदाकारणायाज्ञापत्रं

स्कन्धावारं सेनाम्। दुःखोदन्वति दुःखसागरे। त्रिकालवेदिना भूतभविष्यद्वर्तमानज्ञेन। विज्ञानं योगबलजन्यं ज्ञानम्। 'योगबलात्' इति पाठे योगश्चित्तैकाग्र्यरूपः समाधिः। प्रत्येत्य प्रत्यागत्य। साहसं प्राणपरित्यागादिरूपम्। प्रत्ययाद्विश्वासात्। अवधिः राजपुत्रनिवर्तनकालः। प्रवृत्तिर्वृत्तान्तः।

१ योगबलात्.

प्रेषितमस्ति। अतः परं चेत्क्षणमपि यूयं विलम्बं विधास्यथ ततो मां वसुमतीं च मातरं कथावशेषावेव श्रोष्यथेति ज्ञात्वा पानीयमपि पथि भूत्वा पेयम्।' इत्येवं पितुराज्ञापत्रं मूर्ध्नि विधृत्य गच्छेमेति निश्चयं चक्रुः। अथ वशीकृतराज्यरक्षापर्याप्तानि सैन्यानि समर्थतरान्पुरुषानाप्तान्स्थाने स्थाने नियुज्य कियता सैन्येन मार्गरक्षां विधाय पूर्ववैरिणं मालवेशं मानसारं पराजित्य तदपि राज्यं वशीकृत्य पुष्पपुरे राज्ञो राजहंसस्य देव्या वसुमत्याश्च पादान्नमस्यामः। एवं निश्चित्य स्वस्वभार्यासंयुताः परिमितेन सैन्येन मालवेशं प्रति प्रस्थिताः। प्राप्य चोज्जयिनीं तदैव सहायभूतैस्तैः कुमारैः परिवृतेन राजवाहनेनातिबलवानपि मालवेशो मानसारः क्षणेन पराजिग्ये निहतश्च। ततस्तद्दुहितरमवन्तिसुदरीं समादाय चण्डवर्मणा तन्मन्त्रिणा पूर्वं कारागृहे रक्षितं पुष्पोद्भवं कुमारं सकुटुम्बं तत उन्मोचितं सह नीत्वा मालवेन्द्रराज्यं वशीकृत्य तद्रक्षणाय कांश्चित्सैन्यसहितान्मन्त्रिणो नियुज्यावशिष्टपरिमितसैन्यसहितास्ते कुमाराः पुष्पपुरं समेत्य राजवाहनं पुरस्कृत्य तस्य राजहंसस्य मातुर्वसुमत्याश्च चरणानाभिवान्दितवन्तः। तौ च पुत्रसमागमं प्राप्य परमानन्दमधिगतौ। ततो राज्ञो वसुमत्याश्च देव्याः समक्षं वामदेवो राजवाहनप्रमुखानां दशानामपि कुमाराणामभिलाषं विज्ञाय तानाज्ञापयत्—' भवन्तः सर्वेऽप्येकवारं गत्वा स्वानि राज्यानि न्यायेन परिपालयन्तु। पुनर्यदेच्छा भवति तदा पित्रोश्चरणाभिवन्दनायागन्तव्यम्' इति। ततस्ते सर्वेऽपि कुमारास्तन्मुनिवचनं शिरस्याधाय तं प्रणम्य पितरौ च, गत्वा दिग्विजयं विधाय, प्रत्यागमनान्तं स्वस्ववृत्तं पृथक्पृथङ् मुनिसमक्षं न्यवेदयन्। पितरौ च कुमाराणां निजपराक्रमावबोधकान्यतिदुर्घटानि चरितान्याकर्ण्य परमानन्दमाप्नुताम्। ततो राजा मुनिं सविनयं व्यजिज्ञपत्—

---

कथावशेषौ मृतावित्यर्थः। पानीयमिति। आज्ञापत्रवाचनविरामे एव प्रयाणं कार्यमित्यर्थः। आप्तान् हितैषिणः। एकवारमेकदैव। गत्वेति स्वगमनादारभ्येत्यर्थः। प्रत्यागमनमन्तो यस्य तत्। प्रत्यागमनं यावदित्यर्थः। अवबोधकानि गमकानि।

'भगवन् तव प्रसादादस्माभिर्मनुजमनोरथाधिकमवाङ्मनसगोचरं सुखमधिगतम्। अतः परं मम स्वामिचरणसंनिधौ वानप्रस्थाश्रममधिगत्यात्मसाधनमेव विधातुमुचितम्। अतः पुष्पपुरराज्ये मानसारराज्ये च राजवाहनमभिषिच्यावशिष्टानि राज्यानि नवभ्यः कुमारेभ्यो यथोदितं संप्रदाय ते कुमारा राजवाहनाज्ञाविधायिनस्तदेकमत्या वर्तमानाश्चतुरुदधिमेखलां वसुंधरां समुद्धृत्य कण्टकानुपभुञ्जन्ति तथा विधेयं स्वामिना' इति। तेषां तत्पितुर्वानप्रस्थाश्रमग्रहणोपक्रमनिषेधे भूयांसमाग्रहं विलोक्य मुनिस्तानवदत्—'भोः कुमारकाः अयं युष्मज्जनक एतद्वयःसमुचिते पथि वर्तमानः कायक्लेशं विनैव मदाश्रमस्थो वानप्रस्थाश्रमाश्रयणं सर्वथा भवद्भिर्न निवारणीयः। अत्र स्थितस्त्वयं भगवद्भक्तिमुपलप्स्यते। भवन्तश्च पितृसंनिधौ न सुखमवाप्स्यन्ति।' इति महर्षेराज्ञामधिगम्य ते पितुर्वानप्रस्थाश्रमाधिगमप्रतिषेधाग्रहमत्यजन्। राजवाहनं पुष्पपुरेऽवस्थाप्य तदनुज्ञया सर्वेऽपि परिजनाः स्वानि स्वानि राज्यानि प्रतिपाल्य स्वेच्छया पित्रोः समीपे गतागतमकुर्वन्। एवमवस्थितास्ते राजवाहनप्रमुखाः सर्वेऽपि कुमारा राजवाहनाज्ञया सर्वमपि वसुधावलयं न्यायेन परिपालयन्तः परस्परमैकमत्येन वर्तमानाः पुरंदरप्रभृतिभिरप्यतिदुर्लभानि राज्यसुखान्यन्वभूवन्।

इति श्रीदण्डिनः कृतौ दशकुमारचरित उत्तरपीठिका।

## समाप्तं दशकुमारचरितम्

अवाङ्मनसगोचरं वाङ्मनसयोर्व्यापारातिक्रान्तम्। वाङ्मनसे इति 'अचतुर–'इत्यादिना अजन्तो निपातः। वानप्रस्थेत्यत्र याज्ञवल्क्यः—'सुतविन्यस्तपत्नीकस्तया वाऽनुगतो वनम्। वानप्रस्थो ब्रह्मचारी साग्निः सोपासनो व्रजेत्॥' इति। आत्मसाधनं परमात्मचिन्तनेन मोक्षसाधनम्। यथोदितं यथाभ्युदयं यथोक्तं वा। पुरंदरप्रभृतिभिरिन्द्रादिदेवैः।

इति समाप्तोत्तरपीठिकाव्याख्या।

# TRANSLATION
## OF THE
# DAS'AKUMA'RACHARITA.

## PÚRVAPÎṬHIKÂ.

### UCHCHHVA'SA I.

May the staff-like foot of Trivikrama (Vishṇu) grant you eternal bliss!—the foot which is the pole of the umbrella in the form of the Mundane egg, which is the long stalk of the lotus, the residence (*or*, birth-place) of Brahmâ, which is as it were the main-mast of the ship of the earth, which serves as the flag-staff of the bannerlike heavenly river gliding along (the sky), which is the axle of the wheel in the form of the (revolving) firmament of stars, which is (as it were) the pillar that proclaims his (*i. e.*, Vishṇu's) victory over the three worlds, and which is the very rod of Death to the enemies of gods (*i e.* the demons).

There was a city, Pushpapurî by name, which, serving as a touchstone to all other towns (*i.e.* being the best model of a city), proclaimed the greatness of the ocean by the various articles such as collections of gems and others spread out at all times among countless commodities for sale, and which (consequently) had become an ornament to the country of the Magadhas. It was ruled by a king named Râjahaṃsa, who possessed a beauty that was as attractive and faultless as that of the highly proud Cupid. His mighty, long arm served him like the Mandára mountain, in churning the ocean of the army of the host of all his enemies, terrific on account of its sharks in the form of the horses and elephants, and with heaving waves in the shape of the array of brave warriors. He was rendered fragrant (*i.e.* illustrious) all round by very great fame, which was repeatedly sung by the youthful courtesans of heaven diverting themselves in the groves adjoining the suburbs of the capital of Indra, and which filled all the spaces of the quarters, being white (spotless) like the autumnal moon, the *Kunda* flower,

camphor, snow, a pearl-necklace, the stalk of a (white) lotus, the swan, the Airávata, water, milk, the loud and boisterous laughter of Śiva, the Kailása mountain and the *Kás'a* flower. Fortunate in the enjoyment of the beauty of the lovely damsel in the form of the earth with the girdle in the form of the border of the ocean which contains gems as large and beautiful as those on the peaks of the mountain Meru, he patronised, with rich gifts in sacrifices constantly going on, thousands of learned and eminent Bràhmaṇas refulgent with the fund of learning they possessed. He always equalled the sun, in the middle of the sky, by his valour that (constantly) caused torment to his foes. His queen was Vasumaṭî, gifted with talent, and the foremost (*lit.* crest-jewel) of the whole class of graceful women. Cupid (*lit.* the fish-bannered god), having been reduced to ashes by S'iva (*lit.* god with an eye in his forehead) by means of his angry look, his accompaniments, thinking that a lady of exquisite beauty was the proper ṛesort for them (being unassailable), became through fear her various limbs. Thus, the row of bees (on his bow-string) assumed the form of her mass of hair (thick tresses); the moon, the source of the passion of love, became her face that surpassed a lotus in beauty; the fish with its mate, that acted like his banner of victory, became her two eyes; the Malaya-breeze, the chief of all his warriors (for the conquest of the whole of the human world), became her breath; the tender sprout, the saw that harrows the hearts of travellers, her red (lit. *bimba*-like) lower lip; his victorious conch, her tapering and beautiful neck; his two full jars became her breasts, looking like two Chakravâka birds; the two soft lotus-stalks of incomparable tenderness, that formed his bow-string, her two arms; the slightly-blown lotus-bud that served as his sportive ear-ornament became her navel that resembled an eddy of the Ganges; (the wheels of) his victorious chariot, that keeps off the attainment of desires of even the ascetics, became her exceedingly plump hips; the two plantain-trees which were like his pillars of victory, were the very essence of beauty, and had hindered the practice (of penance) of sages, became her two thighs; the lotus with thousand petals that formed his umbrella, became her two feet; and the flowers that served as his missiles, the other limbs. Like the earth, borne on his hoods by Śesha, that Vasumati, fondled with endless enjoyments, was enjoyed so as to taste all

sorts of pleasures by the king of the Magadhas, residing in Pushpapura, which surpassed (in grandeur) even the city of the immortals (*i.e.* Amarâvatî, the capital of Indra).

That king had three hereditary ministers, named Dharmapâla, Padmodbhava and Sitavarman, who were ever at his service ( *lit.* very obedient ), and who, on account of their deep political insight, quite easily disposed of matters that would have demanded serious attention even on the part of Bṛihaspati. Of these, Sitavarman had two sons, Sumati and Satyavarman; Dharmapâla had three, Sumantra, Sumitra and Kâmapâla; and Padmodbhava had two, Suśruta and Ratnodbhava. Of these, Satyavarman, who was pious, realizing the worthlessness of worldly life, went to foreign lands, desiring to visit holy places. Kâmapâla, who was ill-trained and attached to parasites, actors and courtesans, wandered over the earth, disregarding the advice of his father and his elder brother. Ratnodbhava, too, being an expert merchant, crossed (carried on trade by) the sea. The other sons of the ministers when their fathers were dead (*lit.*, had become the guests of the city of Indra), succeeded to their offices (*lit.* remained doing the duties as before).

Once, the lord of the Magadhas, who had set his sharp arrows on the row of the heads (*or*, crowns) of princes in the countless battles he fought with them on account of his skill in the use of great weapons of various kinds, marched out in great rage, thirsting for fight, and accompanied by the fourfold army, that sorely taxed the might of the hoods of Śesha by the weight of the earth which sank under its burden, against the King of Mâlwâ, Mânasâra, who was the worker of havoc in every fresh battle and whose pride and power were at their height;—he (Râjahaṃsa), who, by the deep sound of his kettle-drums which easily quelled the ocean's pride of its loud roar, made the guardian-elephants of the quarters stagger, as they were seized by an overpowering terror, being forced to hear a loud noise. The king of Mâlwâ also, who was the spirit of war incarnate, marched forth to meet him with a determined purpose, accompanied by many arrays of war-elephants. Then there was a close fight between them, wherein warriors struck one another with weapons and with hands, wherein the army was slaughtered on both the sides, and wherein all space in the quarters was deafened by

the sound of drums that drowned all other sounds in the aerial region, beneath a cloud of dust thickly spread over the surface of the sky, which (dust) arose from the earth as it was struck up by the hoofs of the horses of the chariots ( *or*, of the horses and by the chariots ), the root of which was washed away by the streams of rut oozing from the temples of the arrays of elephants, and which looked as if it were a cloth-*Mandap*, screening the number of Apsarasas that had come ( in the sky ) for choosing new lovers for themselves ( from among the fallen warriors ). In it Rájahaṃsa captured alive the king of Mâlwâ, whose army was completely destroyed; but he re-instated him on his throne, out of mercy.

Râjahaṃsa now ruled the earth engirdled by the oceans, without a rival. As he was not blessed with progeny, he devoted all his time to the worship of Nárâyaṇa, the one Creator of the universe. Now one day his chief queen saw at daybreak a happy dream, saying to her: "Get a fruit of the desire-fulfilling creeper through (*or*, along with) your lord." She then bore a fœtus which was like the flower (*i.e.* productive of the fruit) of the desires of her lord. Thereupon the King, too, who excelled even Indra in riches, having invited all his princely friends, celebrated with great splendour befitting his riches and desires, the *Sîmanta* festival of his queen.

Once, while seated on the throne in the audience-hall, with his well-wishing (*or*, trusty) friends, ministers and family-priest, the King, who lacked not merits, was humbly informed by the door-keeper with his folded hands touching his forehead, that an ascetic, worthy of being worshipped with special preparation by His Majesty, and desirous of being admitted to His Majesty's presence, had arrived at the door of the court. Permitted by him (the king), he conducted the ascetic into the royal presence. The King, looking at him as he was coming, recognized him well to be one of his spies in disguise, dismissed all his followers, and, accompanied by his ministers, asked him with a smile as he humbly bowed before him—"Well, ascetic, do you communicate to us the information gathered by you while wandering over the country in a disguise." The spy, who was able to wander over the world, replied with folded

hands :—"Your Majesty, in profound obedience to Your royal command, putting on this blameless garb of a hermit (*i e.*, which leaves no room for suspicion) I entered the capital of the King of Mâlwá; and living there with the utmost secrecy, I collected all the information with regard to the King and returned here. Having suffered a defeat at the hands of Your Majesty in a battle in which all his warriors were killed (*lit.*, which proved an obstacle in the way of the long life of his warriors), proud Mánasára, with his heart touched by (*i.e.* filled with) shame and full of cruel thoughts (of vengeance), propitiated the imperishable Maheśvara, the lord of Kâlî, abiding in the shrine of Mahâkâla. Having obtained from the deity, pleased by the power (fervour) of his penance, a formidable mace having power to slay one mighty enemy, he, looking upon himself as a matchless warrior, is preparing in the height of his pride to march against Your Majesty. Now Your Majesty will decide what further to do." When the ministers heard this, they determined what was proper for the King to do. and said to him—"Lord, the enemy is coming with the God (Śiva) for his helper, against whom there is no remedy. It is not, therefore, advisable on our part to fight at this time; the fort should be at once resorted to." Though thus repeatedly requested by them, the King, distinguished by not a little pride. disdained their counsel as unworthy of being acted upon, and determined to offer a counter-fight. Mânasára, powerful on account of the weapon given by God Śiva, took the lead of the warriors who were bent on fighting, and. equipped with all the necessaries (of war), easily advanced into Magadha. Informed of this, the ministers prevailed upon the King, the lord of Magadha, with great difficulty, and lodged the women of the palace, guarded by the hereditary force, in a place impregnable to the enemies, in the heart of the Vindhya forest. Râjahaṃsa marched out with great speed with a select and intrepid force, and opposed his enemy, exasperated (on that account). In the battle, which took place between these two warriors who had formed enmity towards each other, and which filled with wonder the heavenly beings that had come to observe the fight out of curiosity, the King of Málwà, desirous of victory, hurled the mace previously given to him by Śiva, against the King of the Magadhas, who had equalled the lord of immortals (*viz.* Indra) in battles which

were graced by his steady use of various weapons. Though splintered by a number of sharp arrows, the mace, through the infallibility of the decree of Śiva, killed the charioteer, and left the king senseless in the chariot; the horses, that were unwounded, being freed from the control of reins, ran off with the chariot, fortunately into the very thickets that had given shelter to that King's household. The King of Mâlwá, now crowned with success, overran the great kingdom of the Magadhas and took his own residence in Pushpapura.

The ministers of Râjahaṃsa exhausted with wounds (*or*, strokes) from numerous weapons, but fortunately not dead, having revived owing to the breezes at the close of the night, somehow took heart and sought for the King on all sides; but not finding him, they approached the Queen in a miserable plight. Having heard from them of the destruction of the whole army and the disappearance of the King, Vasumatî, dejected and plunged in the ocean of sorrow, determined to follow her lord (in death); but the ministers and the family-priest dissuaded her from her purpose, with soothing words, saying—"O blessed Queen, the King's death is uncertain; moreover, there resides in your womb a beautiful and delicate prince, who, as predicted by the astrologers, is to uproot the enemy who is puffed up with pride, and is to be the supreme lord of the whole earth. So it will be improper on your part to put an end to your life now." Then at this, though uneasy at heart, she stood silent for a while. At midnight, when the eyes of the attendants were sealed with sleep, the Queen, unable to bear the excessive grief (*lit.*, to get over the ocean of grief), being left alone, slowly and noiselessly crossed the place where the camp lay and came to the Vaṭa-tree hard by, where, the chariot being entangled, the horses of the King, completely exhausted on account of the journey and fatigued by running while drawing the chariot and unable to proceed further, had halted before. Having prepared a noose with the half of her upper-garment, as a means of death, tied to the branch of the tree, which was as it were the line of death, that beautiful lady, who was desirous of dying and who by the sweetness of her voice surpassed (*lit.* rendered unmelodious the note of) the cuckoo, exclaimed mournfully, with her throat choked with tears—"Lord of Earth, who

by your beauty equalled Cupid, may you yourself be my husband in my next life also." The King of Magadha, who had fainted owing to the loss of profuse blood, but who had just gained consciousness by the touch of the flood of the rays of the moon, heard these words, and making quite sure that they were of his queen, gently called out to her with sweet words. She, with her lotus-like face blooming with the overwhelming joy of her heart, hastily came to him, and devouring him with her winkless eyes that had fasted as it were, loudly called out to her ministers and family-priest and showed him to them. The ministers praised the greatness of luck, touched the lotus-like feet of the King with their foreheads, and said—"Lord, the horses, when the charioter was killed, brought the chariot, with great speed, to the wood." The King related to them that in the battle wherein the bulk of his army was killed, he fainted, being struck with the mace which the relentless Mánasára, who had propitiated Śiva, had discharged at him, and that it was but just then that he was brought back to his senses in that forest by the cool breezes of the early morning. Then the ministers observed a festival, and in good time, when fate showed itself to be favourable, brought the king to the camp, took out all the tips of arrows (from his body), and quickly made him, whose lotus-like face (now) bloomed, free from his wounds. And now at the desire of the ministers, the wise queen Vasumatí consoled, in sweet words, the King, whose valour was set aside by adverse fate, who was looking extremely miserable and whose agony was excessive. She said—"Lord, since Your Majesty, the most illustrious and greatest of the whole host of kings, has now to reside in the midst of this Vindhya forest, prosperity that shines, being comparable with water-bubbles, rises and disappears suddenly like a flash of lightning; all affairs must, therefore, be regarded as depending on destiny. Moreover, formerly, Hariśchandra, Rámachandra and other innumerable kings, who with their riches equalled Indra, after fully experiencing adversity as a consequence of ill-luck, enjoyed their kingdoms afterwards for a long time. Similar will be the case of Your Majesty. Now, being free from mental affliction, you should pass some time being reconciled to fate (*or*, with the consolation that your misery is due to providence only)."

Then Ràjahamsa, accompanied by the whole of his army, went to see a holy sage, named Vámadeva, resplendent with penance and the means of gaining his object. He bowed to him, and being hospitably received by him, he told him everything. Having lived for some time in his hermitage, which removed all his fatigue, Rájahamsa, who was an ornament to the lunar race, and who was laconic in his speech, desirous of regaining his kingdom, said to the sage—"Revered Sir, Mánasára, having defeated me with the power of luck that was excessively great, has now been enjoying the kingdom which is rightfully my own. I have now approached your reverence devoted to asceticism, with the thought that I, too, like him, shall be able to uproot my enemy through your all-saving compassion, by practising severe religious austerities." Then the omniscient sage replied—"Friend, there is no necessity for practising penance which causes emaciation of the body. The prince, that lies in the womb of Vasumatî, will assuredly turn out to be the exterminator of all your foes; remain quiet for some time." These words were confirmed in their truth at that very time by a voice in the air. The King, too, waited (*i. e.*, remained inactive), fully relying upon the words of the sage.

Then after the completion of the period of pregnancy, Vasumatî, at an auspicious moment, gave birth to a son endowed with all the auspicious signs. Under the guidance of the family-priest, who equalled even Brahmá by his spiritual effulgence, the King who knew what was be done bestowed the name Rájavâhana on his delicate son who looked bright on occount of his birth-rites being performed, and with child's ornaments. At the same time there were born sons of great beauty, having the lustre of the rising moon, and endowed with long life, to the King's four ministers. The son of Sumati was named Pramati; of Sumantra, Mitragupta; of Sumitra, Mantragupta; and of Susruta, Visruta. Rájavâhana grew up, together with his friends, the sons of the ministers, enjoying the sports of childhood.

One day a hermit affectionately delivered a young boy, that gave delight to the eyes and was decked with the auspicious marks of a prince, to the King, and said,—"O King. being out in the forest one day to bring the *Kus'a* grass

and holy sticks, I saw a young woman, who looked helpless and obviously miserable, and who was shedding tears. Being asked by me why she was weeping in that dreary forest, she wiped off her tears with her fingers and replied with sobs—"Revered sage, while Prahâravarman, the king of Mithila', who had conquered (surpassed) even Cupid by his beauty and who by his fame had occupied the assembly of gods, was staying for some time with his queen and sons in Pushpapura, for the celebrations of the *Sîmanta* festival of the queen of his friend, the King of Magadha, the King of Mâlwâ, who had propitiated Śiva with his devotion, marched upon the King of Magadha. In the great battle that ensued between these two great warriors, Prahâravarman, the king of Mithilâ, who was helping his friend, was captured, his army being destroyed, by the victorious enemy, but was released by him, owing to his own religious merit and out of mercy. He returned to his own capital with that portion of his army which had escaped being slaughtered and which was spiritless. Then, while passing by a perilous forest-path, he was impetuously attacked by a party of Śabaras superior in strength. Meeting with this formidable obstruction on the way, he effected his escape, the ladies of his harem being safely escorted by his hereditary troops. I and my daughter, who were engaged as nurses to the King's twin sons, were unable to keep pace with him in his rapid flight; while there (in the wood), a certain tiger, as if fury incarnate, and open-mouthed, hastily came up to devour me. I, who was terrified, stumbled over a projecting stone and fell down; the boy, who dropped from my hands, lay hidden beneath the carcass of a brown cow. An arrow let fly from a bow deprived the tiger of his life as he was furiously dragging that carcass. The Śabaras took away—I know not where—the boy (beautiful) with the moving locks of hair; nor do I know where my daughter, who had charge of the other prince, went. I, who lay in a trance, was found by a kind-hearted cowherd who took me to his hut and healed me of my wounds. Thus recovered, I now wish to go to the King again, but I am now perplexed (do not know what to do), on account of my helpless condition and of the ignorance of the whereabouts of my daughter." At this she departed, adding that she would go even alone to her master. I, too, experiencing the sorrow

